कफोदरिणं शुद्धं कटुक्षारान्नभोजितम् ।
मूत्रारिष्टायस्कृतिभिर्योजयेच्च कफापहैः ॥ १२ ॥
सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः ॥ १३ ॥
प्लीहोदरे प्लीहहरं कर्मोदरहरं तथा ॥ १४ ॥
स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम् ।
सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ॥ १५ ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥ १६ ॥
जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च ।

---

फलं ग्राह्यं विरेचकत्वात् एवमारग्वधस्यापि फलम् सातला चर्मकषा । पयसेति नैव सम्बध्यते । सविडङ्गकल्केन पयसैको योगः, उरुबूकप्रसन्नेनाद् द्वितीयः सातलादिरारग्वधान्तस्तृतीयः, जतूकर्णसंवादात् अन्ये तु सविडङ्गकल्केनारुबूक प्रसन्नैको योगः, तथा सविडङ्गकल्केन सातलारग्वधाभ्यां तु द्वितीयो योग इत्याहुः ॥ ११ ॥

कफादित्यादि ।—शुद्धमिति वमनव्यतिरिक्तशोधनेन विशुद्धमित्यर्थः, वमनस्योदरे निषिद्धत्वात् । कटुक्षारान्नभोजितमिति कटुक्षारयुक्तेनान्नेन पेयादिना कृतसंसर्जनमित्यर्थः । अयस्कृतिरयसादि, किंवा अयस्कृतया रसायनोक्तालौहविधिः शार्ङ्गधरोक्ता ज्ञेया ॥ १२ ॥

सन्निपातोदर इत्यादौ सर्वा यथोक्ता इति प्रत्येकं वातोदरादिविहिता सर्वा एव सन्निपातोदरे कार्या ॥ १३ ॥

प्लीहोदर इत्यादौ ।—प्लीहहरं कर्म वक्ष्यमाणं तथोदरहरं कर्मेति प्लीहोदरहरम् । प्लीहोदरचिकित्सा च वाच्या । स्विन्नायेत्यादि ।—निरूहस्य उक्तगत एव सतैललवणत्वे सिद्धे सतैललवणमिति पदं तैललवणपूर्वाधिकदानार्थम् प्रदर्शनार्थम् बद्धच्छिद्रदकोदराणां यद्यप्यास्थापनं निषिद्धं तथापि तदेकसाध्यावस्थायां निरूहदानमिह ज्ञेयम् । परिस्रंसीन्यनुलोमनानि । छिद्रोदरमित्यादि । वाग्भटस्य । "यद्यपि प्रायो भवत्यभावाय छिद्राख्यं चोदरं नृणाम् इत्यनेन बद्धोदरमसाध्यमुक्तं तथापि प्रायशब्देन सर्वासाध्यताव्यभिचारस्य दर्शितत्वात्

जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥ १७ ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशनः ॥
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥ १८ ॥
शिलाजतुना मूत्राणां गुग्गुलोस्त्रैफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ १९ ॥
स्नुक्पयसा परिभावितत्तण्डुलचूर्णैर्निर्मितः पूपः ।
उदरमुदारं हिंस्याद् यागोऽयं सप्तरात्रेण ॥ २० ॥
पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ २१ ॥

र्वाकिल्सितमिद यापनार्थम् 'तथा घ्नन्ति सर्वोदराण्येतच्चूर्णं जातादकान्यपि' इत्य नेन सर्वोदरचिकित्सैव व्याख्या। अन्ये तु सर्वोदरहन्तृत्वकथनं न पारमार्थिकं किन्तु स्तुतिरित्याहुः। अत्र एव दाहादिलिङ्गेन स्वदस्य छिद्रोदरे ऽदकयुक्त ऽत्यर्थं क्लेदकरत्व निषेध। शास्त्रोक्तमिति शल्यशास्त्रोक्तम् ॥ १४—१७ ॥

देवदार्वित्यादौ। पलाश किंशुकस्तस्य फलं ग्राह्य उदरहन्तृत्वात्। स्नुहीपय इत्यादि।—भावनाम् एकविंशतिवारान् यदाह चारपाणि। व्यवहारस्तु सप्तवारभावनया। एतान् पिप्पलीगुडिकास्त्रीयुत्तर पञ्च वा कोष्ठानुरूप प्रत्यहमेकान्तर द्व्यन्तर वा विरेचनार्थं क्षीरेण पिबेत। सहस्रञ्च प्रयुञ्जीतेति उपयुक्तपिप्पली गणनया यावता कालेन सहस्रं पूर्यते इत्यर्थ। एतच्चोत्सर्गवचनम्, तेन सहस्रादर्वागपि विधिर्बोध्य ॥ १८ ॥

शिलाजतुनामित्यादौ।—समासान्तर्गतमपि प्रयोग इति पद चकाराच्छिलाजत्वादिभि सह प्रत्येक सम्बन्धनीयम्। प्रयोगोऽभ्यास। त्रैफलस्य गुग्गुलोरिति त्रिफलागुग्गुलोरित्यर्थ ॥ १९ ॥

स्नुक्पयसेत्यादौ।—पूप पिष्टकम् महाहच्चीरेण त्वं सप्तकृत्व पिप्पली भावयित्वा एकां द्वे तिस्रो वा प्रयुञ्जीत विरेकार्थमिति। उदारमिति प्रवृद्धम्।

पटोलाद्यं चूर्णम्—

पटोलमूलं रजनीं विड़ङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत्॥
षड़ाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वै पिबेत्॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम्।
मण्डं पेयाञ्च पीत्वा च सव्योषं षड़हं पयः॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति॥ २२॥

नारायणचूर्णम्—

यमानी हवुषा धान्यं त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥

---

कल्पदृष्टमिति चरकोक्तरसायनविधिदृष्टम्, तच्च विधिं श्वयथुचिकित्सिते दर्शयिष्याम॥ २०। २१॥

पटोलमूलमित्यादौ।—त्वच इति निरस्थित्रिफलाग्रहणार्थम्। षड़ाद्यान् कार्षिकानिति पटोलमूलादीनां त्रिफलान्तानां षण्णां प्रत्येकं कर्षभागानित्यर्थः। त्रींश्च द्वित्रिचतुर्गुणानिति कम्पिल्लकादयस्त्रयः क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणानित्यर्थः। नीलिनी नीलवृक्षा, तस्याश्चात्र फलं वृद्धवाग्भट-वचनात्। मुष्टिरिति पलम्। विरिक्तो जाङ्गलरसैरित्यादि।—विरेचनदिने जीर्णे भेषजे भक्तोदनमण्डपेयानामन्यतममग्निबलापेक्षया उपयोक्तव्यम्। ततः षड़हं षड़हं यथोक्तपयोवृत्तिना भवितव्यम्। ततः पुनः सप्तमेऽहनि पटोलादिचूर्णं पेयम्, एवं पुन पुनः कार्य्यम्॥ २२॥

यमानीत्यादौ।—उपकुञ्चिका कृष्णजीरकः; कारवी स्वल्पप्रमाणं जीरक-

विड़ङ्गञ्च समांशानि दन्त्या भागत्रयं तथा।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा॥
एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्वदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसि।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥ २३॥
दन्तो वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिबेदेतत् कल्कं जठरनाशनम्॥ २४॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥ २५॥
गवाक्षीशङ्खिनीदन्तीनीलिनीकल्कसंयुतम्।

---

मौषत्कृष्णं, जीरकशब्देन च प्रसिद्धं महज्जीरकम्। अजगन्धा अजमोदा स्वर्णक्षीरी कङ्गुष्ठ.; दन्त्या भागत्रयमाद्यभागापेक्षया एवं त्रिवृद्विशालयोरप्याद्यभागापेक्षया प्रत्येकं द्वैगुण्यम्। सातला चर्मकषा। नारायणसंज्ञानिमित्तमनेनमित्यादि। एतेन नारायणसधर्मत्वान्नारायणसञ्ज्ञेत्युक्तं भवति। गरोविद्रव्यसंयोगज विष कालान्तरफलदायि, कृत्रिमन्तु स्थावरजङ्गमविषसंयोगादुत्कटशक्तिक विषं तत्कालफलदायि। यथार्हमिति वचनादन्यैरपि दोषव्याधिविपरीतद्रव्यैः पानमिति दर्शयति। यथार्हस्निग्धकोष्ठेनेति पाठे यो यस्योचितः स्नेहस्तेन स्निग्धकोष्ठेन पेयमिदम्॥ २३॥

दन्तीत्यादौ।—गवाक्षी गोरक्षकर्कटी। शङ्खिनी श्वेतगुञ्जा। सक्षीरमित्यादौ

सर्वोदरविनाशाय गोमूत्रं पातुमाचरेत् ॥ २६ ॥
अर्कपत्रं सलवणमन्तर्धूमं दहेत् ततः ।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम् ॥ २७ ॥
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः ।
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥ २८ ॥
गृहीत्वा यस्य संज्ञां पाटयित्वेन्द्रवारुणीमूलम् ।
प्रक्षिप्यते सुदूरे शाम्येत् प्लीहोदरं तस्य ॥ २९ ॥
रोहीतकाभयाक्षोद-भावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥ ३० ॥
देवद्रुमं शिग्रु मयूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम् ।
पीत्वाशु हन्यादुदरं प्रवृद्धं क्रिमीन् सशोथानुदरञ्च दूष्यम् ॥३१॥
दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्वाथः ।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च ॥ ३२ ॥

---

माहिषमूत्रपलमेकं द्वयं वा पीत्वा विरेके सति गोक्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति। वाग्भटेऽप्युक्तं "गव्यं मूत्रं माहिषमेव वा पिबन्क्षीरभुक् स्याद्दाकरभीक्षीरवर्त्तनः" इति। गोक्षीरभुगिति गोक्षीरमात्रभोजी। अतएव 'माहिषं मूत्रं पीत्वा तत्क्षीराहार एव नरः" इति निश्चलेन यदुक्तं तदपास्तम्, उक्तवाग्भटवचनविरोधात्। अर्कपत्रं सलवणमिति सैन्धवेन तुल्यं परिणतार्कपत्रं गृह्णन्ति। पीत इत्यादौ।—पिप्पल्यादिद्रव्यचतुष्टयं प्रक्षेप्यम्। रोहितकेत्यादौ।—रोहीतकहरीतक्योश्चूर्णेककर्षेण पलद्वयपरिमितं गोमूत्रमम्बु वा भाव्यमिति केचित्, अन्ये तु रोहीतकहरीतक्यौ क्षोदैः खण्डखण्डरूपैः शिलाया किञ्चिदवक्षुण्णैः सप्ताहं भावितं मूत्रमम्बु वेत्याहुः वाग्भटप्रामाण्यात्; यथा, "रोहीतकलता कृता: खण्डशः साभयाजलं। मूत्रे वा सुनुयात्तच्च सप्तरात्रस्थितं पिबेत्" इति। सुनुयादिति भावयेत् ॥ २४—३० ॥

इदानीमुदर एवोपद्रवभूतप्रभूतशोथसम्बन्धे सति चिकित्साविशेषमाह, देवद्रुममित्यादि। मयूरकमपामार्गमूलम्। मूत्रमत्र योगद्वयेऽपि, मूत्रं च पेषणं पानञ्चेत्याहुः

हरीतकीनागरदेवदारु पुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतस्तु पेयः शोथोदराणां प्रवरः प्रयोगः॥ ३३॥
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च॥ ३४॥
पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्वभयाकषायः।
सर्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति॥ ३५॥
पुनर्नवां दार्व्वभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम्।
त्वग्दोषशोथोदरपाण्डुरोगस्थौल्यप्रसेकोर्द्ध्वकफामयेषु॥ ३६॥
गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम्।
क्षीरान्नभुक् केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु॥ ३७॥

पुनर्नवा दार्व्वमृता पाठा विल्वं श्वदंष्ट्रिका।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम्॥
समभागानि चूर्णानि गवां मूत्रेण वा पिबेत्।
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम्॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि॥ ३८॥

---

इन्दटीपनिकायान्तु देवद्रुमादिरश्वगन्धान्त एको योगः, अथशब्दोऽपि पूर्वयोगापचयार्थ इत्युक्तम्; व्यवहारस्तु योगद्वयेनेति। दशमूलेत्यादौ।—क्वाथ इत्यत्र युत इति पाठे क्वाथ इति शेषः। हरीतकीत्यादौ।—प्रतिदिनोपर्यामे गुग्गुलोर्माषकचतुष्टयं गोमूत्रस्यार्द्धपलं कर्षो वा प्रक्षेप्यः; विरेचने तु कर्त्तव्ये प्रचुरत्वमनयो. अत्यन्तबद्धकोष्ठे तु गोमूत्रेणैव क्वाथं कृत्वा गुग्गुलुमात्रं प्रक्षिप्य वृद्धा व्यवहरन्ति॥ ३१—३३॥

एरण्डतैलमित्यादि।—एरण्डतैलप्रक्षेपाद्दशमूलक्वाथ इत्येको योगः; गोमूत्रप्रक्षेपात् त्रिफलाक्वाथ इति द्वितीयः; अत्यन्तबद्धकोष्ठे तु गोमूत्रेणैव त्रिफलाक्वाथः कार्य्य इति वदन्ति। एवं गोमूत्रप्रक्षेपाद्गोमूत्रेण वा दशमूलक्वाथोऽपीत्याहुः॥ ३४॥

पुनर्नवामित्यादि।—पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयम्; तथा-तन्त्रान्तरम्—गोमूत्रेणाथवा दारुवर्षाभूचेतकीरजः। पिबेद्गुग्गुलुसंयुक्तं शोथी

पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसन्तु तत्॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः॥ ३९॥

दशमूलषट्पलकं घृतम्—

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकालैः पलिकैः।
सिद्धं घृतार्द्धपात्रं द्विर्मस्तुकमुदरगुल्मघ्नम्॥ ४०॥

चित्रकघृतम्—

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत्॥ ४१॥

---

दरविनाशनम्" इति। अत्र चेतकी हरीतकी। गुग्गुलुश्च मिलितचूर्णसम इत्याहुः। अन्ये तु पुनर्नवादीनां क्वाथं गोमूत्रं गुग्गुलुञ्च प्रक्षिप्य व्यवहरन्ति। क्षार गवां वा त्रिफलाविमिश्रमिति त्रिफलायाः क्वाथः कल्को वा। क्षीराम्भुगिति क्षीरमात्रं गाम्भभुक्। पुनर्नवेत्यादौ।—विल्वस्य मूलम्। शोथोदराण्यष्टाविति सशोथान्यष्टावुदराणीत्यर्थः। पुराणमित्यादि।—पुराणमाणकस्य मूलं पलमात्रं दलितततण्डुलस्य पलद्वयं क्षीरतोयाभ्यां समाभ्यां साधयित्वा पायसः कार्य्यः। अस्योपयोगेऽपरमन्नव्यञ्जनं नाश्नीयादित्याहुः। योगोऽयं शोथमात्रेऽपि प्रभवति॥ ३५—३९॥

दशमूलषट्पलके दशमूलस्य तुलार्द्धं पञ्चाशत्पलानि, तस्य क्वाथ इत्यर्थः। घृतस्यार्द्धपात्रमर्द्धाढक प्रस्थद्वयमित्यर्थः। द्विर्मस्तुकमिति घृतमपेक्ष्य द्विगुणं मस्तु-यत्र। चरकोक्तदशमूलषट्पलकेऽपि द्वि.शब्दः प्रस्थेन तथार्द्धपलिकैरित्यनेन च योज्यः। तेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपलैः षट्पलानि भवन्ति तथा प्रस्थेन च द्वि शब्दसम्बन्धात् प्रस्थद्वयं भवतीति एकवाक्यता बोध्या। ननु क्रियाभ्यासावेव सुच्प्रत्ययो दृश्यते न तु अभ्यावृत्तिमात्रे एव; द्विरष्टसंवत्सरवारसुन्दरीत्यादौ क्रियाभ्यावृत्तिं विनापि सुच्प्रत्ययस्य दर्शनात्॥ ४०॥

चतुर्गुणे च इत्यादि।—अत्र सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलमेकं

विन्दुघृतम्—

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट्।
पथ्या कम्पिल्लकं श्यामा सम्याकं गिरिकर्णिका॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकस्तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत्॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत्।
यावतोऽस्य पिबेद्विन्दूंस्तावद्वारान् विरिच्यते॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥
एतद्विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते॥ ४२॥

दधिमण्डाद्यं घृतम्—

दधिमण्डाढके सिद्धात् स्नुक्क्षीरपरिकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये॥
तथासिद्धं घृतप्रस्थं पयस्यष्टगुणे पचेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च॥ ४३॥

नाराचघृतम्—

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम्।

---

देयम्, अत्रार्थे तन्त्रान्तरं यथा, "अग्निक्षारपलाभ्यां द्विमूत्र चतुर्जलञ्च घृतप्रस्थम्" इति॥ ४१॥

अर्कक्षीरेत्यादि।—श्यामा श्याममूला त्रिवृत्। गिरिकर्णिका श्वेतापराजिता नीलिनी नीलवुह्ना; शङ्खिनी श्वेतवुह्ना। अत्र पाकार्थं जलं चतुर्गुणं देयम् अतएव क्वचित् वृन्दसंग्रहे दृश्यते "स्नुह्यर्कयोस्तु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं विन्दुसर्पिषि" इति। मात्रा तु अस्य कोष्ठानुरूपा, माषकमेकं द्वयं वा प्रचरति। मलिन इति मलबद्धे॥ ४२॥

दधिमण्डेत्यादि।—तद्वदिति पूर्वोक्तप्रकारेणोत्थितादघृतात्। चरके हि "क्षीर

घृतं विपक्वं कुड़वप्रमाणम्
तोयेन तस्याक्षमथार्द्धकर्षम् ॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते
पेयां सुखोष्णां वितरेद्विधिज्ञः।
नाराचमेतज्जठरामयाणाम्
युक्तोपयुक्तं शमनं प्रदिष्टम् ॥ ४४ ॥
इत्युदर-चिकित्सा ॥

---

## अथ प्लीह-यकृच्चिकित्सा।

यमानिकाचित्रकयावशूक-षड्ग्रन्थिदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥ १ ॥
पिप्पलीं किंशुकक्षारभावितां सम्प्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम् ॥ २ ॥
विड़ङ्गाज्याग्निसिन्धूत्थशक्तून् दग्ध्वा वचान्वितान्।
पिबेत् क्षीरेण सञ्चूर्ण्य गुल्मप्लीहोदरापहान् ॥ ३ ॥

---

ऽण सुधाक्षीरप्रस्थाऽसहित दधि' इत्यादि। पूर्वयोगे चार्द्रोणे सुधाक्षीरप्रस्था" प्रक्षिप्य दधि करणीय, ततस्तद्दधि मथित्वा घृत सम्पादनीयमिति प्रकार उक्त इति। तथा सिद्धमित्यादि।—अत्रापि पूर्वोक्तप्रकारनिष्पादितदधिमन्थनसिद्ध घृतमिति तच्छब्दार्थ। एतयोर्घृतयोरनुपान तथा विरेकान्तरीयो विधिश्च चरकोक्त एवानुसरणीय इति। स्नुक्क्षीरेत्यादौ।—स्नुही कण्टकारी, युक्तोपयुक्तमिति कोष्ठाद्यग्निबलापेक्षया इत्यर्थ ॥ ४३ ॥ ४४ ॥

इत्युदराधिकारचिकित्साविवृति।

---

प्लीहवृद्ध्या उदरस्य सम्भवादनन्तर प्लीहचिकित्सामाह यमानिकेत्यादि।—षड ग्रन्थि पिप्पलीमूल, उक्त हि रत्नकोषे—"ग्रन्थिक पिप्पलीमूल षड्ग्रन्थि चटिका

तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः।
रोहीतकाभयाक्वाथः कणाक्षारसमन्वितः॥ ४॥
क्षारं वा बिड़कणाभ्यां पूतिकस्याम्लनिस्रुतम्।
प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम्॥ ५॥
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः।
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये॥ ६॥
भल्लातकाभयाजाजीगुड़ेन सह मोदकः।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम्॥ ७॥
शोभाञ्जनकनिर्य्यूहं सैन्धवाग्निकणान्वितम्॥ ८॥

---

शिर" इति। पिप्पलीमित्यादि।—किंशुकः पलाशस्तत्क्षारोदके सप्तधा भावितं पिप्पलीं पिप्पलीवर्द्धमानक्रमेण प्रयोजयेत् दुग्धपानमप्यत्रोपदिशन्ति वृद्धाः। विडङ्गेत्यादि।—विडङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दाहयेत्। तत भस्म गव्यक्षीरेण सह पिबेत्। अन्ये तु कपाले कृत्वा एवमेव दहेत् न पुनरन्तर्धूममित्याहुः। व्यवहारः पूर्ववेव॥ १—३॥

तालपुष्पेत्यादावप्यन्तर्धूमक्षारः।—सगुड इति समगुडः। क्षारस्य च माषकचतुष्टयेन व्यवहारः। क्षारं वेत्यादि।—पूतिकस्य लाटाकरञ्जमूलस्य क्षारम् अम्लनिस्रुतमिति अम्ले काञ्जिके निस्रुतं सप्तधा परिस्रुतं पूतिकरञ्जक्षारं विड्लवणपिप्पलीचूर्णप्रक्षेपेण पिबेत्। वाग्भटेऽप्युक्तम् "अम्लस्रुतं विड्कणाचूर्णाढ्यं नक्तमालजम्" इति। वाग्भटटीकायामपि अम्लैः काञ्जिकादिभिः परिस्रुतमिति व्याख्यातम्। सुश्रुतेऽपि "अम्लस्रुतं पूतीकरञ्जक्षारं विड्लवणपिप्पलीप्रगाढं पाययेत्" इत्युक्तम्। तेन अम्बुनि जले निस्रुतमित्यसदर्थ एव। वाशब्दः पूर्वयोगापेक्षया। उदधिशुक्तिर्मुक्तास्फोटः। युक्तित इति वयोबलाद्यपेक्षया। पयसा वेत्यादि श्लोकार्द्धं वृन्दे पठ्यते, तद्दर्शनाच्चक्रसंग्रहेऽपि केचित् पठन्ति, किन्तु वृन्दे पिप्पलीवर्द्धमानं न पठ्यते, तेन तत्र तत्पाठो युज्यत एव इह तु अग्रे पिप्पलीवर्द्धमानं वक्तव्यमेवेति पयसा वेत्यादि श्लोकार्द्धमत्र न पठनीयमेव। अतएव निबन्धकारेणापि नोपन्यस्तमिति॥ ४—६॥

भल्लातकेत्यादि।—स्पष्टम्। शोभाञ्जनेत्यादौ। निर्यूहः क्वाथः, अग्निश्चित्रकः।

पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥ ९ ॥
तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ॥ १० ॥
प्लीहोद्दिष्टां क्रियां सर्वां यकृतः सम्प्रयोजयेत् ॥ ११ ॥
लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत्।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १२ ॥
प्लीहजिच्छरपुङ्खायाः कल्कस्तक्रेण सेवितः।
शरपुङ्खैव सक्षव्यं जग्धा पेयाभुजाथवा ॥ १३ ॥
शार्ङ्गष्ठानिर्य्यूहः ससैन्धवस्तिन्तिड़ीकसम्मिश्रः।
प्लीहव्युपरमो योगः पक्वाम्ररसोऽथवा समधुः ॥ १४ ॥
रोहीतकाभयाक्षोदभावितं मूत्रमम्बु वा।
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥ १५ ॥
दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक्।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे।
प्लीहान मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥ १६ ॥

माणाद्यगुड़िका—

माणमार्गीमृतावासास्थिराचित्रकसैन्धवम्।

---

पलाशक्षारयुक्तं वेति पलाशक्षारोदकयुक्तम् ; उक्तं हि सुश्रुते "प्रस्रुतेन वा पलाशक्षारेण यवक्षारम्" इति। तिलान् सलवणानिति कृष्णतिला एव ससैन्धवा भक्ष्याः, अन्ये तु तिलनालक्षारोदकं सलवणं पेयमित्याहुः। व्यवहारस्तु पूर्वेणैव। घृतं षट्पलकमिति ज्वरोक्तम् ॥ ७—११ ॥

लशुनमित्यादौ।—गोमूत्रगण्डूषैश्चानुपानम्। शरपुङ्खाया इति शरपुङ्खामूलस्य, शार्ङ्गष्ठा काकजङ्घा गुञ्जा वा अनयोर्मूलम्। तिन्तिड़ीकं महार्द्रकम्। पक्वाम्ररसः समधुर्वातोल्वणे। रोहितकेत्यादौ क्षोदश्चूर्णम्, गोमूत्रं विरेकार्थम्, अम्बु तु शमनार्थमिति व्यवस्था ॥ १२—१५ ॥

दध्नेत्यादौ।—दधिभोजनं शोणितोत्क्लेशनार्थम्। वामबाहुमध्य इति कूर्परसन्धेरधस्तात्। स्वेहस्वेदावग्रतः कार्य्यौ सुश्रुतसंवादात्। प्लीहानं मर्दयेदिति शिरायां विद्धायां तेन प्लीह्नो दुष्टरक्तं निःसरति ॥ १६ ॥

नागरं तालपण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम् ॥
विड़सौवर्चलक्षार-पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ॥
सान्द्रीभूते गुड़ीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः ॥
योगः परिकरो नाम्ना अग्निसन्दीपनः परः ॥ १७ ॥
पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
चूर्णं पीतं विड़ार्द्धांशं प्लीहघ्नमुष्णवारिणा ॥ १८ ॥

पिप्पलीवर्द्धमानानि—

क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥
जीर्णेऽजीर्णे च भुञ्जीत यष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥
दशपिप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥
वृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः ॥
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्देहदोषामयान् प्रति ॥ १९ ॥

---

मार्गेत्यादौ ।—मार्गोऽपामार्गः, स्थिरा शालपर्णी, प्रत्यग्रमित्यभिनवम् । त्रिकार्षिकमिति प्रत्येकम् । परिकरो नाम्नेति परिकरो विरेकस्तत्कारकत्वात् परिकरो योगः ; उक्तं हि "भवेत परिकरः सङ्गे समारम्भविरेकयोः" इति ॥ १७ ॥

पिप्पलीत्यादौ ।—द्विगुणाभया इत्येकभागापेक्षया द्वैगुण्यम् । एवं विड़लवणस्याप्येकभागापेक्षयार्द्धभागत्वं ज्ञेयम् । दशभिः पिप्पलीवर्द्धमानमाह क्रम

पिप्पलीचित्रकघृतम्—

पिप्पलीं चित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत्।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम्॥ २०॥

लोकनाथरसः—

शुद्धसूतं द्विधा गन्धं खल्वे कुर्य्याच्च कज्जलीम्।
सूततुल्यं जारिताभ्रं सम्मर्द्य कन्यकाम्बुना॥
गोलं कुर्य्यात् ततो लौहं ताम्रञ्च द्विगुणीकृतम्।
काकमाचीरसैः पिष्ट्वा गोलं ताभ्याञ्च वेष्टयेत्॥
वराटिकाया भस्माथ रसतस्त्रिगुणं क्षिपेत्।
ततश्च सम्पुटं कृत्वा मूषामध्ये प्रकल्पयेत्॥
तन्मध्ये गोलकं कृत्वा शरावेण पिधापयेत्।
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्॥
शिवं सम्पूज्य यत्नेन द्विजांश्च परितोषयेत्।
खादेद्रक्तिद्वयं चूर्णं मूत्रञ्चापि पिबेदनु॥

---

ादि।—दश पिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपिप्पलिकम्, तेन दश पिप्पल्यः प्रत्यह वर्द्धनीया इत्यर्थः। उक्तं हि "दशभिर्दशभिः शश्वत् पिप्पलीभिस्तु वर्द्धयेत" इति। वर्द्धनेर्विंशतिदिनैर्वृद्धिहानिक्रमेण एतेनैव सहस्रं पूर्णं भवति। पयसा सा मित्यनेन पयसोऽपि वृद्धिरित्याहुः। केचित्तु चूर्णीकृता इत्यत्र शीतीकृता इति पठित्वा शीतकषायीकृता इति व्याख्यानयन्ति। पिप्पलीवर्द्धमानस्य त्रैविध्यमाह दश पिप्पलिकः इत्यादि। षट्प्रकीर्त्तित इति षड्वृद्ध्या आचार्य्यैरुक्त इत्यर्थः। त्रिपिप्पली पर्य्यन्त इति तिस्रः पिप्पल्यः पर्य्यन्ते यस्य स तथा तेन पिप्पलीत्रयेण यत्र वृद्धिः स प्रयोग उच्यते तत्रैव प्रयोगसमाप्तौ पिप्पलीत्रयावस्थानम्। पञ्चभिः पञ्चभिः पिप्पलीभिर्वृद्धिस्तु व्यवह्रियते इति प्रतिपादयितुं चक्रः स्ववचनमुपन्यस्यति पञ्चपिप्पलिक इत्यादि। विदेहेऽप्युक्तम्—"दशभिर्दशभिः शश्वत् पिप्पलीभिस्तु वर्द्धयेत्" पञ्चभिः पञ्चभिर्वापि शतादवतरेत् पुनः" इति॥ १८। १९॥

पिप्पलीत्यादि।—अत्र पिप्पली च चित्रकश्चेति समासो न कार्य्यः, तथा सति

मधुना पिप्पलीचूर्णं सगुड़ाम्बु,हरीतकीम्।
अजाजीं वा गुड़ेनैव भक्षयेदस्य मानतः॥
यकृद्गुल्मोदरप्लीहक्षयथुज्वरनाशनम्।
वह्निमान्द्यप्रशमनं सर्वान् व्याधीन् नियच्छति॥ २१॥

पिप्पलीघृतम्—

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पचेत् प्लीहाग्निसादादि-यकृद्रोगहरं परम्॥ २२॥

चित्रकघृतम्—

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम्॥
पञ्चकोलकतालीशक्षारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत्॥
प्लीहगुल्मोदराध्मान-पाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरु-शूलोदावर्त्तपीनसान्॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम्।
बलवर्णकरश्चापि भस्मकञ्च नियच्छति॥ २३॥

रोहीतकघृतम्—

रोहीतकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत्॥
पलिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत्॥

---

पिप्पलीमूलस्यैव ग्रहणं स्यात्, तच्च न व्यवहारसिद्धम्। पिप्पलीघृतं स्पष्टम्॥२०।२१॥

चित्रकघृत तुलाक्वाथ इति षष्ठीतत्पुरुषः। आरनाल तद्द्विगुणमिति घृतापेक्षय एवं दधिमण्डस्यापि चतुर्गुणम् दधिमण्डो दधिमस्तु, क्षारौ यवक्षार, लवण सैन्धवम्, अन्ये तु यवक्षारः सर्जिक्षारः, लवणं पञ्चलवणमाहुः॥ २२। २३॥

रोहीतक यादि।—वाग्भटस्य। श्रेष्ठा इत्यत्र क्वाथे ति वाग्भटे पठ्यते। रोहि

प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम्।
तथा गुल्मज्वरश्वास-क्रिमिपाण्डुत्वकामलाः॥ २४॥

महारोहीतकघृतम्—

रोहीतकात् पलशतं चोटयेद्बदराढ़कम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते॥
तस्मिन् दद्यादिमान् कल्कान् सर्वांस्तानक्षसम्मितान्॥
व्योषं फलत्रिकं हिङ्गु यमानीं तुम्बुरुं विडम्।
अजाजीं कृष्णलवणं दाडिमं देवदारु च॥
पुनर्नवां विशालाञ्च यवक्षारं सपौष्करम्।
विडङ्गं चित्रकञ्चैव हवुषां चविकां वचाम्॥
एतैर्घृतं विपक्वन्तु स्थापयेद्भाजने शुभे।
पाययेत् त्रिपलां मात्रां व्याधिं बलमवेक्ष्य च॥
रसकेनाथ यूषेण पयसा वापि भोजयेत्।
उपयुक्ते घृते तस्मिन् व्याधीन् हन्यादिमान् बहून्॥
यकृत्प्लीहोदरञ्चैव (हृच्छूलं) पार्श्वशूलमरोचकम्।
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम्॥

---

तको रोहड इति ख्यातस्तरुस्तस्य पञ्चविंशतिपलं कोलप्रस्थद्वयेन मिलित्वा सप्तपञ्चाशत्पलानि क्वाथ्यानि स्युः तेष्वष्टगुणं जलमुत्सर्गसिद्धं देयम्। पादशेषश्च कषायो ऽष्टपलाधिकचतुर्दशशरावा। वैद्यप्रसारके तु षोडशगुणं जलमुक्तम्; अन्ये तु जलद्रोणं दत्त्वा शेषमाढकं कषायमित्याहुः। ते सर्वेऽपि तुल्यार्थाः। पञ्चकोलैः-सम्मिता पञ्चपलमानया इत्यर्थः। रोहीतकत्वचा पिष्टयेति योज्यम्॥ २४॥

महारोहीतकघृते बदरचूर्णस्य आढकं चतुःषष्टिपलानि, अत एकेनैव जलद्रोणेन बदरचूर्णाढकसहितस्य रोहीतकपलशतस्य क्वाथः करणीयः, तथैव निर्दिष्टत्वात्। तन्त्रान्तरेऽपि—"रोहीतकशतं क्षुण्णं कोलचूर्णाढकान्वितम्। निःक्वाथ्य सालद्रोणे चतुर्भागस्थिते रसे" इति। अन्ये तु जलस्याल्पत्वमाशङ्क्य द्रोणपदमावृत्त्या रोहीतकपलशतमित्यनेन तथा बदराढकमित्यनेन च प्रत्येकं योज्यम्।

सर्व्वातीसारशमनं तन्द्राज्वरविनाशनम्।
महारोहीतकं नाम्ना प्लीहघ्नन्तु विशेषतः॥ २५॥
इति प्लीह-यकृच्चिकित्सा॥

---

## अथ शोथचिकित्सा।

शुण्ठीपुनर्नवैरण्ड-पञ्चमूलशृतं जलम्।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे।
दशमूलं सर्व्वथा च वातशोथे विशेषतः॥ १॥
क्षीराशनः पित्तकृतेऽथ शोथे त्रिवृद्गुडूचीत्रिफलाकषायम्।
पिबेद्गवां मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाक्षमात्रम्॥ २॥
पृश्निपर्णीघनोदीच्य-शुण्ठीसिद्धन्तु पैत्तिके॥ ३॥
अभया दारु मधुकं तिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं दार्वी त्रायमाणेन्द्रवारुणी॥
एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहा।
विसर्पतृष्णासन्ताप-सन्निपातविषापहा॥ ४॥
शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत्॥ ५॥

---

एतेनैकेन जलद्रोणेन रोहीतकपलशतस्य क्वाथः, अपरेण बदराढकस्येत्याह। व्यवहारोऽप्यनेनैव। कृष्णलवणं सौवर्च्चलमत्र आयुर्वेदसारे हृषककपाठात्॥ २५॥

इति प्लीहायकृच्चिकित्सा-विवृतिः।

---

उक्तं धर्म्माधर्म्यादनन्तरं शोथचिकित्सामाह। शुण्ठीत्यादौ।—पञ्चमूलं महत् तद्व्यवहारात्। पानाहारपरिग्रह इति अन्नपानसंस्कारे। सर्व्वथेति कल्कक्वाथादि विधया। क्षीरेत्यादि योगद्वयम्। गवामित्यादि द्वितीयो योगः। अभयेत्यादौ।—सर्पिः प्रक्षेप्यम्। शीतवीर्य्यैरिति शीतवीर्य्याः काकोल्यादिशारिवोत्पलादिगण तत्कृतैः स्नेहादिभिरभ्यङ्गादीन् कल्पयेत्। हिमजलैरिति शीतलजलैः॥ १—५॥

नर्नवाविश्वावृहद्गुडूचीसम्पाकपथ्यामरदारुकल्कम् ।
ोषे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैषाम् ॥६॥
र्फे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः ।
लत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥ ७ ॥
जाजिपाठाघनपञ्चकोल-व्याघ्रीरजन्यः सुखतोयपीताः ।
ोषं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च ॥ ८ ॥
नर्नवानिम्बपटोलशुण्ठी-तिक्तामृतादार्व्यभयाकषायः ।
र्वाङ्गशोथोदरकासशूलं श्वासान्वितं पाण्डुगदं निहन्ति ॥ ९ ॥

---

श्लैष्मिकशोथचिकित्सामाह पुनर्नवेत्यादि । पुनर्नवादीनां कल्कं गुग्गुलुयुक्तं मूत्रेण पिबेत् । पिबेद्वा सलिलं तथैषामिति । एषां पुनर्नवादीनां क्वाथं वा गुलगोमूत्रे प्रक्षिप्य पिबेत् । महिषाक्षो गुग्गुलुः । कफे त्वित्यादौ सिकता लुका, पुराणपिण्याकः पुराणसर्षपखलिः, उमा अतसी ; एभिर्मूत्रपिष्टैर्लेपः । तथ वाग्भटे "कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः । प्रलेपोन्मर्दने युञ्ज्यात् शोथा मूत्रकल्किताः" । कुलत्थशुण्ठीक्वाथेन तथा गोमूत्रेण च कुलत्थशुण्ठीसिद्धेन क कार्यः । उक्तं हि वाग्भटे "स्नानं मूत्राम्भसि सिद्धे कुष्ठतर्कारिचित्रकैः । त्वनागराभ्यां वा" इति चण्डा चोरपुष्पी । अनुलेपनं स्नानानन्तरमेव लेपन-ति चक्रः । अजाजीत्यादि ।—वाग्भटस्य । तेषां चूर्णमुष्णोदकेन पेयम् । भूनिम्बमहौषधयोरपि । यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पते, तथापि तत्र चविकैव ग्राह्या, गजपिप्पलीशब्देन चविकाया अप्यभिधानात् ; त निघण्टौ—"चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति । जतूकर्णा-पि चविकैव पठ्यते, तस्मात् सैव युक्ता । एतेन "पिप्पल्यादिगणे नाम्ना पठ्यते त्वयम् । योगेऽत्र चविकास्थाने ग्राह्या मातङ्गपिप्पली" इति वृन्दोक्त-मपास्तम् । ननु चरके त्रिदोषजशोथस्यासाध्यत्वोक्तत्वात् कथं त्रिदोषं शोथं शयुक्तम् । नैवम् । चरके यद्दीनमांसस्येत्यादिना यन्नैकदोषस्य तथा नवस्य सुखसाध्यत्वाभिधानेन द्विदोषजत्रिदोषजयोस्तथा चिरजस्य च कृच्छ्रसाध्यत्वमेवोक्तं पुनरसाध्यत्वमिति ॥ ६—८ ॥

पुनर्नवेत्यादि ।—तिक्ता कटुकी, दारु देवदारु, वृन्दे त्वयं योगः शोथोदरे

आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः ।
अजाक्षीराशिनो शीघ्रं सर्वशोथहरो भवेत् ॥ १० ॥
पुनर्नवादारुशुण्ठीक्काथे मूत्रे च केवले ।
दशमूलरसे वापि गुग्गुलुः शोथनाशनः ॥ ११ ॥
बिल्वपत्ररसं पूतं सोषणं श्वयथौ त्रिजे ।
विट्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि ॥ १२ ॥
गुड़पिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ १३ ॥
पुरो मूत्रेण सेव्येत पिप्पली वा पयोऽन्विता ।
गुडेन वाभया तुल्या विश्वं वा शोथरोगिणाम् ॥ १४ ॥
गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयां वा गुड़पिप्पलीं वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥१५॥
शोथप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शोग्रहणीविकारान् हन्यात् तथान्यान् कफवातरोगान्

---

पठ्यते । सोषणमिति समरिचम् । गुड़ेत्यादि ।—गुड एकभागसम । अ गुग्गुलु । पिप्पली वा पयोऽन्वितेति पिप्पलीवर्द्धमानन्यायेन दुतरकल्कवद्या पिप लीकल्क पयसा सेव्य । विश्व वेति गुड़ेन तुल्यमित्यत्रापि योज्यम ॥ ९—१४

गुडार्द्रक वेत्यादि । गुडार्द्रकादयश्चत्वारो योगा एते तुल्यभागाः सन्त प्रति दिन मिलित्वा कर्षेण कर्षेण वर्द्धयितव्याः । एवं द्वादशभिर्दिनैस्त्रिपल पृथक् ततस्त्रिपल कृत्वा प्रत्यह पक्ष मास वा यावत् खादेत् । किंवा प्रथमदिने कर्षमेक खादेत, तत. कतिचिद्दिनानि कर्षस्यैवाभ्यास, तत परमपरकर्षं वर्द्धयेत्, तस्याप पुनरभ्यास. । एव कर्षेण कर्षेणाभिवृद्ध्या यथा पक्षेण मासेन वा त्रिपल भवति तथा कार्य्यम् । अन्ये तु ब्रुवते पक्षपरोऽप्यथापिशब्दो मासमित्यन्तरं ज्ञेय, स च समुच्चयार्थं, तेन पक्ष मासञ्च व्याप्य सार्द्धमासं व्याप्येत्यर्थ. । सार्द्धमासेन च त्रिपल कर्षोपयोगात प्रभृति प्रत्यह माषचतुष्टयाधिकविधिना भवति । पर्याप्तम् व्याख्या कर्षादारभ्य माषकचतुष्टयमेव वृद्धिर्नाधिका । व्यवहारोऽप्येवमेव ॥ ९—१५ ॥

स्थलपद्ममयं कल्कं पयसालोड्य पाययेत् ।
शोहामयहरश्चैव सर्वाङ्गैकाङ्गशोथजित् ॥ १६ ॥
दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित् ॥ १७ ॥
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥ १८ ॥
सिंहास्यामृतभण्डाकीक्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ १९ ॥
भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ।
अपहरति नियतमाशु शोथं सर्वाङ्गगं नृणाम् ॥ २० ॥
शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाम्भसा ।
क्षीरं शोथहरं दारु-वर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योष-त्रिवृद्दारुप्रसाधितम् ॥ २१ ॥
पुनर्नवामूलकपित्थदारुच्छिन्नोद्भवाचित्रकमूलसिद्धाः ।
रसा यवाग्वश्च पयांसि यूषाः शोथे प्रदेया दशमूलगर्भाः ॥ २२ ॥

---

स्थलपद्ममयं कल्कमिति । स्थलपद्मं मानकन्दः, स च पुराणो ग्राह्यः । कल्क मिति चूर्णम् । दार्वित्यादौ वर्षाभ्वित्यादौ च योगे गोमूत्रेणैव पानं ज्ञेयम् । सिंहास्यं वासकमूलम् । भण्टाकी कण्टकारी । भूनिम्बेत्यादौ ।—पेयः पुनर्नवा-क्वाथ इत्यनुपानमिदम् । एतच्च पुनर्नवामूलकर्षं निःक्वाथ्य कार्य्यम् । अतोऽधिक-मात्रया तु करणे भूरिभेषजत्वे नाग्निवधादिर्दोषः स्यादिति । एवं सर्वत्र क्वाथेनान्‌ पानं ज्ञेयम् । शोथनुदित्यादि ।—अम्भसेत्यन्त एको योगः, मूत्रेण कफे अम्भसेति पित्ते । शृतमित्यन्तो द्वितीयः । चित्रकेत्यादिस्तृतीयः । अत्रापि क्षीरमिति योज्यम् ॥१६॥२१॥

पुनर्नवेत्यादौ ।—कपित्थस्य फलम् । पुनर्नवादीनामष्टांशत कृत्वा दशमूलस्यानु-रूपकल्कं दत्वा रसादयः साध्या इत्यर्थः । क्षारेत्यादि ।—क्षारद्वयं यवक्षारसर्जि-काक्षारौ । लवणानि चत्वारीति सामुद्रवर्जितानि । अयोरजो लौहचूर्णं मारित-पुटितं ग्राह्यम् । पलांशमिति प्रत्येकम् । अशुष्कचूर्णमिति शुष्कस्यास्य चूर्ण-मित्यर्थः । वस्त्रस्त्रिग्धेनेति क्षारसलिलेन, क्षारद्रव्यादिचूर्णापेक्षया चतुर्गुणेन अन्य

क्षारादिगुड़िका—

क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजोव्योषफलत्रिके च।
सपिप्पलीमूलविड़ङ्गसारं मुस्ताजमोदामरदारुविल्वम्॥
कलिङ्गकश्चित्रकमूल-पाठे यष्ट्याह्वयं सातिविषं पलांशम्।
सहिङ्गुकर्षं तनुशुष्कचूर्णं द्रोणं तथा मूलकशुण्ठकानाम्॥
स्यात्तद्भस्मनस्तत्सलिलेन साध्यमालोड्य यावद्घनमप्यदग्धम्।
स्यात्तं ततः कोलसमाश्च मात्राम्
कृत्वा सुशुष्कां विधिना प्रयुञ्ज्यात्।
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोथशोषान्।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासान् प्रणुदेत् सकुष्ठान्॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च॥
चतुर्लवणमत्र स्याज्जलमष्टगुणं भवेत्॥ २३॥

पुनर्नवाद्यं घृतम्

पुनर्नवाचित्रकदेवदारु पञ्चोषणक्षारहरीतकीनाम्।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिसूदनञ्च॥ २४॥

स्वल्पपुनर्नवाघृतम्—

पुनर्नवाक्वाथकल्कसिद्धं शोथहरं घृतम्॥ २५॥

पञ्चकोलाद्यं घृतम्—

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः।

---

त्वष्टगुणमाह। अत्र मूलकभस्मद्रोणं षड्द्रोणं वा जलं दत्त्वा त्रिभागावशिष्टमर्द्ध भागावशिष्टं वा काथ्यम्, ततः परिस्राव्यम्, तत्र क्षारद्वयादिचूर्णापेक्षया चतुर्गुणं क्षारजलं गृहीत्वा पक्तव्यम्। पाकाच्च घनीभावे जाते क्षारद्वयादिचूर्णप्रक्षेप इत्याह॥ २२। २३॥

पुनर्नवेत्यादौ।—पञ्चोषणं पञ्चकोलम्। रसे इत्यादि।—रसः क्वाथ इत्यर्थः।

पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥ २६ ॥

शुण्ठीघृतम्—

विश्वौषधस्य कल्केन दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम् ॥ २७ ॥

चित्रकाद्यं घृतम्—

सचित्रका धान्ययमानिपाठाः सदीप्यकात्र्यूषणवेतसाम्लाः।
विल्वात् फलं दाड़िमयावशूकं सपिप्पलीमूलमथापि चव्यम् २८
पिष्टाक्षमात्राणि जलाढ़केन पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात्।
अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं निहन्ति वह्निञ्च करोति दीप्तम्॥

चित्रकघृतम्—

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलकल्कं तक्रेण सिद्धं श्वयथुप्रशमनम् ॥२९॥
अर्शोऽतिसारानिलगुल्ममेहांस्तद्धन्ति संवर्द्धयते च वह्निम्।

माणकघृतम्—

माणककाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥ ३० ॥

---

पञ्चकोलकल्कयोरिति द्विवचननिर्देशात् पञ्चकोलस्य मिलित्वा एको भाग., अपरश्च कल्कानामिति वदन्ति। पाण्डुतामयमिति पाण्डुरोगम ॥ २४—२७ ॥

सचित्रकेत्यादौ।—दीप्यक जीरकमिति निश्चलः, तन्न, "यवानक उग्रगन्ध यमानी प... कम्" इति वाग्भटवचनविरोधात। तस्माद्दीप्यकमजमोदा। वेतसाम्लोऽम्लवेतस.। विल्वात् फलमित्यत्र विल्वात् पलमिति न पाठ, वाग्भटे "बालविल्वञ्च कर्षांशम्" इत्युक्तत्वात् ॥ २८ ॥

क्षीरमित्यादौ।—दध्यागतमिति दधिभावेन परिणतम्। तेनेति यथोक्तदधि-मथनजातेन तक्रेणेत्यर्थः। तज्जं घृतमिति यथोक्तदधिभव घृतमिति। माणक घृते माणकक्काथार्थमष्टगुणं जलं देयं न तु मृदुत्वाच्चतुर्गुणम्, तथा सति यवागूघन काथः स्यादिति। अन्ये तु तन्त्रान्तरदर्शनात् माणककन्दस्य पलशत तोयद्रोण

स्थलपद्मघृतम्—

स्थलपद्मपलान्यष्टौ कूषणस्य चतुःपलम्।
घृतप्रस्थं पचेदभिः क्षीरं दत्त्वा चतुर्गुणम्।
पञ्च कासान् हरेच्छीघ्रं शोथञ्चैव सुदुस्तरम्॥ ३१॥

शैलेयाद्यं तैलम्—

शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसीतालीशपत्रप्लवपत्रधान्यैः॥ ३२॥
श्रीवेष्टकध्यामकपिप्पलीभिः पृक्कानखैर्वापि यथोपलाभम्।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम्॥

शुष्कमूलाद्यं तैलम्—

शुष्कमूलकवर्षाभू-दारुरास्नामहौषधैः।
पक्वमभ्यञ्जनात् तैलं सशूलं श्वयथुं जयेत्॥ ३३॥

पुनर्नवावलेहः—

पुनर्नवामृतादारु-दशमूलरसाढके।
आर्द्रकस्वरसप्रस्थे गुडस्य तु तुलां पचेत्॥
तत् सिद्धं व्योषपत्रैला-त्वक्चूर्णैः कार्षिकैः पृथक्।
चूर्णीकृतैः क्षिपेच्छीतं मधुनः कुडवं लिहेत्॥

---

पक्वा गृह्णन्ति। व्यवहारस्तु पूर्वेणैव। माणकन्द आर्द्रमेव गृह्णन्ति वृद्धा॥ २९—३०॥

स्थलपद्मघृते स्थलपद्मं माणमूलमेव। कूषणस्य च मिलित्वा चतुःपलम्।

शैलेयेत्यादौ।—कौन्ती रेणुका, पलाशं शटी, थौणेयकं ग्रन्थिपर्णम्, कान्दसत्वादत्र सकारलोपः। हेम नागकेशरम्, प्लव कैवर्त्तमुस्तकम्, श्रीवेष्टको नवनीतखोटि, ध्यामकं गन्धतृणम्, एषां कल्कः, जलं चतुर्गुणमथात। यथोपलाभमिति यथालाभम्। तैलं सिद्धं सुपिष्टैरिति। शैलेयादिभिः सुपिष्टैस्तैलं सिद्धमुशन्ति तथा तैरेव सुपिष्टैः प्रदेहञ्चोशन्ति कथयन्ति इच्छन्ति वा॥ ३१—३२॥

पुनर्नवेत्यादौ।—पुनर्नवादीनां दशमूलान्तानां मिलित्वा चतुःषष्टिपलानि

लेहः पौनर्नवो नाम शोथशूलनिसूदनः।
श्वासकासारुचिहरो बलवर्णाग्निवर्द्धनः॥ २४॥

दशमूलहरीतकी—

दशमूलकषायस्य कंसे पथ्याशतं पचेत्।
तुलां गुडाद्दने दद्याद्व्योषक्षारं चतुःपलम्॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे।
दशमूलीहरीतक्यः शोथान् हन्युः सुदारुणान्॥
ज्वरारोचकगुल्मार्शो-मेहपाण्डूदरामयान्।
प्रत्येकमिव कर्षांशं त्रिसुगन्धमितो भवेत्॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा।
एतन्मानेन तुल्यत्व तेन तत्रापि वर्ण्यते॥ ३५॥

कंसहरीतकी—

द्विपञ्चमूलस्य पचेत् कषाये कंसेऽभयानाञ्च शतं गुडाच्च।
लेहे सुसिद्धे च विनीय चूर्णं व्योषत्रिसौगन्ध्यमुषास्थितं च॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥
कासज्वरारोचकमेहगुल्मान् प्लीहत्रिदोषोदरपाण्डुरोगान्
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान्॥
अत्रव्याख्यान्तरं नोक्तं व्याख्या पूर्वैव यत् कृता॥ ३६॥

---

तैलस्य चतुःषष्टिशरावा, शेषन्तु आढकं। व्योषेत्यादौ।—सहाय उपलक्षण वा तृतीया। मधुन कुडवमष्टौ पलानि। शूलशोथनिसूदन इति पाठान्तरम् चार्वेदसारेऽपि कफशोथविनाशन इत्युक्तं॥ २४॥

दशमूलेत्यादौ।—कंसं इत्याढकं। अत्र कषायस्य कंसमानता नदशेन अनुक्तमपि क्वाथ्यजलयोर्मानमन्मीयते, यतः क्वाथे कंसयत् षष्टिपलं क्वाथ्य जलन्यास-दानात्तत्भागावशेषे सति भवति। पथ्याशतमाकृतिमानात्। व्योषक्षारं चतुःपलमिति मिलित्वा, निर्देशस्य मानप्रधानत्वात्। त्रिसुगन्धन्तु प्रत्येकं सुवर्णांश कर्षांशम्,

लेपोऽरुष्करशोथं निहन्ति तिलदुग्धमधुनवनीतैः।
तत्तरुतलमृत्तिर्वा शालदलैर्वापि न चिरेण।
शोथे विषनिमित्ते तु विषोक्ता सम्मता क्रिया॥ २७॥
ग्राम्याब्जानूपं पिशितलवणं शुष्कशाकं नवान्नम्।
गौड़ं पिष्टान्नं दधि सकृशरं निर्जलं मद्यमम्लम्॥
धानावल्लूरं समशनमथो गुर्वसात्म्यं विदाहि।
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च॥ २८॥

इति शोथचिकित्सा।

---

निर्देशस्य द्रव्यप्रधानत्वात्। प्रस्थार्द्धं मधुन इति षोडशपलानि। एतत्प्रयोगोक्तमानसवादाच्चरकोक्तकंसहरीतक्यामपि प्रक्षेप्यद्रव्यमानं कल्पनीयमित्याह प्रत्येकमित्यादि। इत इति सप्तम्यन्तात् तसि अत्रेत्यर्थः। चरके पठ्यतेऽन्यथेति एतेन पाठभेदं, परं न तु योगभेद इत्यर्थः। एतेन मानभेदाद्योगभेद इति हन्दोक्तमपास्तम्, चरके पठ्यतेऽन्यथेत्युक्तम्। चरकस्यैव पाठभेदं दर्शयितुं चरकोक्तकंसहरीतकीमाह द्विपञ्चमूलस्येत्यादि।— लेहात् शुक्तिमित्यर्द्धपलं प्राश्येति योज्यम्। व्योषत्रिसुगन्धयोर्यद्यप्यत्र मानं नोक्तम्, तथापि पूर्वोक्तदशमूलहरीतक्यनुसारेणात्रापि कल्पनीयम्। एवं यवक्षारस्यापि। किञ्चिच्छब्दोऽवाप्यल्पवचनः, तेन व्योषक्षारयोर्मिलित्वा चतुष्पलग्रहणेऽपि व्योषभागापेक्षया यवक्षारस्य किञ्चिन्न्यूनता बोध्यमौचित्यात्। हन्दस्त्वाह—"किञ्चिच्च कर्षपर्यायं शुक्तिरर्द्धपलं तथा। सान्निध्यान्मधुनो मानं व्योषादेर्मिलितस्य च" इति॥ २५। २६॥

लेप इत्यादि।—योगत्रयम्॥ २७॥

ग्राम्येत्यादौ।—पिशितञ्च लवणञ्चेति समाहारः, तस्य विशेषणं ग्राम्याब्जानूपमिति। तत्र छागादिमांसं ग्राम्यम्, लवणञ्च यत् पाकेनाभिनिर्वृत्तं तत् ग्राम्यम्। अब्जं कच्छपादिमांसम्, लवणञ्च सामुद्रं करकचेति ख्यातं तदब्जम्। आनूपं शूकरादिमांसम्, लवणञ्च समुद्रतीरजं साम्भरीति ख्यातम्, तदप्यानूपम्। गौड़ं गुड़विकारम्। धाना भ्रष्टुरितभ्रष्टयवाः। वल्लूरं शुष्कमांसम्। समशनं पथ्यापथ्ययोरेकत्र भोजनम्। अरात्राविति दिने॥ २८॥

इति शोथाधिकार-विवृतिः।

## अथ वृद्धिव्रध्नचिकित्सा।

गुग्गुलुं रुवुतैलं वा गोमूत्रेण पिबन् नरः।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १ ॥
सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवम्।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा।
पाने वस्तौ रुवोस्तैलं पेयं वा दशकाम्भसा ॥ २ ॥
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ॥ ३ ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ॥ ४ ॥ ५ ॥
श्लेष्मवृद्धिमुष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेद्वा मूत्रसंयुतम् ॥ ६ ॥

---

पूर्वोक्तसम्बन्धेन श्लीपानन्तरं वृद्धिव्रध्नचिकित्सितमुच्यते। वृद्धिः कुरण्डः। गुग्गुलुमित्यादि। गोमूत्रपलद्वये एरण्डतैलपिच्छितगुग्गुलुमाषकाष्टक प्रक्षिप्य पेयम्। तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेकं प्रक्षिप्य पिबेत्। इमौ योगौ क्रमात् कफानुबन्धे वाते च योज्यावित्याहुः ॥ १ ॥

सक्षीरमित्यादि।—सुश्रुतस्य। गव्यदुग्ध पल २, एरण्डतैल कर्ष १; अयं योगः पित्तानुबन्ध इत्याहुः। पुनर्नवातैलन्तु पुनर्नवाक्वाथकल्काभ्यां साध्यमित्याहुः। पाने वस्ताविति पूर्वेण सह सम्बध्यते। रुवोस्तैलमेरण्डतैलम्। दशकस्य दशमूलस्याम्भसा क्वाथेन पेयम् ॥ २ ॥

पैत्तिकवृद्धिभेषजमाह चन्दनमित्यादि।—पद्मं पद्मकेशरम्। रक्तजे रक्तमोक्षणमिति सपक्वरक्तजवृद्धौ रक्तमोक्षणं जलौकोभिः कार्य्यं, सुश्रुतसंवादात्। उष्णवीर्य्यैरिति वचागन्धादिभिः मिश्रकोक्तैः। पीतदारु देवदारु, गोमूत्रेणैव देवदारुक्वाथः कार्य्य इत्याहुः। व्यवहारस्तु प्रक्षेपविधया। वाग्भटे तु—"गोमूत्रेण पिबेत् कल्कं श्लैष्मिके पीतदारुजम्" इत्युक्तम् ॥ ३–६ ॥

स्विन्नं मेदःसमुत्थन्तु लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ ७ ॥
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत्।
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन वै ॥ ८ ॥
शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात्।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ९ ॥
अङ्गुष्ठमध्ये त्वक् छित्त्वा दहेदङ्गविपर्यये ॥ १० ॥
रास्नायष्ट्यमृतैरण्ड-बलागोक्षुरसाधितः।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ११ ॥
तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम्।

---

स्विन्नमित्यादि।—सुश्रुतस्य। गोमयपिण्डादिना मृदु स्विन्नम्। चरके वृषणौ दृष्टौ स्वेदयेन्मृदु वा न वा इत्युक्तत्वात्। सुरसादिना सुरसादिगणेन शिरोविरेचनद्रव्यैः पिप्पलीमरिचविडङ्गापामार्गादिभिः संशोधनसंशमनीयैः मूत्रसंयुतैरिति मूत्रपिष्टैर्लेपयेदिति पूर्वेणान्वयः ॥ ७ ॥

मूत्रजवृद्धिचिकित्सामाह, संस्वेद्येत्यादि।—सुश्रुतस्य। मूत्रप्रभवामिति मूत्रवेगसन्धारणजां संस्वेदनं कर्त्तव्यं शस्त्रकर्मवेदनानिवारणार्थं त्वगादिमृदुकरणार्थं च वस्त्रपट्टेन घटिकाकृतिवस्त्रेण वेष्टनं कर्त्तव्यं, शस्त्रकर्मणः सौकर्यार्थं व्रीहिमुखं शस्त्रविशेषेण वेध्यं। व्यधश्च मूत्रस्रावणार्थम्। एतदनन्तरं यदाह सुश्रुतः 'अथास्य द्विमुखीं नाडीं दत्त्वा विस्रावयेद्भिषक्। मूत्रं नाडीमपोह्य स्थगिकाबन्धमाचरेत्' इति ॥ ८ ॥

अप्राप्तफलकोषान्त्रवृद्धिचिकित्सामाह, शङ्खेत्यादि।—सुश्रुतस्य। त्यक्त्वा सेवनीमिति कोशान्तसेवनीं मर्मत्वात् परित्यज्य, अतएवोक्तं वाग्भटे "षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः। शस्त्रेण ताः परिहरेत्" इति। व्यत्यासादिति वामकोषवृद्धौ दक्षिणे, दक्षिणकोषवृद्धौ तु वामे, यदि तु पुनरुभयतो वृद्धिस्तदोभयभागे व्यधः, वाशब्दो विध्यन्तरापेक्षया ॥ ९ ॥

अङ्गुष्ठेत्यादि।—सुश्रुतस्य। हस्तस्य दक्षाङ्गुष्ठमध्ये त्वङ्मात्रं छित्त्वा दहनं तु वातकफवृद्धिवत् स्नायुमपि। त्वक्शब्दस्य नपुंसकलिङ्गता समाधेया छान्दसत्वात्।

चाध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ १२ ॥
हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ १३ ॥
गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम्।
खादेन्नरः कोष्णजलानुपानां निहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥१४
त्रिफलाक्वाथगोमूत्रं पिबेत् प्रातरतन्द्रितः।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥ १५ ॥
सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसम्पिष्टं शोथघ्नं कफवातनुत् ॥ १६ ॥
भृष्टो रुबुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥ १७ ॥
गव्यं घृतं सैन्धवसम्प्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं हन्यात् कुरण्डं चिरजं प्रवृद्धम् ॥
ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्दितम्।
ताहाङ्गोपयसा पानं सर्ववृद्धिनिवारणम् ॥ १८ ॥
रुद्रजटामूललिप्ता करटव्यङ्कचर्मणा।

---

नक्रविपर्यय इति विपर्य्ययार्थः पूर्ववदिति। बलासिद्धपयोऽन्वितमिति। इह क्षीर साधनपरिभाषया बलामूलक्वथिते क्षीरं एरण्डतैलं प्रक्षिप्य पेयमित्यर्थः। हरीतकीमित्यादौ।—तैलमेरण्डतैलमित्याहुः। अस्य योगस्य विरेचनत्वान्मूत्रेणैव पान मिच्छन्ति, अन्ये तु उष्णोदकेन पानमित्याहुः ॥ १० — १३ ॥

गोमूत्रेत्यादि।—पूर्वयोगापेक्षया, भृष्टामिति विशेषः। कोष्णजलानुपानमिति पाठपक्षे क्रियाविशेषणम्। त्रिफलेत्यादौ।—गोमूत्र प्रस्थम्। सरलेत्यादौ। सरल सरलकाष्ठ, लेपोऽयं योगः। भृष्ट इत्यादियोगो भक्षणविधया। शम्बूकभाण्ड इति। शम्बूकभाण्डं शम्बूककभाण्डं शङ्खकं ग्राह्यं, न तु पात्रान्तरमित्याहुः। घृतात् माणिकाष्ट सैन्धवात् च वदन्ति। संधानिम। योज्यमेतत्। ऐन्द्री गोरक्षकर्कटी। रुद्रजटा ... ख्याता। करटी रुद्रजटामूल-

बद्धा वृद्धिः शमं याति चिरजापि न संशयः॥ १९॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।
लेपो वृद्ध्यामयं हन्ति बद्धमूलमपि दृढ़म्॥ २०॥
वचासर्षपकल्केन प्रलेपो वृद्धिनाशनः॥ २१॥
लज्जागर्दभमलाभ्यान्तु लेपो वृद्धिहरः परः॥ २२॥
मूलं विल्वकपित्थयोररलुकस्याग्नेश्च हन्त्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम्।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितम्
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं व्रध्नजित्॥ २३॥
अवीक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद्व्रध्नशूलहरं परम्॥ २४॥
मृतमात्रे तु वै काके विशस्ते सम्प्रवेशयेत्।
व्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत्॥ २५॥

---

कल्केन लिप्ता तदनु कण्टकी कटा इति ख्याता नकुलाकारा प्रायशो वृक्षोपरि तिष्ठति, तस्या भल्लुकचर्मणा क्रोडचर्मणा बद्धा वृद्धिरित्यर्थः। रूपिका अर्कपत्र॥ १४—२१॥

लज्जेत्यादौ।—लज्जा वराहक्रान्ता, गर्दभपक्षिणो मल विट्॥ २२॥

सम्प्रति व्रध्नचिकित्सामाह। व्रध्नलक्षणञ्च यद्यपि वृद्धिनिश्चये नास्ति तथापि तन्त्रान्तरादनुसन्धेयम्, यथा, "अत्यभिष्यन्दिगुर्वन्नसेवनाद्निचय गत.। करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु। ज्वरशूलाङ्गदाहाढ्य त व्रध्नमिति निर्दिशेत" इति। व्रध्नस्तु लोके भांडुसीति नाम्ना ख्यात.। मूलमित्यादि।—वाग्भटस्य मूलमिति षष्ठ्यन्तैः सर्वैर्योज्यम्। अरलुक. श्योनाक:, अग्निश्चित्रक., श्यामा वृद्धदारक, पूतिकरञ्जो लाटाकरञ्ज, काञ्जिककोष्णतोयमथितानामन्यतमेन पानं प्रकृत्याद्यपेक्षया ज्ञेयम॥ २३॥

अवीक्षीरेणेत्यादि।—वाग्भटस्य। अवीक्षीरेण गोधूमकुन्दुरुणी पिष्टा लेप कार्य्य, एक एवायं योग.। वाशब्द पूर्वयोगापेक्षया। अतएव वाग्भटे वाशब्दस्थाने चकारः पठ्यते। अपरे तु योगद्वयमाहु.। कुन्दुरु स्वनामख्यातम्। मृत

अजाजी हवुषा कुष्ठं गोधूमं बदराणि च।
काञ्जिकेन समं पिष्टा कुर्य्याद्व्रध्नप्रलेपनम्॥ २६॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारु सनागरम्॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम्॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च।
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत्॥
व्रध्नोदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात्॥ २७॥

शतपुष्पाद्यं घृतम्—

शतपुष्पामृतादारु चन्दनं रजनीद्वयम्।
जीरके द्वे वचानाग-त्रिफलागुग्गुलुत्वचः॥
मांसी कुष्ठं पत्रकैलारास्नाशृङ्गीः सचित्रकाः।
क्रिमिघ्नमश्वगन्धञ्च शैलेयं कटुरोहिणीम्॥
सैन्धवं तगरं पिष्टा कुटजातिविषे समं।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत्॥
वृषमुण्डितिकैरण्ड-निम्बपत्रभवं रसम्।
कण्टकार्य्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत्॥
सिद्धमेतद्घृतं पीतमन्त्रवृद्धिमपोहति।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिञ्च दारुणाम्॥

---

मान इत्यपि वाग्भटस्य। क्षतमात्र इति सद्योमारिते। विशल्य इति पाटित।
काकस्य क्रोडं पाटयित्वा तत्र कोष्णे भग्नं प्रवेशनीय ततो बन्धः कार्य्य॥२४—२६॥

सैन्धवाद्यतैल।—निचुलो वेतसः, श्यामा त्रिवृतेति वैद्यप्रसारकसंवादात्।

मूत्रवृद्धिं श्लीपदं वा यकृत् प्लीहानमेव च ।
शतपुष्पाघृतं रोगान् हन्यादेव न संशयः ॥ २८ ॥
घृतं सौग्ध्वरं योज्यं व्रध्नवृद्धिनिवृत्तये ॥ २९ ॥

इति वृद्धिव्रध्न-चिकित्सा ॥

---

## अथ गलगण्डगण्डमालापचीग्रन्थ्यर्बुदचिकित्सा

यवमुद्गपटोलानि कटु रूक्षञ्च भोजनम् ।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥ १ ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥ २ ॥
सर्षपान् शिग्रुवीजानि शणवीजातसीयवान् ।
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत् ॥
गण्डानि ग्रन्थयश्चापि गलगण्डाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥ ३ ॥
जीर्णकर्कारुकरसो विड़सैन्धवसंयुतः ।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥ ४ ॥
जलकुम्भीकजं भस्म पक्कं गोमूत्रगालितम् ।

---

नीलिनी नीलवृक्षः । चतुर्गुणजलेन पाकः । तैलं वेति तिलतैलं वा ... घृतं वक्ष्यमाणम् ॥ २७—२९ ॥

इति वृद्धिव्रध्नाधिकारविवृतिः ।

---

उक्तसङ्गत्यैव गलगण्डादयोऽभिधीयन्ते । तण्डुलोदकेत्यादि । हस्तिकर्णपलाशस्य मूलमित्यन्वयः । सर्वेऽपि गलगण्डाः वातकफमेदोभिरारभ्यन्ते, न तु पित्तं व्याधिस्वभावात् । अतो गलगण्डोक्तलेपाः कोष्णा एव देया इत्याह । जीर्णक-

पिबेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥ ५ ॥
सूर्य्यावर्त्तरसोनाभ्यां गलगण्डोपनाहने।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥ ६ ॥
तिक्तालावुफले पक्के सप्ताहमुषितं जलम्।
मद्यं वा गलगण्डघ्नं पानात् पथ्यानुसेविनः॥ ७ ॥
कट्फलचूर्णान्तर्गलघर्षो गलगण्डमपहरति।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ॥ ८ ॥
महिषामूत्रविमिश्रं लौहमलं संस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुनाथ गलगण्डे ॥ ९ ॥
जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः।
तासां स्थूलशिरे कृष्णे छिन्द्याद् द्वे च शनैः शनैः॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुत रक्ते व्रणे तस्मिन् दद्यात् सगुड़मार्द्रकम्।
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते ॥ १० ॥
कर्णयुग्मवहिःसन्धिमध्याभ्यामे स्थितञ्च यत्।
उपर्य्युपरि तच्छिन्द्याद् गलगण्डे शिरात्रयम् ॥ ११ ॥

---

तिक्त पक्तितिक्तालावु, अन्ये तु कुष्माण्डभेद इत्याहुः, अतत्रास्तु पूर्वोक्त। तत्र्यामिन्यचिरजातम। जलकुम्भी पात्रा, तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिबेत। उपनाहनमुष्णबहलनेप:। स्फोटास्रावैरुपनाहनं। श्वेतेति।—श्वेतगिरिकर्णिका श्वेतापराजिता ॥ ९ ८ ॥

महिषोत्यादौ।—पुराणलौहमल महिषीमूत्र मास स्थापयित्वा अन्तर्धूम दग्ध्वा मधुना लिह्यादित्यय:। जिह्वाया इत्यादौ। -कृष्णे स्थूलशिरे वडिशेन शनै: शनै: संगृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यन्वय:। तस्मिन् व्रणे स्रुतरक्ते सति सगुडमार्द्रकमद्यादुभक्षयेत्। अन्ये तु दद्यादिति पठन्ति, तन्मते भक्षणार्थमिति शेष। कर्णयुग्मवहिःसन्धिमध्याभ्यास इति।—कर्णयो: पृष्ठसमीपे उपर्य्युपरिस्थित-मित्यन्वय: ॥ ९—११ ॥

तुम्बीतैलम्—

विड़ङ्गक्षारसिन्धूत्था रास्नाग्निव्योषदारुभिः।
कटुतुम्बीफलरसे कटुतैलं विपाचितम्॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत्॥ १२॥

अमृताद्यं तैलम्—

तैलं पिबेच्चामृतवल्लिनिम्ब-हंसाह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी॥१३॥

माचिकाढ्यः सकृत् पीतः क्वाथो वरुणमूलजः।
गण्डमालां हरत्याशु चिरकालानुबन्धिनीम्॥
पिष्टा ज्येष्ठाम्बुना पेयाः काञ्चनालत्वचः शुभाः।
विश्वभेषजसंयुक्ता गण्डमालाहराः पराः॥
आरग्वधशिफां चिप्रं पिष्टा तण्डुलवारिणा।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत्॥
गण्डमालामयार्त्तानां नस्यकर्मणि योजयेत्।
निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम्॥ १४॥
कोषातकीनां स्वरसेन नस्यं तुम्बग्रास्तु वा पिप्पलिसंयुतेन।

तुम्बीतैलं।—उग्रा वचा। कटुतुम्बीफलरसे इति परिणततिक्ततुम्बीफलस्य चतुर्गुणे स्वरसे इत्यर्थः। उक्तं हि वाग्भटे 'रुढायाश्चिक्ततुम्ब्याश्च रसे तैलं चतुर्गुणे' इति। तैलमित्यादि।–सुश्रुतस्य। अमृतवल्ली गुडूची, वृक्षक कुटजः, हंसाह्वया हंसपादी, यदाह वाग्भटः "गुडूचीनिम्बकुटजहंसपादीबलाद्वयैः। साधितं पाययेत्तैलं सकृष्णादेवदारुभिः" इति। अन्ये तु हिम इत्यत्र पठित्वा कालाकटं व्याख्यानयन्ति। अमृतवल्ल्यादिभिः क्वाथकल्करूपैरिति चन्द्रिका। अन्ये तु एभिः सर्वैः कल्कः जलं चतुर्गुणमित्याहुः॥ १२॥ १३॥

अतः परं गण्डमालाचिकित्सामाह।—माचिकाढ्य इत्यादि। सकृदित्येकवारं पीतः स्तुतिवादोऽयम्। ज्येष्ठाम्बु तण्डुलोदकम्। काञ्चनालः काञ्चनः। आरग्वधस्य शिफा मूलम्। कोषातकीत्यादि चत्वारो योगाः। पिप्पलीसंयुतेनेति पद

तैलेन वारिष्टभवेन कुर्य्याद्वचोपकुल्ये सह माक्षिकेण ॥ १५ ॥

ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगतः।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि ॥ १६ ॥

अलम्बुषादलोद्भूतात् स्वरसाद्द्वे पले पिबेत्।
अपच्या गण्डमालायाः कामलायाश्च नाशनः ॥ १७ ॥

गलगण्डं गण्डमालां कुरण्डांश्च विनाशयेत्।
पिष्टं ज्येष्ठाम्बुना मूलं लेपाद् ब्राह्मणयष्टिजम् ॥ १८ ॥

कुच्छुन्दरीतैलम्—

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम्।
कुच्छुन्दर्य्या विपक्वन्तु चणात् तैलवरं ध्रुवम् ॥ १९ ॥

शाखोटकबिम्बाद्ये तैले—

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा।
बिम्बाश्वमारनिर्गुण्डी-साधितञ्चापि लावणम् ॥ २० ॥

निर्गुण्डीतैलम्—

निर्गुण्डीस्वरसेनाथ लाङ्गलीमूलकल्कितम्।
तैलं नस्याद्विहन्त्याशु गण्डमालां सुदारुणाम् ॥ २१ ॥

---

कोषातकीना स्वरसेनैत्यनेनापि सम्बध्यते। कोषातकी घोषक, तस्याः फलस्य स्वरस, एव तिक्ततुम्ब्या अपि। अरिष्टभवेन निम्बफलजेन तलेन तृतीयो योग। अरिष्टभवस्येति पाठान्तरे अरिष्टफलस्येत्यर्थ। वचोपकुल्ये इति वचोपकुल्ये पक्का मधुना नस्य विषयामित्यर्थ। ऐन्द्री गोरक्षकर्कटी, गिरिकर्णी श्वेतापराजिता, अलम्बुषा मुण्डितिका अलम्बुषी वा। अभ्यङ्गादित्यादौ कुच्छुन्दरी छुछुया इति ख्याता मूषिकाकृति, तस्याः कल्को जलं चतुर्गुणम्। गण्डमालापहमित्यादि।—शाखोटकत्वचा स्वरसकल्करूपया, सुश्रुतेऽप्युक्त "शाखोटकस्वरसेन सिद्धं तैलं हितं [illegible]नस्यविरेचनेषु" इति। बिम्बी [illegible]द योगान्तरम्। बिम्बी डिम्बिरिति ख्याता, तेलाकुचा इत्यन्ये। अश्वमार. क[illegible] बिम्ब्यादीना मूलस्य कल्को जलं चतुर्गुणमिति गयदास.। निर्गुण्ड[illegible]—निर्गुण्डीस्वरसश्चतुर्गुणः ॥ १४—२१ ॥

वनकार्पासिकामूलं तण्डुलैः सह योजितम्।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय च॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम्।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम्॥
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम्॥ २२॥
अश्वत्थकाष्ठं निचुलं गवां दन्तञ्च दाहयेत्।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान्॥ २३॥
पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मित्त्वेन्द्रवस्तिं परिवर्ज्य सम्यक्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात्॥ २४॥
मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक्।
अङ्गुल्यान्तरितं सम्यगपचीनां प्रशान्तये॥ २५॥
दण्डोत्पलाभवं मूलं बद्धं पुष्येऽपचीं जयेत्।
अपामार्गस्य वा च्छिन्द्याज्जिह्वातलगते शिरे॥ २६॥

---

अपचीचिकित्सामाह वनेत्यादि। त्रयो भागास्तण्डुलाना भेषजस्यैक अश्वत्थेत्यादौ वराहमज्जयोगाल्लेप.। पार्ष्णिं प्रतीत्यादि।—सुश्रुतस्य। प्राग्गुल्फस्याधोदेश, पार्ष्णिमारभ्य ऊर्द्ध्वं द्वादशाङ्गुलानि मित्वा परिमाय इन्द्रबस्तिं द्व्यङ्गुलं परित्यज्य विदार्य्य जालानि मेदोजालानि मत्स्याण्डेन सदृशान्यग्निमवचारयेदित्यर्थः। एवमपच्या मूलोच्छेदात प्रशम., यदाह भोज - 'वातपित्तकफा हृद्रा मेदसापि समाचितम्। जङ्घायां कण्डरा प्राप्य मत्स्याण्डसदृशा बहून्। कुर्वन्तीत्यादि॥ २२-२४॥

कक्षाकूर्परसन्धिगतापचीषु बाहुगतमेव कर्माह, मणिबन्धेत्यादि।—सुश्रुतस्य। मणिबन्धो हस्तबाहुसन्धिः, अत मणिबन्धादङ्गुलमेकं द्वयं वा परित्यज्य दाहः कार्यः। दण्डोत्पलेत्यादि।—दण्डोत्पला स्वनामख्याता। अपामार्गस्य वा मूलमित

### व्योषाद्यं तैलम्—

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च।
तैलमेभिः शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ॥ २७ ॥

### चन्दनाद्यं तैलम्—

चन्दनं साभया लाक्षा वचा च कटुरोहिणी।
एभिस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ २८ ॥

### गुञ्जाद्यं तैलम्—

गुञ्जाहयारिश्यामार्क-सर्षपैर्मूत्रसाधितम्।
तैलन्तु दशधा पश्चात् कणालवणपञ्चकैः ॥
मरिचैश्चूर्णितैर्युक्तं सर्वावस्थागतां जयेत्।
अभ्यङ्गादपचीं नाडीं वल्मीकार्शोऽर्बुदव्रणान् ॥ २९ ॥
ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम्।
पक्वानापाट्य संशोध्य रोपयेद्व्रणभेषजैः ॥ ३० ॥

हिंस्रा सरोहिण्यमृता च भार्गी
श्योनाकबिल्वागुरुकृष्णगन्धाः।
गोपित्तपिष्टाः सह तालपर्ण्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ३१ ॥

...ज्यम्। अपचीप्रदेश एव भेषजसम्बन्धनम्। अत्रैव शस्त्रकर्मान्तरमाह छित्त्वादि ...शादि। व्योषमित्यादौ जलं चतुर्गुणम्। चन्दनमित्यादौ। अभया हरीतकी न ...भयमुशीरं, "वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः। तैलं प्रसाधितं पीतं समूलामपचीं जयेत्" इति वाग्भटसंवादात् ॥ २५—२८ ॥

गुञ्जेत्यादौ।—हयारिः करवीरः तस्य मूलम्। श्यामा वृद्धदारकः। अर्कः स्नु... ...श्रम। गोमूत्रं चतुर्गुणं दत्त्वा दशधा पाकः। ततः कणापञ्चलवणचूर्णं मरिच ...ण प्रक्षिप्य प्रयोज्यम्। कणालवणपञ्चकमरिचैरित्येकपदम्, "घृततैलवसामज्ज ...वेशवारपयो दधि। मांसधावनतोयाभम्" इतिवत् ॥ २९ ॥

ग्रन्थिचिकित्सामाह ग्रन्थिष्वित्यादि। शोथप्रतिक्रियामिति।—व्रणशोथचिकि

अलायुकाः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि
पिबेत् कषायाण्यपि सशर्कराणि ॥ ३२ ॥

द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेद्वापि हरीतकीनाम् ।
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवतारयेच्च ॥ ३३ ॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते च ।
स्विन्ने च विम्लापनमेव कुर्य्यादङ्गुष्ठवेणूदृषदीसुतैश्च ॥ ३४ ॥
विकङ्कतारग्वधकाकणन्तीकाकादनीतापसवृक्षमूलैः ।
आलेपयेदेनमलाबुभार्गीकरञ्जकालामदनैश्च विद्वान् ॥ ३५ ॥

दन्तीचित्रकमूलत्वक् सुह्यर्कपयसी गुडः ।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥ ३६ ॥
ग्रन्थ्यर्बुदादिजिल्लेपो मातृवाहककीटजः ॥ ३७ ॥

ल्पितम तच्च सौश्रुतद्विव्रणीयोक्तमपतर्पणादिविरेचनान्तमेकादशविधम । शिव त्यादि ।—सुश्रुतस्य । श्यिमा कालाकडा । कृष्णगन्धा शोभाञ्जन । गौधिम पिष्टा इत्यत्र गौजीच पि८ ति पाठान्तरे गोजी शाखोटक , किन्तु गौजीपाठो पत आयुर्वेदमारप्रामाण्यात तथा सुश्रुतटीकाकाङ्क्ष्याव्यातत्वाच्च । तालपर्णी तालमूली । अलायुका इत्यादि विद्वानित्यन्त सुश्रुतस्य । काकोलिवर्गस्येति काकोल्यादिगणस्य हृतेषु दोषेष्वित्यादि ।—वमनादिभि तथा रक्तमोक्षणेन दोषेषु कफादिरक्तान्ते हृतेषु सत्सु । यथानुपूर्व्येति । स्नेहस्वेदादिक्रम कृत्वेत्यर्थः । दृषदीसुत शिला पुत्रक । अत्र छन्दोभङ्गभय नाशङ्कनीयम्, अनन्तत्वाच्छन्दोमार्गाणाम् । क्वचित्तु सुश्रुतपुस्तके अङ्गुष्ठलोहोपलवेणुदण्डैरिति पठ्यते, केचित्तु वेणुदृषदोमुतैरिति । विकङ्कतेत्यादिमदनान्त एको लेप इति चन्द्रिका । विकङ्कतो वयङ्कलिरिति ख्यात काकणन्ती गुञ्जा अस्या मूलम्, काकादनी काकतिन्दुकः , तापसवृक्ष. पुत्रञ्जीवक अलाबु कटुतुम्बी, काला कालाकडा मञ्जिष्ठा वा ॥ ३०—३५ ॥

सुह्यर्कपयसीति सुह्यार्कयो. क्षीरम् । भल्लातकास्थि भल्लातकबीजम् ।

स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्बुदादिकान्॥ ३८॥

ग्रन्थीनमर्मप्रभवानपक्वा-
नुद्धृत्य वाग्निं विदधीत वैद्यः।
क्षारेण वैतान् प्रतिसारयेत्तु
संलिख्य संलिख्य यथोपदेशम्॥ ३९॥

ग्रन्थ्यर्बुदानाञ्च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद्भिषगर्बुदानि
विधानविद् ग्रन्थिचिकित्सितेन॥ ४०॥

वातार्बुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथ वेशवारैः।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च॥ ४१॥

स्वेदोपनाहा मृदवस्तु पथ्याः
पित्तार्बुदे कायविरेचनञ्च॥ ४२॥

---

काशीशं धातुकाशीशम्। मातृवाहककीटः सुखाशादिभवपदकीट इति ख्यात॥ ३६—३८॥

ग्रन्थीनित्यादि।—सुश्रुतस्य। क्षारेण वेति विकल्पो दोषापेक्षया, तेन वाते कफे ऽग्निः, पित्ते च क्षार इति। प्रतिसारयेदिति प्रलेपयेत्। यथोपदेशमिति यथाशास्त्रम्। एतच्च अग्निं विदधीतेत्यनेनापि सम्बध्यते, तेनाग्निकर्मविधिना प्रतिसारणीयक्षारविधिना चेत्यर्थः॥ ३९॥

अर्बुदे ग्रन्थिचिकित्सितं सोपपत्तिकमतिदिशति ग्रन्थ्यर्बुदानामित्यादि। अवि-शेष इत्याविशेष इह ज्ञेयः, तेन सुश्रुतोक्तभेदोऽपि भवत्युक्तः। सुश्रुते हि पृथक् ग्रन्थिलक्षणमुक्त्वा अर्बुदलक्षणञ्च गात्रप्रदेशे इत्यादिना पृथगेवोक्तम्, तस्मात् श्लोक-भेदे सत्यपि प्रायेणाविशेषादिह ग्रन्थिचिकित्सं वातादिग्रस्तेऽर्बुदे। विधानविदिति

विघृष्य चोडुम्बरशाकगोजी-
पत्रैर्भृशं चाद्रयुतैः प्रलिम्पेत् ।
श्लक्ष्णीकृतैः सर्जरसप्रियङ्गु-
पत्तङ्गलोध्रार्जुनयष्टिकाह्वैः ॥ ४३ ॥
लेपनं शङ्खचूर्णेन सह मूलकभस्मना ।
कफार्बुदापहं कुर्य्याद्ग्रन्थ्यादिषु विशेषतः ॥ ४४ ॥
निष्पावपिण्याककुलत्थकल्कै-
र्मांसैः प्रगाढैर्दधिमर्दितैश्च ।
लेपं विदध्यात् क्रिमयो यथात्र
मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धम्
लिखेत् ततोऽग्निं विदधीत पश्चात् ।
यदल्पमूलं त्रपुताम्रसीसैः
संवेष्ट्य पत्रैरथवायसैर्वा ॥ ४५ ॥

दाहादिर्विधिश्च । नाडीति नाडीस्वेदविधिना । स्वेदोपनाहा मृदव इति मृदवो स्वेद, मृदुरुपनाहश्च कार्य्योऽस्यादमृदुत्वेऽकृते । कायावरत्वमित्यत्र कायस्य शिरादिवर्जनम्, इदं साध्यम् विघृष्येत्यादौ उडुम्बरः फल्गु, काकोदुम्बरपत्रत्वात् । शाका महाजम्बूः काकशपत्र । गोजी दार्विशाक शाखोटकं वा । चाद्रयुतैरिति सर्जरसादिभिः सम्बध्यते । पत्तङ्गं रक्तचन्दनम् । अञ्जनस्थाने ऽञ्जन इति पा० अञ्जनं सौवीराञ्जनम् । यष्टिकाह्वं यष्टिमधु ॥ ४० – ४४ ॥

निष्पावेत्यादि । सुश्रुतस्य । निष्पावः श्वेतशिम्बी । पिण्याकस्तिलकल्कः क्रिमयो यथात्रेत्यत्र परमुत्पद्यन्ते इति शेषः । मुञ्चन्तीत्यत्र मूर्च्छन्तीति पा० अपत्यान्यथ मक्षिका वेत्यत्र परं मुञ्चन्तीति शेषः । एतत्कर्मणः फलमाह, अल्पावशिष्टमित्यादि सुश्रुतस्य । क्रिमिभिर्भक्षणादल्पावशिष्टत्वम् । लिखेदिति अल्पावशिष्टं प्रतिमासं शस्त्रेण छिन्द्यात्, अल्पावशिष्टस्य च छेदनेन आतुरस्य महान् क्लेश इति तात्पर्य्यम् । ततोऽग्निं विदधीतेति —शस्त्रच्छेदानन्तरञ्चावशिष्टार्बुदमूलस्य सम्यगुच्छेदाय चाग्निं विदधीत तप्तशलाकया दहेत् । अग्निकर्मणि कृतेऽपि यद

क्षाराग्निशस्त्राण्यवतारयेच्च
मुहुर्मुहुः प्राणमवेक्षमाणः।
यदृच्छया चोपगतानि पाकम्
पाकक्रमेणोपचरेद्यथोक्तम् ॥ ४६ ॥
सशेषदोषाणि हि योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति।
तस्मादशेषाणि समुद्धरेत्तु
हन्युः सशेषाणि यथा विषाग्नी ॥ ४७ ॥
उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः।
प्रणश्यन्त्यचिरान्नॄणां पिड़काऽर्बुदजातयः ॥ ४८ ॥
उपोदिका काञ्जिकतक्रपिष्टा
तयोपनद्धो लवणेन मिश्रः।
दृष्टोऽर्बुदानां प्रशमाय केचिद्
दिने दिने रात्रिषु मर्मजानाम् ॥ ४९ ॥
लेपोऽर्बुदजिद्रम्भामोचकभस्मतुषशङ्खचूर्णकृतः।
शरटरुधिरार्द्र गन्धकयवजविड़ङ्गनागरैर्वाथ ॥ ५० ॥

र्बुदस्य मूलं तिष्ठेत् तदा किं कर्त्तव्यमित्याह यदल्पमूलमित्यादि। अर्बुदस्य यदल्पमूलं तत वशादिलोहान्तानामन्यतमेन रचितैः पत्रैः संवेष्ट्य स्थापयेदिति व्याख्येयम्, न तु क्षाराद्यवचारणापेक्षया त्रपुादिपत्रसंवेष्टनस्य पूर्वभावित्वमित्याह.। त्रपादिपत्रवेष्टनेन च तनुमूलस्यार्बुदस्य सङ्घर्षणात् स्वयमेवोपशमो भविष्यतीति भावः। त्रपु रङ्गः ॥ ४५ ॥

विश्वनाथमाह क्षाराग्नीत्यादि।—यद्यपि सुश्रुते "सकृदेवोपहरेत्क्रमम्" इत्युक्तं तथापि अर्बुदस्य महामूलत्वात् न तत्र क्षारादयः सकृदवचारणीया इत्याह मुहुर्मुहुरिति। प्राणमवेक्षमाण इति यथा न बलहानिः स्यात् तथा कालविप्रकर्षं कृत्वा मुहुर्मुहुः क्षारादीनवचारयेदित्यर्थः। अपक्वस्यार्बुदस्य चिकित्सामभिधाय पक्वस्य चिकित्सामाह, यदृच्छयेति कारणाप्रतिनियमेन अनियतमभिघातादिपाक

सञ्जीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।
सीसकेनाथ लवणैः पिण्डारकफलेन वा ॥ ५१ ॥
हरिद्रालोध्रपत्तङ्गगृहधूममनःशिलाः ।
मधुप्रगाढो लेपोऽयं मेदोऽर्बुदहरः परः ॥ ५२ ॥
एतामेव क्रियां कुर्य्यादशेषां शर्करार्बुदे ॥ ५३ ॥

इति गलगण्ड-गण्डमालापचीग्रन्थ्यर्बुद-चिकित्सा ।

---

## अथ श्लीपदचिकित्सा ।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ १ ॥
धुस्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम् ॥ २ ॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम् ।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि दृढम् ॥ ३ ॥

कारणं प्राप्यत्यर्थः । यत्तु निदाने "न पाकमायान्ति" इत्युक्तं तत् प्रायिकमिति ज्ञेयम् । पाकक्रमेणेति पाकोक्तपाटनशोधनादिक्रमेण । यथोक्तमित्युपचारविशेषणम् । सुश्रुते तु यथोक्तमित्यत्र विधिज्ञ इति पाठः । पिडकार्बुदजातयः इति पिडकार्बुदप्रकारा इत्यर्थः । लेप इत्यादौ ।— रम्भामोचकं कदलीकाण्डकं तस्य भस्म क्षार इत्यर्थः । शरटः ककलासः । यवजो यवक्षारः । सञ्जीत्यादि चतुष्पदा । सञ्जीगण्डीरिका सञ्जीकाण्डः । तप्तमौजुदण्डेन तथा तप्तसीसकेन तथा तप्तलवणेन तथा पिण्डारकफलमुतस्विन्न पोट्टलिका बद्धा स्वेदः कार्य इत्यर्थः । हरिद्रेत्यादौ ।—पत्तङ्गं रक्तचन्दनम् ॥ ४६—५३ ॥

इति गलगण्डगण्डमालापचीग्रन्थ्यर्बुद-चिकित्सा-विवृतिः ।

---

पूर्वोक्तसङ्गत्यैव श्लीपदचिकित्सितमुच्यते । रूपिका अर्कमूलम् । पिण्डारक

पिण्डारकतरुसम्भववन्दाकशिफा जयति सर्पिषा पीता।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम्॥ ४॥
हितश्चालेपने नित्यं चित्रको देवदारु वा।
सिद्धार्थशिग्रुकल्को वा सुखोष्णमूत्रपेषितः॥ ५॥
स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक्।
कृत्वा गुल्फोपरि शिरां विध्येत्तु चतुरङ्गुले॥ ६॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्वुदविसर्पवत्॥ ७॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम्।
पिष्टारनालैर्लेपोऽयं पित्तश्लीपदशान्तये॥ ८॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबन्नरः॥ ९॥
पिबेत् सर्षपतैलेन श्लीपदानां निवृत्तये।
पूतीकरञ्जच्छदजं रसं वापि यथाबलम्॥ १०॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम्।
काञ्जिकेन पिबेच्चूर्णं मूत्रैर्वा वृद्धदारजम्॥ ११॥

---

...रुमनामख्यातः। बद्धा सूत्रं णेति अत्रापि वन्दाकशिफेति सम्बध्यते। [अय-...स्य वन्दाकशिफा मा ८ घृत तो २ पेयम्। अथवा श्लीपदाश्रयजङ्घाया रक्तसूत्र ब...मनीया।] हितश्चेत्यादि।—गोमूत्रपिष्टाम्वयो लेपा बोध्या। सिद्धार्थः श्वेत...सर्षपः॥ १—५॥

स्नेहेत्यादि।—सुश्रुतस्य। स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ, न तु स्वतन्त्र...या स्नेहो देयः सर्वश्लीपदानां कफप्रधानतया विरूक्षणीयत्वात्। अयञ्च गुल्फो-...परि शिराव्यधो रक्तदुष्टो सत्यामेव कार्य्यः पश्चाद्भागे॥ ६॥

पैत्तिकश्लीपदचिकित्सामाह, गुल्फस्याध इत्यादि।—सुश्रुतस्य। पित्तघ्नीञ्चेति ...चकारात् कफघ्नीञ्च क्रियां कुर्य्यादिति ज्ञेयम्, श्लीपदानां कफप्रधानत्वात्॥ ७॥

मञ्जिष्ठामित्यादौ।—हिंस्रा कालाकडाभेदः। शिरामित्यादि।—सुश्रुतस्य।

रजनीं गुड़संयुक्तां गोमूत्रेण पिबेन्नरः।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः॥ १२॥
गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण॥ १३॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम्।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम्॥ १४॥
गोधावतीमूलयुक्तां खादेन्माषेण्डरीं नरः।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः॥ १५॥
श्लीपदघ्नो रसोऽभ्यासाद्गुडूच्यास्तैलसंयुतः॥ १६॥

वृद्धदारकचूर्णम्—

त्रिकटु त्रिफला चव्यं दार्वीवरुणगोक्षुरम्।
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत्॥
सर्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम्।
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः॥
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम्।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम्।
कुष्ठगुल्मानिलहरं वातश्लेष्मज्वरापहम्॥ १७॥

---

सुविदितामिति व्यक्ताम्। अङ्गुष्ठ इति पादाङ्गुष्ठसन्निधौ। क्षिप्रमर्मण उपरि द्व्यङ्गुले शिराव्यधः कार्यः, क्षिप्रमर्मव्यधाद्धि मरणं स्यात्। तदुक्तं सुश्रुते "पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म, तत्र विद्धस्याक्षेपकेण मरणम्" इति कषायाणीति कफहरारग्वधादिगणमुष्ककादिगणकृतानि। पूतीकरञ्जकण्टजमिति कण्टकीकरञ्जपत्रस्वरसं पलमानं कटुतैलाच्च प्रक्षिप्य पिबेत। अनेनैव विधानेनेति कटुतैलप्रक्षेपेणेत्यर्थः। गन्धर्वः एरण्डः। गोजलं गोमूत्रम्। तैलसंयुक्तमित्यत्र कटुतैलम्। गोधावती गोधालियालता एतन्मूलस्यैको भागः, माषकलायस्य तु भागत्रयम्॥ ८—१५॥

गुडूच्या रस इति स्वरसः क्वाथो वा। तैलमत्र कटुतैलम्। त्रिकट्वित्यादौ।—

पिप्पलीत्रिफलादारु-नागरं सपुनर्नवम्।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः।
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥ १८ ॥

कृष्णाद्यमोदकः—

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिश्च हरीतक्यो गुड़स्य तु पलद्वयम्।
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ १९ ॥

सौरेश्वरघृतम्—

सुरसो देवकाष्ठञ्च त्रिकटुस्त्रिफले तथा।
लवणान्यथ सर्वाणि विडङ्गान्यथ चित्रकम् ॥
चविका पिप्पलीमूलं गुग्गुलुर्हवुषा वचा।
यवाग्रजञ्च पाठा च शठ्यला वृद्धदारकम् ॥
कल्कैः स्यु कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥

अलम्बुषा मुण्डिरी। वृद्धदारस्य तत्सममिति।—त्रिकट्वादिसर्वचूर्णसमं वृद्धदारस्य चूर्णमित्यर्थः। सार्वकामिकमिति यथेच्छमित्यर्थः ॥ १६ । १७ ॥

पिप्पल्यादौ।—अग्निञ्च कुरुते इति विरेकेण पित्तहरणात्। अन्ये तु यस्मादग्निं घोरं कुरुते अतो भस्मकं नियच्छति प्रयच्छतीत्याहुः ॥ १८ ॥

कृष्णाद्यादौ।—कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम्। विंशतिश्च हरीतक्य इत्याकृतिमानात्। मध्वेव मोदककरणोचितं देयम्। १९ ॥

सौरेश्वरघृते सुरसः पर्णासः वृन्दलिखितत्वात् सर्वसंवादात् निर्गुण्डी वा। [ दशमूलीकषायस्य मिलित्वा प्रस्थम्, जलं चतुर्गुणम्, शेषं प्रस्थमेकम्। ] धान्ययूषद्रवः काञ्जिकं न तु धन्याककाथः, धान्याम्लेति तन्त्रान्तरपाठात् व्यवहारा-

दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
पक्वं स्यादुद्धृतं कल्कात् पिबेत् कर्षद्वयं हविः ॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदःश्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्बुदम् ।
नाशयेद्‌ग्रहणीदोषं श्वयथुं गुदजानि च ॥
परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम् ।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम् ॥
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम् ॥ २० ॥

विडङ्गाद्यतैलम्—

विडङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्वेलकाख्येषु सर्वेषु लवणेषु च ।
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥ २१ ॥

इति श्लीपद-चिकित्सा ॥

---

भावाश्च । ननु कयोर्द्वयोः कियन्मानं ग्राह्यमित्याह प्रस्थमित्यादि । सौरेश्वरमिति ।—इन्द्राणी निर्गुण्डीपर्य्यायः, तेन सुरेश्वरा निर्गुण्डी, तत्कृतत्वात् सौरेश्वरमिति संज्ञा । जीवकेनेति जीवो बृहस्पतिः, स्वार्थे कः । अन्यत्राप्युक्तम—"द्राक्षा दुरालभा कृष्णा तुगा कर्कटकी जया । एषां सूक्ष्माणि चूर्णानि योजय मधुसर्पिषा । कासश्वासज्वरहरं विशेषात् तमकं जयेत् । निर्मितं जीवकेनेद कुमाराणां सुखावहम्" इति ॥ २० ॥

विडङ्गाद्यतैले ।—भद्रदारु देवदारु, एलकाख्यो हीगलः एलबालुक इत्यन्ये पेटिकेत्यपरे । विडङ्गादीनां कल्को द्रवन्तु जलं चतुर्गुणम् ॥ २१ ॥

इति श्लीपदाधिकार-विवृतिः ।

## अथ विद्रधि-चिकित्सा।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोद्भवं विना॥ १॥
वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः।
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ॥ २॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयत्।
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः॥ ३॥
पुनर्नवादारुविश्व-दशमूलाभयाम्भसा।
गुग्गुलुं रुबुतैलं वा पिबेन्मारुतविद्रधौ॥ ४॥
पैत्तिकं शर्करालाजा-मधुकैः शारिवायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः॥ ५॥
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम्।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम्॥ ६॥

---

प्रागुक्तसम्बन्धादेव विद्रधिरुच्यते। मृदुर्विरेक इति।—अयञ्च मृदुर्विरेको बहुधा कार्य्यः। गम्भीरधातुगतदोषकृतत्वात् विद्रधिरिति वदन्ति॥ १॥

वातघ्नेत्यादि।—सुश्रुतस्य। वातघ्नमूलं दशमूलम्। वातघ्नस्थाने सुरङ्गीति पाठे सुरङ्गी शोभाञ्जनकः॥ २॥

स्वेदेत्यादौ।—स्वेदो वेशवारादिभिः। यदाह सुश्रुतः—"वेशवारैः सकृशरैः पयोभिः पायसैस्तथा। स्वेदयेच्चापि सततम्" इति। उपनाहोऽपि तत्रैवोक्तः; यथा, "आनूपौदकमांसन्तु काकोल्यादिः ससर्पिषः। स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने" इति। सिद्धपिष्टैरिति उत्स्विन्नपिष्टैः॥ ३॥

पुनर्नवेत्यादौ।—अम्भसा क्वाथेन॥ ४॥

पैत्तिकमित्यादि।—सुश्रुतस्य। योगद्वयेऽपि क्षीरं पेषणार्थम्। शारिवा अनन्तमूलम्। पयस्या क्षीरकाकोली। इष्टकेत्यादि।—सुश्रुतस्य। अत्र मूत्र

यष्ट्याह्वशारिवादूर्वानलमूलैः सचन्दनैः ।
क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ॥ ७ ॥
इष्टकासिकतालोह-गोशकृत्तुषपांशुभिः ।
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ८ ॥
दशमूलाकषायेण सस्नेहेन रसेन वा ।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥ ९ ॥
त्रिफलाशिग्रुवरुण दशमूलाम्भसा पिबेत् ।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥ १० ॥
पित्तविद्रधिवत् सर्वां क्रियां निरवशेषतः ।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥ ११ ॥
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ।
अचिरादिद्रधीन् हन्ति प्रातः प्रातर्निषेवितः ॥ १२ ॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ १३ ॥
श्वेतवर्षाभुवा मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥ १४ ॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेत् संशमनाय वै ॥ १५ ॥

---

पिष्टैरिति प्रमादपाठः । किन्तु मलरूपैरित्येव पाठः सुश्रुते पठ्यते । उक्तं मूत्रद्रवस्वेद इति टीकाकृता व्याख्या । अन्ये तु लोहं लोहचूर्णम्, गोशकृत् गोमयम्, एभिरिष्टकाचूर्णादिभिर्मूत्रपिष्टैरस्कपत्रबद्धैः स्वेद इति व्याख्याय मूत्रपिष्टैरिति पाठमेव स्वीकुर्वन्ति ॥ ७—८ ॥

दशमूलेत्यादौ ।—सस्नेहेनेति पूर्वेण परेण च सम्बध्यते । रसेनेति मांसरसेन ॥ ९ । १० ॥

पित्तेत्यादि ।—सुश्रुतस्य । विपुलवचनस्यापि सर्वशब्दस्य दृष्टत्वात् पुनर्निरवशेषत इत्युक्तं कृत्स्नलेपादिविध्यतिदेशार्थम् शिग्रुम् । शोभेत्यादौ ।—दरपिष्टमीष

शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्बुना पीतम्।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य च ॥ १६ ॥
अपक्के त्वेतदुद्दिष्टं पक्के तु व्रणवत् क्रिया ॥ १७ ॥
स्रुतेऽप्यूर्द्ध्वं मधश्चैव मैरेयाम्लसुरासवैः।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथ वा ॥ १८ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं तिनिशत्वचम्।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ १९ ॥

इति विद्रधि-चिकित्सा ॥

---

## अथ व्रणशोथ-चिकित्सा।

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥

---

[illegible]म्। वरुणेत्यादि।—सुश्रुतस्य। वरुणाद्यूषकादिगणौ सौश्रुतौ। स्रुतेऽप्यौ-[illegible]दि।—सुश्रुतस्य। ऊर्द्धस्रवतामपि कादाचित्को साध्यता चिकित्साभिधाना [illegible]मलव्या। मधुशिग्रुद्रुम इति रक्तशोभाञ्जनवृक्षस्य मूलम्। मैरेय मद्यविशेषम्। [illegible] काञ्जिकम् ॥ ११—१८ ॥

प्रियङ्ग्वित्यादि।—सुश्रुतस्य। तिनिशोऽतिमुक्तक त्वचमिति निर्देशात्त्वच-[illegible]त्वाकारान्तो नपुंसकलिङ्गोऽप्यस्तीति गम्यते। चन्द्राटे तु तिनिश धवमिति [illegible]ठा 'श्यते। तिनिशैस्त्ववमिति पाठान्तरे तिनिशस्तिनिश एव। प्रियङ्ग्वादिभि[illegible], द्रवं जलं चतुर्गुणम्। एतच्च तैलं मज्जभवविद्रधौ सुश्रुते पठ्यते ॥ १९ ॥

इति विद्रधिचिकित्सा-विवृतिः।

---

विद्रध्युक्तसंवादात् प्रायेण तुल्योपक्रमत्वात्तदनन्तरं व्रणशोथ उच्यते। आदौ [illegible]म्लापनमित्यादि।—सुश्रुतस्य। अनेन च वाक्येन चिकित्सितस्थानवक्ष्यमाण

पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः॥ १॥
मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम्।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा॥ २॥
कल्कः काञ्जिकसम्पिष्टः स्निग्धः शाखोटकत्वचः।
सुपर्ण इव नागानां वातशोथविनाशनः॥ ३॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा॥ ४॥
न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलैः।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्वापणः स्मृतः।
आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः॥ ५॥
अजगन्धाश्वगन्धा च काला सरलया सह।
एकैषिकाजशृङ्गी च प्रलेपः श्लेष्मशोथहा॥ ६॥
पुनर्नवादारुशिग्रु दशमूलमहौषधैः।

---

यस्योपक्रमाणामन्तर्भावेण सप्तत्वं सुखावबोधाय सप्तस्थाने सुश्रुतेनोक्तम्, तत्र विम्लापनमिह न कवलमङ्गुष्ठादिमर्दनमात्रं परिभाषितं ग्राह्यम्, किन्तु विम्लाप्यतेऽनेनेति व्युत्पत्त्या बाह्यपरिमार्जनरूपं शमनं शोथविलयनकरं प्रलेपपरिषेकाभ्यङ्गादावपि वर्त्तते। अवसेचनमपि शोधनरूपेऽन्तःपरिमार्जने वमनविरेकरक्तमोक्षणादौ वर्त्तते। उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते। एवमपरेऽप्युपक्रमाः शेषेषु यथायोगमन्तर्भाव्याः, किंवा यष्ट्युपक्रमेषु प्राधान्यात् सप्त विम्लापनादयः कथ्यन्ते। विम्लापनादयो भाविव्रणविघातप्रयोजकतया व्रणस्येत्युक्तम्॥ १॥

मातुलुङ्गेत्यादि।—सुश्रुते।—मातुलुङ्गस्य मूलम्। अहिंस्रा कुडकाञ्चन कण्टकाकडाभेदः। कल्क इत्यादौ।—स्निग्ध इति घृतेन। शीतलाश्च गणा इति काकोल्याद्युत्पलादिन्यग्रोधाद्याः सोमृताः। शोथनिर्वापण इति शोथशमन एष एवेति पैत्तिकव्रणशोथविहितः॥ २—५॥

अजगन्धेत्यादौ।—अजगन्धा छागलगन्धेति भानुमती, अन्ये यमानिकामाहुः

कफवातकृते शोथे लेपः कोष्णो विधीयते ॥ ७ ॥
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितं तथा।
न च पर्य्युषितं शुष्यमाणं नेवावधीरयेत् ॥ ८ ॥
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति।
न चापिमुखमालिम्पेत् तेन दोषः प्रसिच्यते ॥ ९ ॥

---

ला अहिंस्रा काकाकडाभेद। सरला सरल एव, एकैशिका त्रिवृदिति भाव, अन्य तु सरला त्रिवृत एकैशिका पाठत्याङ्ग। अजशृङ्गी कर्कटशृङ्गीति नता चन्द्रिका च ॥ ६ ॥ ७ ॥

न रात्रावित्यादि।—न रात्रौ लेपन दद्यादित्यादिना निषेधमुखेन विध्यं प्रदर्शन लेपनस्य सर्वथा निषेधार्थं, प्रलेपनिषेधेन प्रदेहादिविधान रात्रावपि मन्यते, अत्र प्रदेहो वातकफविषय स रात्रावपि दोषोऽविरुद्धत्वात पाचनलेपन्तु पाचक दिव दातव्य। तथा पित्तजे वातपित्तजे च शतधौतघृताभ्यङ्गस्तथा क्षीरशीत सेकश्च निर्वापणतया दीयत एव। तथा व्रणकल्कोऽप्यहोरात्रस्थायित्वम् त एव उक्तञ्च वृत्तरत्ने—"सर्वशस्तु निशा प्राप्य लेपनन्तु निवर्त्तयेत। क्षीरमपि पन हित्वा प्रच्छादनन्तथा' इति। रात्रौ लेपदाने पुन सुश्रुतेन दोष उक्त। न चालेप रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकारप्रवृद्धि' रात्रिस्वाभाविकशैत्यात सङ्गतरोमकूपत्वाच्च पुनरालेपनेनापि व्रणोष्मा वहि निरुद्धः सन्नितरां व्रणं व्रणशोथं वा दाहपाकौ कुर्यादिति भाव। पदेहयोस्तु भेद सुश्रुतेन प्रदर्शिता यथा "प्रलेप शीतस्तनुरविशोषी विशोषी निशोषीति पीडयितव्यं विशोषोत्यर्थ। 'प्रदेहस्तूष्ण शीतो वा बहलो शोषी च।" बहल इति आर्द्रमहिषचर्मप्रमाणोत्सेध प्रलेप। प्रदेहस्तु पेक्षया बहल। शोथे लेपश्च लोमाभिमुख देय। यदाह सुश्रुत,— प्रति लोममालिम्पेत न चानुलोम, प्रतिलोमे हि सम्यगौषधमवतिष्ठते अन ति च लोमकूपे स्वेदवाहिभि शिरामुखैर्वीर्य्य प्राप्नोति' इति। प्रतिलोम- लोमाभिमुखम। न च नैवेति।—प्रतिषेधद्वयेन अवधीरयेदित्यस्य अव दूरीकरणम। तन्त्रान्तरेऽप्युक्त,—"लेपशोषद्व्य दातव्यो न यावच्छुष्कता गतवान्न भवेच्छुष्को भूयो दोष करोति स इति ॥ ८ ॥

वापवादमाह।—शुष्यमाणमित्यादि। उपेक्षेतेति यावच्छुष्कता प्रयाति

स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः।
विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ॥ १० ॥
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
शोथे महति संरब्धे वेदनावति च व्रणे ॥
निवारणाय पाकस्य वेदनोपशमाय च।
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम् ॥ ११ ॥
यो न याति शमं लेपस्वेदसेकावतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ॥ १२ ॥
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ॥१३॥
स चेदेवमुपक्रान्तः शोथो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥ १४ ॥
तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका।

तावत न दूरीकुर्य्यादित्यर्थः। पीडन प्रतीति व्रणपीडनमुद्दिश्य यो लेप इत्य व्रणपीडनलेपम्, स एव य शुष्क सन व्रणमुख पीडयित्वा पूय स्रावयति। ता मुखन। दोष इति पूय ॥ ९ ॥

कठिनशोथे पारिभाषिकविम्लापनमाह। स्थिरानित्यादि।—सुश्रुतस्य नाड्या वेणुदण्डेन, तलेन करतलेन। आदावेवेति उत्पन्नमात्रे। सुश्रुतेऽप्युक्तम् "अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्" इति। शोथ इति व्रणपूर्वरूपशो संरब्ध इति शोथे, एतच्च व्रण इत्यनेन योज्यम्। शोथ इत्युक्तापि पुनः संरब्ध वचनम् एतादृशसशोथे व्रणे विशेषेण रक्तस्रावविधानार्थं; सुश्रुतेऽप्युक्तम्—"स कठिने चापि सरक्ते वेदनावति। सविषे च विशेषेण व्रणे विस्रावण हित अन्ये तु पच्यमानावस्थव्रणविषयकं संरब्ध इत्यादिवचनं संयमित्याहुः। उपक्र न्तरापेक्षया रक्तमोक्षणस्य प्रकर्षमाह यो न यातीत्यादि। उपनाहैरिति शोथ बन्धनैः। पक्वस्य पाटनमिति दारणौषधैः शस्त्रैर्वा ॥ १०—१४ ॥

सुखोष्णः शोथपाकार्थमुपनाहः प्रशस्यते ॥ १५ ॥
सतिला सातसीबीजा दध्यम्ला शक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ १६ ॥
बालवृद्धासहक्षीणभीरूणां योषितामपि।
मर्म्मोपरि च जाते तु पक्वे शोथे च दारुणे ॥ १७ ॥
गवां दन्तं जले घृष्टं विन्दुमात्रं प्रलेपनात्।
अत्यर्थकठिने चापि शोथे पाचनभेदनम् ॥ १८ ॥
कटुतैलान्वितैर्लेपात् सर्पनिर्म्मोकभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥ १९ ॥
चिरविल्वाग्निकौ दन्तो चित्रको हयमारकः।
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ २० ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणः परः ॥ २१ ॥

---

तानेवोपनाहानाह तैलेनेत्यादि।—तैलेन वाते, कफे च सर्पिषा, पित्ते रक्ते च [illegible]भ्यां वेति तैलसर्पिर्भ्यां मिलिताभ्याम्। चतुर्ष्वेति दोषभेदेन विकल्पो [illegible] [illegible]ह्य ॥ १५ ॥

[illegible]तिलेत्यादौ।—किण्वं सुराबीजम्। चय इत्युपचयः। गण्डस्य व्रणस्य। [illegible]कोप इति प्रकोपहेतुः पूयरूपो दोष। चिरविल्वेत्यादि।—सुश्रुतस्य। चिर-[illegible]ल्वो वृहत्करञ्जः, अग्निको लाङ्गलकी, हयमारक करवीरः, एषा मूलं वृद्धवाग्-[illegible]टसंवादात्, एते च चिरविल्वादयो व्यस्ताः समस्ता वा योज्याः। एतत् सर्वं [illegible]स्य सुकुमारविषयत्वेनोक्तम्। असुकुमारविषयमाह क्षारेत्यादि। क्षारसाधन-[illegible]व्याणि मुष्ककपलाशादीनीत्यर्थः, क्षारो वेति तद्द्रव्यकृतः, किन्तु वाग्भटे चरके [illegible] क्षाररूपं क्षारद्रव्यरूपञ्च दारणं सुकुमारविषयत्वेनैवोक्तम् असुकुमारविषयन्तु [illegible]शस्त्रमेवेति, यथा—"सुपक्वे पिण्डिते शोथे पीडनैरुपपीडिते। दारणं दारणा-[illegible]र्हं सुकुमारस्य चेष्यते। गुग्गुल्वतसीगोदन्तस्वर्णक्षीरीकपोतविट्। क्षारौषधानि [illegible]ाराश्च पक्वशोथप्रभेदनाः" इति। तथा चरकेऽपि 'समाष गुग्गुलुः सौधं पयी [illegible]चकपोतयोः। विट् पलाशभवः क्षारो हेमक्षीरी सुकूलकः।' इत्युक्तो भेषज-

द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि निपीड़नम्।
यवगोधूममाषाणां चूर्णानि च समासतः॥ २२॥
ततः प्रक्षालनं क्वाथः पटोलीनिम्बपत्रजः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भवः॥ २३॥
पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके॥ २४॥
आरग्वधादिको योज्यः कफजे सर्वकर्मसु॥ २५॥

तिलाष्टकः—

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधूकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः॥ २६॥
निम्बपत्रं तिला दन्ती त्रिवृत् सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी॥ २७॥
एकं वा शारिवामूलं सर्वव्रणविशोधनम्॥ २८॥
पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम्।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः॥ २९॥
त्रिफला खदिरो दार्वी न्यग्रोधादिर्बलाकुशाः।
निम्बकोलकपत्राणि कषायः शोधने हितः॥ ३०॥

---

गच पक्वशोथप्रभेदन। सुकुमारस्य कृच्छ्रस्य शस्त्रन्तु परमुच्यते" इति सुकुमारस्येति पूर्वेण सम्बध्यते, कृच्छ्रस्येत्यत्रासुकुमारस्य शस्त्र पर भेदनमिति स इति दीपिका च। तस्मात् चारद्रव्यं चारस्य सुकुमारविषयोऽपि ज्ञेय॥१६—

पीडनद्रव्याण्याह द्रव्याणामित्यादि। पिच्छिलानामिति शेलुशाल्मलीप्र नाम्, इदञ्च पीडनं मर्मादिसमीपस्थसूक्ष्मसुखव्रणविषय ज्ञेयम्। उक्त हि भट—"सूक्ष्माननाश्चाशयान् सोत्सङ्गान् मर्मगानपि। निःशेषं पीडनद्रव्यै न्तात् परिपीड़येत्" इति। पटोलीपत्र पटोलपत्रस्येव। अविशुद्ध इति न्यग्रोधादिगण सौश्रुत। सर्वकर्मसु प्रक्षालनलेपनादिषु। शारिवामूलम मूलम्। पटोली पटोलपत्रम्। पटु अत्र सैन्धवलवणम्॥ २२—२९॥

त्रिफलेत्यादौ।—न्यग्रोधादीति—"न्यग्रोधोडुम्बराश्वत्थकदम्बप्लक्षवेतस।

अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कः संरोपणः कार्य्यस्तिलानां मधुकान्वितः॥ ३१॥
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः॥ ३२॥
पूर्वाभ्यां सर्पिषा वापि युक्तश्चाप्युपरोपणः॥ ३३॥
निम्बपत्रतिलैः कल्को मधुना च्तशोधनः।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः॥ ३४॥
निम्बपत्रघृतक्षौद्रदार्व्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणान्॥ ३५॥
सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन॥ ३६॥
मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता॥ ३७॥
मानुषशिरःकपालं तदस्थि वा लेपनं मूत्रेण।
रोपणमिदं च्तानां योगशतैरप्यसाध्यानाम्॥ ३८॥

---

गौरार्ककटजाः कषाया व्रणरोपणा” इत्यनेन शोथहरोपक्रमे चरकोक्तं ग्राह्यम्, तस्योपयोगस्य चरकोक्तत्वात्; किंवा पञ्चवल्कलमेव ग्राह्यम्। निम्बकोलकपत्राणि कोमलनिम्बपत्राणीत्यर्थ इति दीपिका। अन्ये तु कोलकी वदरीत्याहुः, युक्तमिद वाग्भटप्रामाण्यात्। अन्ये तु कुलकपत्राणीति पठित्वा पटोलपत्राणीति व्याच क्षते॥ २०॥

अपेतेत्यादि।—वाग्भटस्य। मधुकान्वितो यष्टिमधुयुक्तः। अत्र तिलजां मधुसंयुत इति पाठः सुश्रुतबहुपुस्तकेषु दृश्यते, वाग्भटे तु सर्वत्रैव मधुकान्वित इति। उभयमपि प्रमाणं स्मृतिद्वैधवत्॥ ३१॥

निम्बपत्रेत्यादि।—पूर्वोक्तयष्टिमधुयुक्ततिलानां कल्क एव निम्बपत्रमधुभ्यां युक्त इत्यर्थः। पूर्वाभ्यामिति यष्टीमधुयुक्ततिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तो रोपणः, अपिशब्दात् शोधनोऽपि भवतीत्यर्थः। उक्तं तिलकल्कविधिं यवकल्केऽप्यतिदिशति यवकल्केऽप्ययं विधिरिति॥ ३२—३४॥

निम्बपत्रघृतेत्यादि।—एभिर्द्रव्यैर्वस्त्रमालिप्य वर्त्तिः कार्य्या; वर्त्तिदानविषयो यथा सुश्रुते यथा “अन्तःपूयानणुमुखान् गम्भीरान् मांससंश्रितान्। शोधनद्रव्य-

व्रणान् विशोधयेदर्व्वा सूक्ष्मास्यान् सन्धिमर्मगान्।
अभयात्रिवृतादन्ती-लाङ्गलीमधुसैन्धवैः॥ ३९॥
सुषवीपत्रपत्तूरकर्णमोटकुठारिकाः।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः॥ ४०॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः।
धातकीचूर्णलोध्रैर्वा तथा रोहन्ति ते व्रणाः॥ ४१॥
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमांश्चैव भृष्टान् पयसि निर्वृतान्॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक्॥ ४२॥
वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान्।
यवाज्यभूर्जमदन-श्रीवेष्टकसुराह्वयैः॥ ४३॥
श्रीवासगुग्गुल्वगुरु-शालनिर्य्यासधूपिताः।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्राववेदनाः॥ ४४॥

---

युक्ताभिर्वर्त्तिभिः समुपाचरेत्" इति। तिलाना कल्को वेति लेपविधया। सप्तच्छ सप्तपर्णस्तस्य चौरम्। मानुषशिर.कपालन्तु पुराण याह्यमित्याहु। मूत्र गवि गोमूत्रेण॥ ३५—३८॥

व्रणानित्यादि।—वाग्भटस्य। अभयेत्यस्य स्थाने क्वतयेन्येव पाठो वाग्भटस्य पुस्तकेषु दृश्यते। सुषवी कारवेल्लः, पत्तूर शालिञ्च., कर्णमोट स्वनामख्यात कठारका कुठारिया, कुठेरक इति पाठे पर्य्यायः॥ ३९॥ ४०॥

पञ्चवल्कलेत्यादि।—चरकस्य। शुक्तिर्वदरी तस्यास्त्वक्, शुक्तिचूर्णसमायुतैरि पञ्चवल्कलचूर्णैरित्यस्य विशेषणम्। उमा अतसी। पयसि निर्वृतानिति द निर्वापितान्। वाताभिभूतानित्यादि।—वाग्भटस्य। सास्रावान् अन्यस्रावा भूर्जो भूर्जग्रन्थि.। मदनः सिक्थक इति हन्दटिप्पनी। श्रीवेष्टको नवनीतखोटि सुराह्वयं देवदारु। श्रीवासेत्यादौ।—श्रीवासो नवनीतखोटी, न च पूर्वा पौनरुक्त्यम्, अस्य वाक्यस्य तन्त्रान्तरीयत्वात्। हन्दटिप्पनिकायान्तु पौनरुक्त्यमाश पूर्वोक्तश्रीवेष्टकशब्देन कुन्दुरुरिति व्याख्यातम्। शालनिर्यासो धूनक.॥४१—४४॥

तिलाः पयः सिता क्षौद्रं तैलं मधुकचन्दनम्।
लेपेन शोथरुग्दाहरक्तं निर्वापयेद्व्रणान् ॥ ४५ ॥
पित्तविद्रधिवीसर्प-शमनं लेपनादिकम्।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः ॥ ४६ ॥
महाराष्ट्रीजटालेपो दग्धे पिष्टावचूर्णनम्।
जीर्णगेहतृणाच्चूर्णं दग्धव्रणहरं परम् ॥ ४७ ॥

जीरकाद्यं घृतम्—

जीरकल्कं पक्वं पश्चात् सिक्थकसर्जरसमिश्रितं हरति।
घृतमभ्यङ्गात् पावकदग्धजदुःखं क्षणार्द्धेन ॥ ४८ ॥
अन्तर्दग्धकुठारको दहनजं लेपाद्विहन्ति व्रणम्।
अश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्डनात् ॥ ४९ ॥
अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितम् ॥ ५० ॥
पिष्टा शाल्मलितूलकैर्जलगता लेपात् तथा वालुका ॥ ५१ ॥

---

तिला इत्यादौ।—पयःपेषणार्थम्, सिता शर्करा, क्षौद्रतैलाभ्यां सन्धाय लेपा देय ॥ ४५ ॥

इदानीं शारीरव्रणचिकित्सामभिधाय व्रणत्वसाजात्यादत्रैव व्रणाधिकारे आगन्तुव्रणचिकित्साभिधानाय प्रकरणमारभ्यते। अत्र प्रथममग्निदग्धव्रणचिकित्सामाह पित्तेत्यादि।—महाराष्ट्रीजटा महाराटीमूलम् अयमेको योगः। पिष्ट पिष्टकमेव। दग्धपिष्टकचूर्णेनावचूर्णनमिति द्वितीयः ॥ ४६ ॥ ४७ ॥

जीरकेत्यादौ।—जीरकस्य कल्कः, जलं चतुर्गुणमर्थात्, पश्चात् सिद्धे च सिक्थसर्जरसयोः प्रक्षेपः ॥ ४८ ॥

अन्तरित्यादौ।—कुठारकः कुडालिया, स च स्थाल्यामन्तर्धूमं दग्धव्यः। गुण्डनादित्यवचूर्णनात्। गण्डूपदैः किञ्चुलकैः कल्कः, जलं चतुर्गुणमनुक्तत्वादिति निश्चलः। जलं विना चटचटावधिः पाक इत्यन्ये। शाल्मलीतूलकैरिति सहार्थे तृतीया ॥ ४९—५१ ॥

सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ।
यष्टीमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा ॥ ५२ ॥
बुध्वागन्तुव्रणं वैद्यो घृतक्षौद्रसमायुतम् ।
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ॥ ५३ ॥
कान्तक्रामुकमेकं सुश्लक्ष्णं गव्यसर्पिषा पिष्टम् ।
शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देहः ॥ ५४ ॥
अपामार्गस्य संमिश्रं पत्रोत्थेन रसेन वा ।
सद्योव्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ५५ ॥
कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति ।
सद्यःशस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ५६ ॥
शरपुङ्खा काकजङ्घा प्रथमं महिषीसुतात् ।
मलं लज्जा च सद्यस्कव्रणघ्नं पृथगेव तु ॥ ५७ ॥
शुनो जिह्वाक्रनस्त्वूर्णः सद्यःक्षतविरोहणः ॥ ५८ ॥

---

इदानीं सद्य इत्यादिना सद्योव्रणचिकित्सामाह । सद्य इति सप्ताहाभ्यन्तर यष्टीमधुकयुक्तेनेति यष्टीमधुक कल्कीकृत्य चतुर्गुणजलेन यथाविधि घृत साधनीयम यदि पुनस्त्वरया यथाविधि घृतमिद पक्तु न शक्यते तदा घृत पल २, जल पल ८ यष्टीमधु कर्ष २, किञ्चित पक्वावतार्य व्रण संचयेदित्याहु । नातिशीतेनेति कदुष्णेनेत्यर्थः, किञ्चिदुष्णेनेति पाठान्तरम् ॥ ५२ ॥

बुध्वेत्यादि ।—चन्द्राटस्य । बुध्वेत्यत्र बध्वेति पाठः साधुः । बन्धो हि सद्योव्रणेषु छिन्नभिन्नादिषु सन्धानजनकतया प्रधानम्, उक्तं हि "बन्धः प्रधान स्त्रयुक्तिरत्र शरीरपाणमस्थिसन्धिस्थैर्य्यञ्च" इति । चन्द्राटादावयमेव पाठो दृश्यते । बुध्वेत्यादिपाठे घृतक्षौद्रसमायुतमित्यनन्तर कृत्वेति शेषः, किंवा प्रयुञ्जीतेति क्रियाविशेषणम् । कान्तेत्यादौ ।—कान्तक्रामुकं भद्रमुस्तकं, घृतमत्र शतधौतमित्युपदिशन्ति एवं वक्ष्यमाणेऽपि ॥ ५३—५५ ॥

कर्पूरेत्यादि ।—सघृतं यथा स्यात् तथा कर्पूरपूरितं, तेन कर्पूरचूर्णेन घृतमिश्रेण खड्गादिक्षतं प्रपूर्य्य बध्नीयादित्यर्थः ॥ ५६ ॥

शरपुङ्खेत्यादि ।—महिषीसुतस्य मलं महिषीसुतमलम् । घृततैलवसामज्जभि

चक्रतैलं क्षते विद्धे रोपणं परमं मतम् ॥ ५९ ॥
यवक्षारं भक्षयित्वा पिण्डं दद्याद्व्रणोपरि ।
शृगालकोलिमूलेन नष्टशल्यं विनिःसरेत् ॥ ६० ॥
लाङ्गलीमूललेपाद्वा गवाक्षीमूलतस्तथा ॥ ६१ ॥
क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।
कषायशीतमधुरस्निग्धलेपादयो हिताः ॥ ६२ ॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम् ॥ ६३ ॥
क्वाथो वंशत्वगेरण्ड-श्वदंष्ट्राश्मभिदाकृतः ।
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ ६४ ॥

---

तत्पर्यं दधि। मासधावनतोयाभमितिवत् अयं प्रयोगः समर्थनीयः। अभिनवप्रसूतमहिषीशावकस्य प्रथमं मलमित्यर्थः। लज्जालाजान् आर्द्रीकृतसज्जकर्मणि तदुत्कलिकाया दर्शनात्, अन्ये तु वराहक्रान्तामाहुः। शण इति कुक्कुरस्य तन्त्रान्तरसंवादात्, सर्वाङ्गकृष्णकुक्कुरीजिह्वेत्यन्ये। चक्रतैलं तत्कालचक्रोद्धृतमभ्रष्टसर्षपतैलम्। अन्ये तु चक्रकाष्ठाङ्गवतैलमाहुः ॥ ५७—५९ ॥

अन्तःशल्यचिकित्सामाह यवक्षारमित्यादिना तथेत्यन्तेन। यवक्षारं कर्ष १ उष्णजलं पल २ आलोड्य पीत्वा नष्टशल्यव्रणोपरि शृगालकोलिमूलं पिष्ट्वा पिण्डो देयः। शृगालकोली शियाकुल इति ख्यातः बदरीभेदः। एवं लाङ्गलीमूल-गोरक्षकर्कटीमूलाभ्यामपि ॥ ६० ॥ ६१ ॥

क्षतेत्यादि।—वाग्भटस्य। कषाय इति रसः। आमाशयस्थ इति सुश्रुतस्य। आमाशयस्थमपक्वाशयस्थम्। अत्र पक्वाशयस्थं रक्तं विरेचनेन सुखेन निर्हर्तुं शक्यत इत्यभिप्रायेण विरेचनविधानं, न तु पित्तप्रत्यनीकतया, पक्वाशयस्य वातस्थानत्वात्। अन्ये तु पक्वशब्देन पाक उच्यते, तेन पक्वाशयस्थ इत्यत्र पच्यमानाशयस्थ इत्यर्थः, तत्र हि पित्तस्थानत्वेन विरेचनमौपयिकमिति व्याचक्षते ॥ ६२ ॥ ६३ ॥

यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥ ६५ ॥
अत्यर्थमस्रं स्रवति प्रायशो यत्र विद्यते ।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥
स्नेहपानं परीषेकं स्नेहलेपोपनाहनम् ।
स्नेहवस्तिञ्च कुर्वीत वातघ्नौषधसाधिताम् ॥ ६६ ॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ।
सप्ताहात् परतः कुर्य्याच्छारीरव्रणवत् क्रियाम् ॥ ६७ ॥
करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ।
कलायविदलीपत्रकोशाम्रास्थि च पूरणात् ।
सुरसादिरसैः सेको लेपनं स्वरसेन वा ॥ ६८ ॥
निम्बसम्पाकजात्यर्कसप्तपर्णाश्वमारकाः ।
क्रिमिघ्ना मूत्रसयुक्ताः सेकालेपनधावनैः ॥ ६९ ॥
प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेद् व्रणात् ।
लसुनेनाथवा दद्याल्लेपनं क्रिमिनाशनम् ॥ ७० ॥

---

क्वाथ इत्यादौ वशःक वशनीली । अश्मभित पाषाणभेदी । हिङ्गु सैन्धवञ्च प्रक्षेप्यम्, अयं योग प्रभावात रक्तं स्रावयति ॥ ६४ ॥ ६५ ॥

अत्यर्थमित्यादि ।--वागभटस्य । विद्यत इति विविधच्छते छिन्नभिन्नादौ । स्नेह लेपोपनाहनमिति स्नेहयुक्तो लेपः, स्नेहयुक्तमुपनाहश्च, किन्तु वागभटे स्वेदलेपोपनाहनमिति पाठः । तन्मते स्वेदो धान्यस्वेदः, उक्तं हि सुश्रुते 'धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च'' इति । वातघ्नौषधं भद्रदार्वादि । सद्योव्रणोपाख्यानमुपसंहरति इतीत्यादि ।—वागभटस्य ॥ ६६ ॥ ६७ ॥

करञ्जेत्यादि ।—करञ्जादिपत्रस्वरसः । कलायविदली स्वनामख्याता लता । कोशाम्र कुसुम इति ख्यात, तस्य फलास्थि, आभ्यां सम्पिष्टाभ्यां प्रत्येकं व्रणावकाशपूरणम् । सुरसादिगणः सौश्रुतः । स्वरसेनेति पर्णासेन । निम्बेत्यादौ—जात्याः पत्रम्, निम्बादीनान्तु त्वक्, एते च निम्बादयो यथालाभं मूत्रपिष्टाः सेकादौ

त्रिफलागुग्गुलुः—

ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणा महान्तः सरुजाः सशोथाः ।
प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिं त्रिफलारसेन ॥ ७१ ॥

वटिकागुग्गुलुः—

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
नियन्त्रणा विबन्धघ्नो व्रणशोधनरोपणः ॥
अमृतागुग्गुलुः शस्तो हितं तैलञ्च वज्रकम् ॥ ७२ ॥

वटिकागुग्गुलुः—

विडङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम् ।
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजनः ।
दुष्टव्रणापचीमेहकुष्ठनाड़ीव्रणापहः ॥ ७३ ॥

अमृतावटिकागुग्गुलुः—

अमृतापटोलमूलत्रिफलात्रिकटुक्रिमिघ्नानाम् ।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ॥
प्रतिवासरमेकैकां गुड़िकां खादेदग्निपरिमाणाञ्च ।
जेतुं व्रणान् वातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च ॥७४॥

प्रयोज्याः । मांसपेशी मांसखण्डः, शवामिषगन्धात् क्रिमय उपर्य्युपरि सञ्चरन्तीति भावः ॥ ६८—७० ॥

बहिःपरिमार्जनमुक्ता अन्तःपरिमार्जनमाह ये इत्यादि ।—कोष्ठानुरूपोऽत्र गुग्गुलु प्रक्षेप्यः । त्रिफलाचूर्णसंयुक्त इति त्रिफलाचूर्णेन समेन युक्तो गुग्गुलुः, घृतमनुरूपं दत्त्वा विमृद्य चूर्णञ्च प्रक्षिप्य वटकी कर्त्तव्या एवं सर्व्वत्र वटकाविधानं । यन्त्रणा आहाराचारनियमः ॥ ७१ ॥ ७२ ॥

अमृतागुग्गुलुर्वातरक्तोक्तः । वज्रकतैलञ्च कुष्ठे वक्ष्यमाणम् । वटिकागुग्गुलुना

जातिकाद्यं घृतम्—

जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
कञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुष्यन्ति रोहन्ति च ॥७५॥

गौराद्यं घृतम्—

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणीम्।
मधूच्छिष्टं मधूकञ्च महामेदा तथैव च।
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ॥
एष गौरो महावीर्य्यः सर्वव्रणविशोधनः।
आगन्तुसहजाश्चैव सुचिरोत्थाश्च ये व्रणाः।
विषमामपि नाडीञ्च शोधयेच्छीघ्रमेव च ॥ ७६ ॥
गौराद्यं जातिकाद्यञ्च तैलमेवं प्रसाध्यते।
तैलं सूक्ष्मानने दुष्टव्रणे गम्भीर एव च ॥ ७७ ॥

करञ्जाद्यं घृतम्—

नक्तमालस्य पत्राणि तरुणानि फलानि च।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥

---

गुग्गुलुना समसिति विडङ्गादिचूर्णसमेन। अमृतावटिकागुग्गुलु स्पष्ट। जाती त्यादि।—वाग्भटस्य। पत्र जात्यादीना त्रयाणा, दार्वी दारुहरिद्रा, निशा हरिद्रा, अभयमुशीर, नक्ताह्वबीज करञ्जबीज, गतिर्नाडी। गौराद्यघृते गौरा हरिद्रा प्रियङ्गुर्वा व्यवहारस्तु हरिद्रयैव। हरिद्रा दारुहरिद्रा, जातीनिम्बपटोलाना पत्रं करञ्जस्य फल, मधक मधूकपुष्प मधूकञ्चेत्यस्य स्थाने समधुकमिति पाठे यष्टीमधुकस्य भागद्वयं द्विपाठात। पञ्चवल्कलस्य तोयेन क्वाथेन। एष गौर इति भीमो भीमसेन इतिवत्। गौराद्योऽय महावीर्य्य इत्यपि पाठः। करञ्जघृत-

द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
मञ्जिष्ठा चन्दनोशीरमुत्पलं शारिवे त्रिवृत्।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम्।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम्॥ ७८ ॥

प्रपौण्डरीकाद्यं घृतम्—

प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः।
सहरिद्रैः शृतं सर्पिः सक्षीरं व्रणरोपणम् ॥ ७९ ॥

तिक्तकाद्यं घृतम्—

तिक्तासिक्थनिशायष्टीनक्ताह्वफलपल्लवैः।
पटोलमालतीनिम्बपत्रैर्व्रण्यं घृतं स्मृतम् ॥ ८० ॥

सिन्दूरहिङ्गुविषकुष्ठरसोनचित्र-
वाणाङ्घ्रिलाङ्गलिककल्कविपक्कतैलम्।
प्रासादमन्त्रयुतफुत्कृततनुसफेनो
दुष्टव्रणप्रशमनो विपरीतमल्लः ॥
खड्गाभिघातगुरुगण्डमसूपदंश-
नाड़ीव्रणव्रणविचर्च्चिककुष्ठपामाः।
एतान्निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य ॥ ८१ ॥

---

र्थविधिना तैलद्वयमपि साध्यमित्याह गौराद्यमित्यादि। तैलविषयमाह तैल मित्यादि। नक्तमालस्येत्यादौ। पत्राणि तरुणानीत्यन्वय। सुमना जाती। उत्पल नीलोत्पलम्। शारिवे अनन्तमूलश्यामलते। प्रपौण्डरीकेत्यादौ क्षीरमेव चतुर्गुणम् ॥ ७३—७९ ॥

तिक्तेत्यादौ पत्रशब्दस्त्रिभिः सम्बध्यते, जलं चतुर्गुणम्। तैलमाह सिन्दूरेत्यादि। चित्रको रक्तचित्रकः, वाणाङ्घ्रि शरपुङ्खामूलं न तु भिण्टीमूलम्, जलं

अङ्गारकं तैलम्—

कुठारकात् पलशतं क्वाथयेन्नल्वणेऽम्भसि ।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत् ॥
कल्कैः कुठारगर्भप्रोष्ठिकामर्चिकायुतैः ।
एतदङ्गारकं तैलं व्रणशोधनरोपणम् ॥
नाडीषु परमाभ्यङ्गो निजास्वागन्तुकीषु च ॥ ८२ ॥

प्रपौण्डरीकाद्यं तैलम्

प्रपौण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने ।
सिद्धमेतैः समं तैलं तत् परं व्रणरोपणम् ॥ ८३ ॥

दूर्वाद्यं तैलं घृतञ्च

दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन च ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ।
येनैव विधिना तैलं घृतं तेनैव साधयेत् ॥
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत् ॥ ८४ ॥

[illegible] ‘सिन्दूरिका [illegible] रसेनाग्रपुष्पकणानल ह्यादयमूलकल्के । [illegible] सिद्धमिति सिद्धफल प्रदिष्टम्’ इति [illegible] ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः शिवाय स्वाहेति [illegible] ॥ ८० । ८१ ॥

कुठारकलादि [illegible] कुठारक [illegible] प्रोष्ठिका शफरीमत्स्य पोठिया नाम्ना ख्याता, [illegible] । मर्चिका कीटविशेष प्रसिद्ध एव, पश्चा खियामत्स्य इत्यन्ये ॥ ८२ ॥ ८३ ॥

दूर्वेत्यादि । योगद्वयम् । अत्र पूर्वा एव कल्कौ बोद्ध्यौ । चकारद्वयात् काम्पिल्लकदार्वीत्वचौ मिलित्वा कल्कः पाकश्च जलेन चारपादिसंवादात् । अपरे तु “दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा” इति पठित्वा दूर्वास्वरसेन अकल्कमेव तैलं साध्यम्, काम्पिल्लकेन वा दार्वीकल्केन वा जलेन [illegible] तैलद्वय मित्याहुः । तैलसाधनविधि घृतेऽप्यतिदिशति येनेत्यादि । अयञ्च सर्वतैलविध्यतिदेशः । अन्ये तु दूर्वादितैलविध्यतिदेश इत्याहुः ॥ ८४ ॥

मञ्जिष्ठाद्यं घृतम्—

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥ ८५ ॥

पाटलीतैलम्—

सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकम्।
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम् ॥ ८६ ॥

चन्दनाद्यं यमकम्—

चन्दनं वटशुङ्गश्च मञ्जिष्ठा मधुकं तथा।
प्रपौण्डरीकं दूर्वा च पत्तङ्गं धातकी तथा ॥
एभिस्तैलं विपक्तव्यं सर्पिःक्षीरसमायुतम्।
अग्निदाहव्रणे श्रेष्ठं म्रक्षणाद्रोपणं परम् ॥ ८७ ॥
मनःशिलाले मञ्जिष्ठा सलाक्षा रजनीद्वयम्।
प्रलेपः सघृतक्षौद्रस्त्वग्निशुद्धिकरः परः ॥ ८८ ॥
अयोरजः सकाशीशं त्रिफलाकुसुमानि च।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ ८९ ॥
कालीयकलताम्राम्रास्थिहेमकालारसोत्तमैः।
लेपः सगोमयरसः सवर्णकरणः परः ॥ ९० ॥
चतुष्पदां हि त्वग्लोमखुरशृङ्गास्थिभस्मना।

---

मञ्जिष्ठामित्यादौ।—जलं चतुर्गुणम्। चन्दनाद्ययमके तैलघृताभ्यां समाभ्यां मिलित्वा प्रस्थः। पत्तङ्गं रक्तचन्दनम्। क्षीरमेवात्र चतुर्गुणम्। तैलमिति लमवमेव सर्वत्र विशेषो[illegible]निना ॥ ८५–८७ ॥

मनःशिलेत्यादिना।—सावर्ण्यार्थमुपक्रममाह। अयोरज इत्यादौ—काशीशं तकाशीशम्। त्रिफलाकुसुमानि हरीतक्यादितरुकुसुमानि। कुसुमाभावे फलेन व्यवहारः ॥ ८८ ॥ ८९ ॥

कालीयकेत्यादौ।—कालीयकं कालीयाकाष्ठम्, लता प्रियङ्गुः दूर्वेत्यन्ये, हेम

श्लक्ष्णा चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥ ९१ ॥
व्रणग्रन्थिं ग्रन्थिवच्च जयेत् क्षारेण वा भिषक् ॥ ९२ ॥
इति व्रणशोथचिकित्सा।

---

## अथ नाड़ीव्रण-चिकित्सा।

नाड़ीनां गतिमन्विष्य शस्त्रेणापाद्य कर्मवित्।
सर्वव्रणक्रमं कुर्य्याच्छोधनं रोपणादिकम् ॥
नाड़ीं वातकृतां साधुपाटितां लेखयेद्भिषक्।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ १ ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाद्वयैः ॥ २ ॥

---

नागकेशरचूर्णम्, कान्ता मञ्जिष्ठा, रसोत्तमं पारदं घृतमित्यन्ये। गोमूत्रेण पेषणार्थम्। चतुष्पदामित्यादि सुगमम्। व्रणग्रन्थिमिति।—दृढतया मज्जामांसग्रन्थिमित्यर्थः ॥ ९०—९२ ॥

इति व्रणग्रन्थिसद्योव्रणाधिकारविवृतिः।

---

व्रणत्वसाजात्यान्नाडीव्रणचिकित्सामाह नाडीनामित्यादि।—गतिमिति। पथ गतिम्। आदिशब्देनोत्सादनावसादनसवर्णकरणादयो गृह्यन्ते। साधुपाटनं सूपनाहपूर्वकम्। तदुक्तं वाग्भटे 'उपनाह्यानिलान्नाडीं पाटितां साधु लेपयेत्। प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवैः' इति। अतएव वचनात् सैन्धवयोगादप्ययं लेपो बोध्यः। प्रत्यक्पुष्पी अपामार्गः तस्य बीजम्। लेखयेदिति क्षारेण प्रतिसारयेदित्यर्थः। एतच्च लेखनयोग्यव्रणं प्रति बोध्यम्। उक्तं हि "उत्सन्नान् स्थूलपर्य्यन्तानुन्नतान् कठिनान् व्रणान्। किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान्" इति ॥ १ ॥

पैत्तिकीमित्यादि।—नागदन्ती स्थूलमूला दन्त्येव। "पित्तजां निशामञ्जिष्ठानागदन्तीतिलैः समैः" इत्यायुर्वेदसारदर्शनान्निशाद्यैरित्यत्र निशायुतैरिति केचित् पठन्ति, तन्न, विशेष्यस्याश्रवणात् निशिशब्देन हरिद्राया अनभिधानाच्च, किं-

श्लेष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥ ३ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥ ४ ॥
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥
घोण्टाफलत्वग्‌लवणं सलाक्षं पूगात् फलञ्चालवणञ्च पत्रम् ।
स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥६॥

---

मिश्रोऽयं तत्र पाठ इति योगान्तरमेतत्। तथा वागभटेऽपि निशाद्वयैरित्येव पठ्यते। वृन्देऽपि तथा। सुश्रुते तु हरिद्राद्वयव्यतिरेकेणाप्ययं योगः ॥ २ ॥

श्लेष्मिकीमित्यादौ।—निकुम्भो दन्ती, अरिष्टो निम्बः, अत्र यष्ट्याह्वस्थाने सौराष्ट्रीयोगादप्ययं योगः। उक्तं हि वाग्भटे—"श्लेष्मिकीं तिलसौराष्ट्री-निकुम्भारिष्टसैन्धवैः" इति ॥ ३ ॥

शल्यजामित्यादि—वाग्भटस्य। छिन्नशोधितामिति आदौ छिन्नामिति पाटितां पश्चात् शल्यं निर्हृत्य शोधितामित्यर्थः। सुश्रुतेऽप्युक्तं "नाडीं तु शल्यप्रभवां विदार्य निर्हृत्य शल्यं प्रविशोध्य मार्गम्। सन्धुक्षणं घृतप्रगाढं दत्त्वा तिलान् क्षौद्रयुतान् प्रलेपयेत्" इति ॥ ४ ॥

आरग्वधेत्यादि।—आरग्वधस्य पत्रं, काला कालाकडागल न तु मञ्जिष्ठा अन्यकर्त्तृकस्यैव दुष्टव्रणहन्तृत्वात्। सूत्रवर्त्तिरिति गोमूत्रकृता वर्त्तिः। शोनालुपात, हलुदि, कालाकडामूल एषां प्रत्येक चूर्ण मा ८, घृत कर्ष १, मधु कर्ष १, गोमूत्र पल १, एतत् सर्व पक्त्वा सधसैन्धवयोर्वर्त्तिवद् वर्त्तिं कार्यं व्याख्यानम्, पाकमन्तरेण वर्त्तिकरणस्याशक्यत्वात्। सूत्रवर्त्तिरिति पाठे गोमूत्रलिप्ता सूत्रवर्त्तिरित्यर्थः। वृद्धास्तु पूर्ववैव व्यवहरन्ति ॥ ५ ॥

घोण्टेत्यादि। सुश्रुतस्य। घोण्टा अरण्यबदरं, अस्याः फलं त्वक् च। लवणं सैन्धवम्। लाक्षा प्रसिद्धैव। पूगात् फलमिति शुष्कपूगफलम्। आलवणञ्च पत्रमिति अलवणा ज्योतिष्मती, अस्याः पत्रमालवणम्। वाग्भटेऽप्युक्तं—"घोण्टा-फलत्वग्लवणं सलाक्षं पूगात् फलञ्चालवणञ्च पत्रम्। स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम्" इति। अन्ये तु लाक्षां ज्योतिष्मतीपत्रञ्च न पठन्ति, मदनफलञ्च पठन्ति; यथा,—"घोण्टाफलत्वङ्मदनात् फलानि पूगस्य च त्वग्लवणञ्च

वर्त्तीकृतं माक्षिकसम्प्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा।
दुष्टव्रणे यद्विहितञ्च तैलं तत् सेव्यमानं गतिमाशु हन्ति ॥७॥
जात्यर्कसम्पाककरञ्जदन्तीसिन्धूत्थसौवर्चलयावशूकैः।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्टा सह चित्रकेण ॥८॥

माहिषदधिकोद्रवान्नमिश्रं हरति चिरविरूढ़ाञ्च।
भुक्तं कङ्गुनिकामूलचूर्णमतिदारुणां नाड़ीम् ॥९॥
कृशदुर्बलभीरूणां गतिर्मर्माश्रिता च या।
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥१०॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।
सूचीं निदध्याद्गत्यन्ते चोन्नाम्य चाशु निर्हरेत् ॥

---

सुश्रुतम्। "स्नुह्यर्कदुग्धेन सहैव कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम्" इति एतत् सर्वं समभागं कृत्वा किञ्चित् सैन्धवं दत्त्वा स्नुहीक्षीरार्कक्षीरजलैराप्लाव्य पक्वा वर्त्तिः कार्य्या ॥६॥

वर्त्तीकृतमित्यादि।—सुश्रुतस्य। लवणोत्तममिति सैन्धवं, वर्त्तिकरणञ्च मधुसैन्धवयोरग्नौ पाकात्, अन्यथा बन्धो न स्यात्। दुष्टव्रणे यद्विहितञ्च तैलमिति सुश्रुतोक्तारग्वधादितैलादि ॥७॥

जात्यादि।—जातीपल्लवाः, अर्कस्य मूलं, सम्पाक आरग्वधः तस्यापि पत्र करञ्जस्य बीजं, दन्ती दन्तीमूलं, अत्र स्नुहीक्षीरेणैव सह किञ्चिज्जलं दत्त्वा पक्वा च वर्त्तिः कार्य्येत्याहुः ॥८॥

माहिषेत्यादि।—कोद्रवस्तृणधान्यविशेषः, तस्य भक्तम्। कङ्गुनिका कांगनि, एतन्मूलचूर्णं माहिषदधिकोद्रवभक्ताभ्यां मिश्रितं कृत्वा भुक्तं सदित्यर्थः ॥९॥

कृशेत्यादि।—सुश्रुतस्य। कृशः क्षीणमांसः, दुर्बलो हीनबलः। क्षारसूत्रेण छेदनविधिमाह, एषण्येत्यादि। क्षारसूत्रेण सह अनुसर्त्तुं शीलं यस्याः एतादृशीं एषणीमुन्नाम्य उत्क्षिप्य सूच्यग्रेण गतिप्रान्तं विद्ध्वा सूचीं निर्हरेदिति भावः। अत्र यदि अतिदीर्घा भवति तदा द्व्यङ्गुले त्र्यङ्गुले चतुरङ्गुले वा बद्ध्वा क्रमेण छेदयेत् न पुनरेकदैव अतिप्रमाणेन बद्ध्वा छेदः कार्य्यः सूत्रच्छेदभयात् पीड़ातिशयभयाच्च

सूत्रस्यान्तं समानीय गाढं बन्धनमाचरेत्।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत्॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः।
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम्॥ ११॥

समाङ्गगुग्गुलुः—

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः।
नाडीदुष्टव्रणशूलभगन्दरविनाशनः॥ १२॥

सर्जिकाद्यं तैलम्—

सर्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिका।
खरमञ्जरिबीजेषु तैलं गोमूत्रपाचितम्।
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम्॥ १३॥

---

...इत्यादि। क्षाराक्तमिति सूत्रविशेषणम्। अर्बुदादिषु बन्धविशेषमाह, अर्बुदादिष्वित्यादि। अर्बुदादिकं यदि तनुमूलं भवति तदा उत्क्षिप्यैव मूलं सूत्रेण बध्नीयात्। स्थूलमूलेषु तु सूत्रस्थैर्य्यार्थं मूले समन्ततः सूचीभिराचितं यथा स्यात्तथा बध्नीयात्। यववक्त्राभिरिति यववन्मध्यस्थूलवक्त्राभिः, यववक्त्रत्वञ्च सूचीनां दाढ्यार्थम्। छिन्ने चोपचरेद्व्रणमिति छिन्नेऽपि व्रणोक्तविधिनेति शेषः॥ १०। ११॥

गुग्गुलुरित्यादौ। त्रिफलाव्योषैरिति विशेषणे तृतीया। त्रिफलादीनां मिलित्वा गुग्गुलुसमत्वम्, आज्ययोजित इति घृतपिष्टः, घृतञ्च तावद्देयं यावता एकीभवति॥ १२॥

सर्जिकेत्यादौ।—अग्निश्चित्रकः, रूपिका श्वेतार्कः, नलश्च स्वनामख्यातः नीलिका नीलेति प्रसिद्धा नीलवृक्षः, खरमञ्जरी अपामार्गः, गोमूत्रेण पाकाच्च चतुर्गुणम्, ...प्युक्तम् "सुवर्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु फलेऽप्यपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलम्" इति॥ १३॥

कुम्भीकाद्यं तैलम्—

कुम्भीकखर्जूरकपित्थबिल्व-वनस्पतीनान्तु शलाटुवर्गैः ।
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तासरलप्रियङ्गु ॥
सौगन्धिकामोचरसाहिपुष्पलोध्राणि दत्त्वा खलु धातकीञ्च ।
एतेन शल्यभवा हि नाड़ी रोहेद्व्रणो वै सुखमाशु चैव ॥ १४॥

भल्लातकाद्यं तैलम्—

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलम्
नाड़ीं कफानिलकृतामपचीं व्रणांश्च ॥ १५ ॥

निर्गुण्डीतैलम्—

समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाड़ीदुष्टव्रणापहम् ॥
हितं पामापचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्वव्रणेषु च ॥ १६ ॥

हंसपादीतैलम्—

हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसैः
तत्कल्कैश्च पचेत् तैलं नाड़ीव्रणविशोधनम् ॥ १७ ॥

इति नाड़ीव्रणचिकित्सा ॥

---

कुम्भीकेत्यादि ।—सुश्रुतस्य । कुम्भीक कुष्माण्डलता दाडिमसमानफला स्थूलदर्भ त्यन्य, वनस्पतयो वटादय, एषां शलाटु कोमलफलम्, सौगन्धिका कल्हारम् मोचरस. शाल्मलीनिर्य्यास, अहिपुष्प नागकेशरम् ॥ १४ ॥

भल्लातकेत्यादि ।—सुश्रुतस्य । मार्कवो भृङ्गराजस्तस्य स्वरसश्चतुर्गुण निर्गुण्डीतैले समामिति सहार्थं, तेन निर्गुण्डीस्वरसश्चतुर्गुण एव ग्राह्य । चक्र समशब्द तुल्यार्थमित्याह । अकल्कमिदं तैलम् । हंसपादीतैले हंसपादी रक्ता

## अथ भगन्दर-चिकित्सा।

गुदस्य श्वयथुं दृष्ट्वा विशोध्य शोधयेत्ततः।
रक्तावसेचनं कुर्य्याद्यथा पाकं न गच्छति ॥ १ ॥
वटपत्रेष्टकाशुण्ठी-गुडूच्यः सपुनर्नवाः।
सुपिष्टाः पिड़कारम्भे लेपः शस्तो भगन्दरे ॥
पिड़कानामपक्वानामपतर्पणपूर्वकम्।
कर्म्म कुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया ॥ २ ॥
एषणीपाटनक्षार-वह्निदाहादिकं क्रमम्।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम् ॥ ३ ॥
त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥ ४ ॥

---

ख्याता, अरिष्टपत्रं निम्बपत्रम्, तत इति तेषामित्यर्थः पश्चान्तात्तमिति चतुर्गुणः [illegible] लिलिना तैलाच्चतुर्गुणः ॥ १५—१७ ॥

इति नाडीव्रणचिकित्सा विवृतिः।

---

नाडीव्रणत्वसामान्यात् सङ्ख्यासामान्याच्च भगन्दरमाह, गुदस्येत्यादि। —विशोध्य उपवासादिना। शोधयेदिति विरेचयेत् न शोणितमोक्षणादिभिः ॥ १ ॥

वटपत्रेत्यादि। वटस्य कोमलपत्रम्, इष्टका च पानीये चिरभूषिता ग्राह्येति वृद्धव्यवहारः। अपतर्पणपूर्वकं कर्म्म कुर्य्याद्विरेकान्तमिति अपतर्पणाद्या विरेकान्ता एकादशोपक्रमा इह व्रणायाका कर्त्तव्या इत्यर्थः। एषणीत्यादि।—कार्य्यमित्यत्र चिकित्सितमिति शेषः ॥ २ ॥ ३ ॥

त्रिवृदित्यादि।—सुगमम्। नागदन्ती स्थूलमूला दन्ती, उत्सादनमिति शोधनम्, न तु निम्नव्रणोत्थापनरूपमुत्सादनमिह व्याख्येयम्, त्रिवृदादीनां तीक्ष्णद्रव्यत्वात् उत्सादनस्य तु मृदुमधुरद्रव्यसम्पाद्यत्वात्, उक्तं हि चरके "मन्यानि जीवनीयानि बृंहणीयानि यानि च। उत्सादनार्थं निम्नानां व्रणानां तत्र कल्प

रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः।
त्रिवृत् तेजोवतीदन्तीकल्को नाडीव्रणापहः॥ ५॥
कुष्ठं त्रिवृत्तिलादन्तीमागध्यः सैन्धवं मधु।
रजनी त्रिफला तुत्थं हितं व्रणविशोधनम्॥ ६॥
स्नुह्यर्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा विचक्षणः।
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः।
एषा सर्वशरीरस्थां नाडीं हन्यादसंशयम्॥ ७॥
तिलाभयालोध्रमरिष्टपत्रं निशे वचा कुष्ठमगारधूमः।
भगन्दरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम्॥ ८॥
खराश्वपक्वभूनागचूर्णलेपो भगन्दरम्।
हन्ति दन्त्यग्न्यतिविषालेपस्तद्वच्छुनोऽस्थि वा॥
त्रिफलारससंयुक्तं बिडालास्थिप्रलेपनम्।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम्॥ ९॥

नवकार्षिकगुग्गुलुः

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता।
गुडिका शोथगुल्मार्शोभगन्दरवतां हिता॥ १०॥

---

येत" इति। अन्ये तु सर्वागमहिम्ना द्विहृदादीनामप्युन्मादनत्वमिह मन्य मित्याहुः॥ ४॥

रसाञ्जनमित्यादि। सुश्रुतस्य। तेजोवती ज्योतिष्मती अन्ये तु चवीत्याहुः शोधनरोपणोऽयं कल्कः। कुष्ठमित्यादि।—सुश्रुतस्य। स्पष्टम॥ ५॥ ६॥

स्नुहीत्यादि।—स्नुह्यर्कयोः क्षीरेण दारुहरिद्राचूर्णं पक्त्वा वर्त्तिं कार्य्येत्यर्थः तिलेत्यादौ कुष्ठस्थाने लोध्रपाठे लोध्रद्वयं शाबरपट्टिकाख्यभेदाद्ग्राह्यम्। निशे हरिद्रे॥ ७॥ ८॥

खरेत्यादौ।—गर्दभरक्तपक्वगण्डूपदचूर्णलेप इत्यर्थः। दन्तीत्यादिद्वितीययोग अग्निश्चित्रकः। शुनोऽस्थि कुक्कुरस्यास्थीत्यत्र तृतीययोगे त्रिफलारसोऽपि पेषणाय ज्ञेयः, उक्तं हि "शुनोऽस्थि वा बिडालास्थि त्रिफलारसभावितम्" इति।

सप्तविंशतिगुग्गुलुः—

त्रिकटुत्रिफलामुस्तविड़ङ्गामृतचित्रकम् ।
शठ्येलापिप्पलीमूलं हवुषा सुरदारु च ॥
तम्बुरुः पुष्करं चव्यं विशाला रजनीद्वयम् ।
विड़ं सौवर्च्चलं क्षारौ सैन्धवं गजपिप्पली ॥
यावन्त्येतानि चूर्णानि तावद्द्विगुणगुग्गुलुः ।
कोलप्रमाणां गुड़िकां भक्षयेन्मधुना सह ॥
कासं श्वासं तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन् ।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥
आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च ।
नाडीदुष्टव्रणान् सर्वान् प्रमेहं श्लीपदं तथा ।
सप्तविंशतिको ह्येष सर्वरोगनिसूदनः ॥
जम्बूकमांसं भक्षयेत् प्रकारव्य स्नानादिभिः ।
अजाणवर्जी मासेन मुच्यते ना भगन्दरात् ॥ ११ ॥
पञ्चतिक्तं घृतं शस्तं पञ्चतिक्तश्च गुग्गुलुः ।
न्यग्रोधादिगणो यस्तु हितः शोधनरोपणः ।
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ १२ ॥

---

कार्षके त्रिपञ्चैकाश्चयोजिता इति अत्र इह कर्षरूपो भागः ; तेन त्रिफलाया
।क कर्षः, गुग्गुलोः पञ्च कर्षाः, कृष्णाया एकः कर्ष इति नवकार्षिकत्वम
' ॥ १० ॥

त्रिकटुत्यादौ । —क्षारौ यवक्षारस्वर्जिकाक्षारौ । एतेन गुग्गुलुं विना सप्त
शतिद्रव्याणीति निश्चलः । ये तु सौवर्चलक्षाराविति पठन्ति, तन्मते गुग्गुलुना
ह सप्तविंशतिरिति ॥ ११ ॥

विष्यन्दनतैलम्—

चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्च्चिकाम्॥
ज्योतिष्मतीञ्च सङ्गृह्य तैलं धीरो विपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे।
शोधनं रोपणञ्चैव सवर्णकरणं तथा॥ १३॥

करवीराद्यं तैलम्—

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः।
मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे॥ १४॥

निशाद्यं तैलम्—

निशार्कक्षीरसिन्ध्वग्निपुराश्वहनवत्सकैः।
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम्॥ १५॥
व्यायामो मैथुनं युद्धं पृष्ठयानं गुरूणि च
संवत्सरं परिहरेदुपरूढव्रणो नरः॥ १६॥

इति भगन्दरचिकित्सा।

---

न्यग्रोधादीत्यादि —सुगमं तस्य। कल्कोऽयम्। तत्पक्वमिति न्यग्रोधादिकल्काभ्यां पक्वम्॥ १२॥

चित्रकेत्यादि। सुगमं तस्य। चित्रकादीनां कल्कौ जलं चतुर्गुणम्। मलपू काकोडुम्बर, तस्य मूलं रक्तपित्तादौ तु फलम्। विष्यन्दयति पूयं स्रावयति विष्यन्दनं शोधनम्॥ १३॥

करवीराद्ये मातुलुङ्गस्य मूलम्, वत्साह्व कुटजस्तस्य त्वक्, अन्ये तु तत्फलमाहुः। निशेत्यादौ।—पुरः गुग्गुलुः, अश्वहनः करवीरस्तस्य मूलम्॥ १४ १५॥

इति भगन्दराधिकारविवृतिः।

## अथोपदंशचिकित्सा ।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः ।
जलौकापातनं वा स्यादूर्द्धाधःशोधनं तथा ।
सद्यो निर्हृतदोषस्य रुक्‌शोथावुपशाम्यतः ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ १ ॥

पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्वोपदंशापहरः प्रयोगः ॥ २ ॥

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा ।
सरलागुरुभद्राह्वैर्वातिके लेपसेचने ॥ ३ ॥
गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत् ॥ ४ ॥
निम्बार्जुनाश्वत्थकदम्बशालजम्बूवटोडुम्बरवेतसेषु ।
प्रक्षालनालेपघृतानि कुर्याच्चूर्णानि पित्तास्रभवोपदंशे ॥ ५ ॥
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।
व्रणप्रक्षालनं कुर्यादुपदंशप्रशान्तये ॥ ६ ॥
दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।

---

स्थानप्रत्यासत्त्या उपदंशचिकित्सितमुच्यते। ध्वजमध्ये मेढ्रमध्ये। शिरा व्यध्य रक्तदुष्टौ महत्याम्, अल्पायान्तु जलौकया रक्तपातनम् ॥ १ ॥

पटोलेत्यादि।—पटोलादिक्वाथे गुग्गुलुं त्रिफलाचूर्णं वा प्रक्षिप्य पिबेत्। तत्र खदिरासनक्वाथमपि, असनः पीतशालः। अन्ये तु क्वाथद्वयं यथासंख्यं गुग्गुलुत्रिफलाचूर्णयोः प्रक्षेपं वदन्ति। अपरे तु केवलक्वाथेन योगद्वयम्, तत्रैव गुग्गुलोस्त्रिफलाचूर्णस्य वा प्रक्षेपेणापि योगद्वयमिति वदन्ति। व्यवहारस्तु पूर्वेणैव। प्रपौण्डरीकमित्यादि।—सुश्रुतस्य। भद्राह्वं देवदारु ॥ २ ॥ ३ ॥

उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ७ ॥
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम् ।
सक्षौद्रं वा प्रलेपेन सर्वलिङ्गगदापहम् ॥ ८ ॥
बब्बोलदलचूर्णेन दाड़िमत्वग्भवेन वा ।
गुण्ठनं नृस्थिचूर्णेन उपदंशहरं परम् ॥ ९ ॥
लेपः पूगफलेनाश्वमारमूलेन वा तथा ।
सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ॥ १० ॥
जयाजात्यश्वमारार्क-सम्पाकानां दलैः पृथक् ।
कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥ ११ ॥

भूनिम्बाद्यं घृतम्—

भूनिम्बनिम्बत्रिफलापटोल-करञ्जजातीखदिराशनानाम् ।
सतोयकल्कै घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥ १२ ॥

करञ्जाद्यं घृतम्—

करञ्जनिम्बार्जुनशालजम्बू वटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥ १३ ॥

आगारधूमाद्यं तैलम्—

आगारधूमरजनीसुराकिण्वञ्च तैस्त्रिभिः ।

---

गैरिकेत्यादि च तद्वत् । त्रिंशैरिति शतधौतघृते । निम्बेत्यादौ घृतसाधनञ्च निम्बादिक्वाथकल्काभ्यामिति वदन्ति ॥ ४—७ ॥

रसाञ्जनमित्यादि योगत्रयम् । अत्र पथ्या गुडूची । बब्बोलेति । बब्बोलस्य दलं, गुण्ठनमवचूर्णनं, नृस्थीति मानुषकपालास्थि, चन्द्रटेऽपि नृकपालास्थीत्युक्तत्वात् ॥ ८—१२ ॥

करञ्जाद्यघृते करञ्जस्य मूलम् । वटादिभिरिति वटोडुम्बराश्वत्थप्लक्षकपीतनैः पञ्चभिः । कपीतनो गर्दभभाण्डः । घृतस्यास्य पानं सेचनञ्चानेन कार्यम् । आगारधूमेति ।—आगारधूमोऽलम्बुसः । किण्वं सुराबीजम् । भागैस्त्रैरिति तैलप्रस्थे आगारधूम पल १ कर्ष १ माषा ५ रति ३ । हरिद्रा पल २ कर्ष

भागोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम्।
शोधनं रोपणञ्चैव सवर्णकरणं परम्॥ १४॥
अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत्॥ १५॥

इत्युपदंश-चिकित्सा॥

---

## अथ शूकदोष-चिकित्सा।

हितञ्च सर्पिषः पानं पथ्यञ्चापि विरेचनम्।
हितः शोणितमोक्षश्च यञ्चापि लघुभोजनम्॥ १॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत्।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम्॥ २॥
क्रियेयमधिमन्थेऽपि रक्तं स्राव्यं तथोभयोः॥ ३॥
अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत्॥ ४॥

---

माषा १० रति ६। सुराबीज पल ३ कर्ष ३ माषा १५ रति ९। एव खेद
...दकत्व कल्कस्य, पाकस्तु जलेनैव॥ १३॥ १४॥

चिकित्सासामान्यादर्शेव लिङ्गार्शसां चिकित्सामाह, अर्शसामिति लिङ्गार्शसा
मन्यह॥ १५॥

इत्युपदंशाधिकारः।

---

प्रागुक्तसहत्वेव शूकदोषचिकित्सितमुच्यते। शूकैर्जलशूकैः सविषजन्तु
जनकृता दोषः शूकदोषः। हितमित्यादि सुश्रुतस्य। सर्पिष इति यथादोषं संस्कृ
तस्य। विरेचनमपि पथ्यं हितमित्यर्थः। सर्षपीमित्यादि वाग्भटस्य। कषायैरिति
...मदीय कषायवर्गोक्तैः पथ्याविभीतकशिरीषादिभिः शोधनादिगणसंग्रहोक्त
न्यग्रोधादिभिः। सूक्ष्मैरिति सूक्ष्मचूर्णीकृतैः। सुश्रुते तु सूक्ष्मैरित्यत्र सम्यगिति
...। तैरेवेति पूर्वोक्तकषायैः क्वाथकल्कैः। उभयोरिति सर्षप्यधिमन्थयोः
॥ १—३॥

कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम् ॥ ५ ॥
अलज्यां कृतरक्तायामयमेव क्रियाक्रमः ॥ ६ ॥
स्वेदयेद् ग्रथितं स्निग्धं नाडीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ७ ॥
उत्तमाख्यान्तु पिडकां सञ्छिद्य वडिशोद्धृताम् ।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ ८ ॥
क्रमः पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः ।
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः ।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ ९ ॥

कुम्भीकायामित्यादि ।—वाग्भटस्य । वातजायामप्यशोत्वात् शुकदूषितरक्तस्य रक्तस्य निर्हरणं जलौकादिभिः कर्त्तव्यम् । कुम्भीकायां हरेद्रक्तमित्यत्रापि शोधिते व्रणे तैलेन रोपणमिति तिन्दुकादिकल्कसिद्धम् । सुश्रुते तु कुम्भीका पाकेन पक्वा भिन्ना सर्वा या रोपयेत् । तैलेन लोध्रत्रिफलातिन्दुकाम्रकल्केन वा इत्युक्तम् । तिन्दुकामयी फलास्थीति च तट्टीकाकृत् । अलज्यामित्यादि वाग्भटस्य । अयमेवेति कुम्भीकोक्तः ॥ ५ ६ ॥

स्वेदयेदिति ।—सुश्रुतस्य । ग्रथितमिति ग्रथिताख्यं शुकदोषम् । स्निग्धमिति तैलयोगेन । स्वेदेनेति स्वेदनद्रव्याणि चरकोक्तानि यथा तीक्ष्णाकृत रक्तखण्डशिग्रुमूलकसर्षपे । वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च । शोभाञ्जनकसुरीयमालतीसुरसार्जकैः । पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् इति सुखोष्णैरुपनाहैरिति कफघ्नद्रव्यकृतैः, ग्रथितस्य कफकृतत्वात् । सुस्निग्धैरिति तैलयोगात् ॥ ७ ॥

उत्तमाख्यामित्यादि ।—वाग्भटस्य । कषायाणामिति । कषायवर्गपठितानां लोध्रादीनां न्यग्रोधादीनां वा । उपाचरेदिति प्रलेपेन ॥ ८ ॥

क्रम इत्यादि । वागभटस्य । पुष्करीमूढयोरिति पुष्करिकासम्मूढपिडकयोः त्वक्पाके स्पर्शहान्याञ्चेति पूर्वेण सम्बध्यते । तेनैतयोरपि पित्तविसर्पोक्तः क्रमः कार्य्यः । मृदितं पुनर्बलातैलेन सेचयेदिति योज्यम् । मधुरैरिति काकोल्यादिभि

रसक्रिया विधातव्या लिखिते शतपोनके ॥ १० ॥
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम्।
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्वुदे।
कषायतैलसर्पींषि कल्कं चूर्णं रसक्रियाम्॥
शोधने रोपणे चैव वीक्ष्य वीक्ष्यावतारयेत्॥ ११ ॥
अर्वुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम्॥ १२ ॥

इति शूकदोष-चिकित्सा॥

---

क्रिया जीवनीयगणे, वाग्भटे जीवनीयगणस्योक्तत्वात्। बलातैलञ्च वाग्भटे गतव्याधावुक्तम् ॥ ९ ॥

रसक्रियत्या द।—सुश्रुतस्य। रसक्रिया तु अवस्था वीक्ष्य शोधनीया रोपणीया दया। तत्र शोधनीया यथा,—'शालसारादिसारेषु पटोलत्रिफलासु च। रसक्रिया विधातव्या शोधनी शोधनेषु च' इति। रोपणीया यथा,—'त्वक्षु न्यग्रोधवृक्षस्य त्रिफलायास्तथैव च। रसक्रिया रोपणार्थे विदधीत यथाविधि' इति

पृथक्पर्ण्यादीत्यादि।—पृथक्पर्ण्यादि मिश्रकोक्तघृतसाधनद्रव्यम्, तद्यथा, पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता। काकोल्यादिश योज्य स्यात्..... इति। अत्र सिता शर्करेति चक्र, स तद्भवति तु ब्रह्मदेव। एतेन तैलं वा पृथक्पर्ण्यादिना क्वाथकल्करूपेण साध्यमिति वदन्ति। शर्करा तु कल्करूपेण देया क्वाथानर्हत्वात्। अनन्तरमिति रसक्रियादानस्यानन्तरमित्यर्थः।

रक्तविद्रधिवदित्यादि।—सुश्रुतस्य। वीक्ष्य वीक्ष्येति द्विरुक्त्या शोधनावस्था.... यदा शोधनं कर्त्तव्यं भवति तदा शोधनानि कषायादीन्यवचारयेत्, यदा तु रोपणं कर्त्तव्यं भवति तदा रोपणानीत्यर्थः ॥ १० ॥

अर्वुदमित्यादि।—असाध्यत्व नोक्तमप्यर्वुदादिषु कदाचिदसम्पूर्णलिङ्गत्वादिना साध्यता याप्यता वा सम्भवतीति प्रत्याख्याय तत्र क्रिया कार्य्येति शेषः ॥ ११ ॥

इति शूकदोषाधिकारविवृतिः।

---

## अथ भग्न-चिकित्सा ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ।
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत् ॥ १ ॥
अवनामितमुन्नह्येदुन्नतञ्चावनामयेत् ।
आञ्छेदतिक्षिप्तमधोगतञ्चोपरि वर्त्तयेत् ॥
आलेपनार्थं मञ्जिष्ठा मधुकञ्चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ २ ॥
सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।
कर्त्तव्यं स्यात् त्रिरात्राच्च तथाग्नेयेषु जानता ॥
काले च समशीतोष्णे पञ्चरात्राद्विमोक्षयेत् ॥ ३ ॥
न्यग्रोधादिकषायश्च सुशीतं परिषेचने ।

---

आगन्तुजत्वसामान्यादभग्नचिकित्सामाह, आदौ भग्नमित्यादि। कुशान्वितमित्यत्र कुशेति भग्नास्थिबन्धसाधनकदम्बादित्वच सञ्ज्ञा, उक्तं हि वाग्भटे 'कदम्बोडुम्बराश्वत्थसर्जार्जुनपलाशजैः । वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिर्वाहितैः सुश्लक्ष्णैः सुप्रतिष्टब्धैर्वल्कलैः शकलैरपि। कुशाह्वैः सम बन्ध पट्टस्योपरि या... यत'' इति ॥ १ ॥

अवनामितमित्यादि।—सुश्रुतस्थ। अवनामितम् अवनत कर्कटक... उन्नह्येत् उन्नामयेत, उन्नतमश्मकव्यादि अवपीडयत। अतिक्षिप्तम अध ऊर्ध्वं... पार्तिनिर्गतम्। आञ्छेदिति प्रसारयेत, आछि आयामे इत्यस्य रूपम्। अधोग... मध क्षिप्तादि उपरि वर्त्तयेत आकर्षयेत्। आलेपनार्थमित्यादि।—सुश्रुतस्थ अम्लपेषितमिति काञ्जिकपिष्टम्। शतधौतघृतोन्मिश्रमिति पूर्वेण परेण च यो... मिति चक्रः ॥ २ ॥

सप्तरात्रादित्यादि।—सुश्रुतस्थ। सौम्येष्वृतुष्विति शीत। आग्नेये ग्रीष्म... वाग्भटेऽप्युक्तम्,—"सप्ताहात् सप्ताहतो घर्मे सप्ताहान्मोक्षयेद्धिमे। साधारणे पञ्चाहाद भग्नदोषवशेन वा" इति। जानता वैद्येनेति शेष.। समशीतोष्णे क...

पञ्चमूलीविपक्वन्तु क्षीरं दद्यात् सवेदने।
सुखोष्णमवतार्य्यं वा चक्रतैलं विजानता ॥ ४ ॥
मांसं मांसरसः सर्पिः क्षीरं यूषः सतीनजः।
वृंहणञ्चान्नपानञ्च देयं भग्नं विजानता ॥ ५ ॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ ६ ॥
सघृतेनास्थिसंहारं लाक्षां गोधूममर्जुनम्।
सन्धियुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः ॥ ७ ॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम्।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ८ ॥
पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम्।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम् ॥ ९ ॥
क्षीरं सलाक्षामधुकं ससर्पिः स्याज्जीवनीयश्च सुखावहश्च।

---

चेति अपहृतसन्धकार्ले। न्यग्रोधेत्यादि।—सुश्रुतस्य। पञ्चमूलीत्यादि।—पञ्चमूली चात्र स्वल्पेति वदन्ति। एततपक्वञ्च क्षीरं वातपित्तोत्तरे भग्ने, अत्रापि परिषेचनं इति योज्यम्। चक्रतैलमिति सद्यः पीडितं तैलं किंवा सुश्रुतवातव्याधिचिकित्सितोक्ततैलविधानगृहीतं तैलम्। शीतोपचारोचितेऽपि भग्ने सुखोष्णस्य विधानमनिलं बलीयसीति ज्ञेयम्, अतएव विजानतेत्युक्तम् ॥ ३ ॥ ४ ॥

भग्नहितमन्नपानमाह, मांसमित्यादि।—सुश्रुतस्य। क्षीरमिहावगो भग्ने सन्धानीयतया हितम्। यत् पुनर्नवधान्यादिवर्गे क्षीरं निषिद्धं तद्व्रणविषय एवेति न विरोधः। अन्ये तु क्षीरसर्पिरिति पठित्वा क्षीरादुत्थितं सर्पिरिति व्याचक्षते। सतीनो वर्तुलकलायः, स च यद्यपि वातजनकस्तथापि सन्धानीयत्वादिहोक्त इति ॥ ५ ॥

गृष्टिक्षीरमित्यादि।—सुश्रुतस्य। गृष्टिरेकवारप्रसूता धेनुः, तस्याः क्षीरम्, मधुरौषधं काकोल्यादिगणः, तेन क्षीरपरिभाषासाधितम्। सर्पिर्लाक्षे प्रक्षेप्ये। सघृतेनेत्यादिषु सघृतेन क्षीरेणास्थिसंहारादिकं व्यस्तं समस्तञ्च पिबेदित्याह ॥ ६—९ ॥

भग्नः पिबेत् त्वक्पयसार्जुनस्य गोधूमचूर्णं सघृतेन वाथ ॥१०॥

लाक्षागुग्गुलुः—

लाक्षास्थिसंहृत्ककुभाश्वगन्धाश्चूर्णीकृता नागबला पुरश्च ।
सम्भग्नयुक्तास्थिरुजं निहन्यादङ्गानि कुर्यात् कुलिशोपमानि ।
तत्रान्यतोऽपि दृष्टत्वात् तुल्यश्चूर्णेन गुग्गुलुः ॥ ११ ॥

आभागुग्गुलुः—

आभाफलत्रिकैर्व्योषैः सर्वैरेभिः समीकृतैः ।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः ॥ १२ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य कषायैश्च शेषं भग्नवदाचरेत् ॥ १३ ॥
भग्नं नैति यथापाकं प्रयतेत तथा भिषक् ।
वातव्याधिविनिर्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥ १४ ॥

गन्धतैलम्—

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत् ॥

---

क्षीरमित्यादौ। जीवनीयमिति [illegible] त्वक्पयसार्जुनस्येति।—अर्जुनस्य त्वचा साधितपयस्त्वक्पयः। [illegible] त्वक्पयसा सघृतेन गोधूमचूर्णं पिबेदिति योज्यम्। अन्ये तु त्वक्पयः [illegible] पुमर्कलिङ्गोऽप्यस्तीति अर्जुनस्य त्वचं पिबेदित्याहुः ॥ १० ॥

लाक्षेत्यादौ।—अस्थिसंहृत अस्थिसंहारः। ककुभोऽर्जुनः। नागबला गोरक्षतण्डुला। पुरो गुग्गुलुः, स च मिलितलाक्षादिचूर्णसमः। वक्ष्यमाणाभादिगुग्गुलौ दृष्टत्वादिति चक्रः। एतदर्थं आभेत्यादि। आभा [illegible] स्यात्।

सव्रणभग्नचिकित्सामाह, सव्रणस्येत्यादि।—सुगमम्। प्रतिसार्य कषायैरिति न्यग्रोधादिकषायद्रव्यकृतकल्कैः प्रतिसार्य प्रलिप्य, कार्त्तिकस्तु कषायैरिति [illegible] क्वाथे प्रतिसार्य प्रसिच्यति व्याचष्टे धातूनामनेकार्थत्वात्। भग्नमित्याहारादिकम् ॥ ११—१४ ॥

तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं श्वदंष्ट्राञ्च मञ्जिष्ठां शारिवां तथा।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत्।
पीडनार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥
चतुर्गुणेन पयसा तत्तैलं विपचेत् पुनः।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम्।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु।
आक्षेपके पक्षाघाते चाङ्गशोषे तथार्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।
बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥

---

गात्रेत्यादि।—सुश्रुतस्य। अस्थिरजलं इति स्रोतोजलं चतुःशरावजलं गी... कृष्णतिलान् गृहीत्वा वस्त्रे पोट्टलीं बद्धा स्रोतोजले प्रक्षिप्य रात्रौ स्थापयेत् ... दिवसे आतपे शोषयेत्, एवं सप्तदिनानि यावत्। तदनु तिलतुल्यपरिमाणे ... क्षीरे रात्रौ तिलान् निक्षिप्य दिवा प्रसार्य्यातपे शोषयेत् एवं सप्तदिनानि ... तदनु 'माल्यद्रव्यसमं क्वाथ्यम' इत्यादिवचनबलात् तिलतुल्यपरिमाणं यष्टि... गृहीत्वा अष्टगुणं जलं दत्त्वा पक्वा अष्टमभागावशिष्टजले तिलान् रात्रौ प्रक्षिप्य ... तपे शोषयेत्, एवं सप्तदिनानि यावत्, एवं गव्यक्षीरेऽपि सप्ताहम् (पुनरपि ... तुल्यपरिमाणे गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा सूर्य्यातपे शोषयेत् एवं ... दिनानि यावदित्यर्थः)। तदनु तिलान् निस्तुषीकृत्य चूर्णयेत्। ततश्च तथा... तिलचूर्णानां चत्वारो भागाः, भागश्चैकः काकोल्यादिशतपुष्पान्तमिलितचूर्णस्य,

पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु योजयेत्।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते॥
मुखञ्च पद्मप्रतिमं स्यात् सुगन्धसमीरणम्।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत्।
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः।
तिलचूर्णात् चतुर्थांशं मिलितं चूर्णमिष्यते॥ १५॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम्।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च॥ १६॥

इति भग्न-चिकित्सा॥

---

## अथ कुष्ठ चिकित्सा।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्यम्॥

---

वक्ष्यति च "तिलचूर्णाच्चतुर्थम्" इत्यादि। एतस्यैव चूर्णस्य पीडनार्थमुत्स्वे… कर्त्तव्ये आर्द्रताकरणार्थं सर्वगन्धशृतं क्षीरं तावन्मानं ग्राह्यं यावता क्षीरेण … मार्द्र भवति। सर्वगन्धैरित्यत्रादिगणेन, क्षीरपरिभाषयैव दुग्धं साध्यम्। एला… दिगणश्च सौश्रुत। एवमुक्तप्रकारेण गृहीततैलस्य चत्वारः शरावा, एतत्पाका… र्थञ्च गव्यदुग्धस्य षोड़शशरावा ग्राह्या इत्यर्थः। अंशुमती शालपर्णी, कालानुसार्य… तगरम्, क्षीरशुक्ला क्षीरविदारी, अनन्ता अनन्तमूलं, मधुलिका मर्कटहस्तत्वम्… तु गोधूमभेद इत्याह। प्रागुक्तानीति काकोल्यादिशतपुष्पान्तानि। एभि… कल्कैरित्यर्थः। श्वदंष्ट्राह्वमित्यत्र सयष्ट्याह्वमित्येव पाठः सुश्रुतटीकासु व्याख्यात… यस्मिंस्तु पाठे यष्टीमधुनो भागद्वयम्, काकोल्यादिगणमध्येऽपि यष्टीमधुपाठा… ॥ १५॥ १६॥

इति भग्नाधिकार-विवृतिः।

---

रक्तदुष्टत्वग्गतत्वसाधर्म्यात् कुष्ठचिकित्सितमुच्यते। वातोत्तरेष्वित्यादि

प्रच्छनमल्पे कुष्ठे महति च शस्तं शिराव्यधनम्।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्॥ १॥

पञ्चषकायः—

वचावासापटोलानां निम्बस्य फलिनीत्वचः।
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः॥ २॥
विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकैः॥ ३॥

ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥ ४॥
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रलेपः॥ ५॥
करञ्जवीजैड़गजः सकुष्ठो गोमूत्रपिष्टश्च वरः प्रदेहः॥ ६॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च॥ ७॥

---

सापरित्यु्पलक्षणं तेन तैलाभ्यङ्गोऽपि बोध्यः, उक्तं हि वाग्भटे "तत्र वातोत्तरे तैलं घृतं वा साधितं हितम्" इति। अग्रमिति सर्पिरादिषु योज्यम्। तत्र वातोत्तरादिषु सर्पिरादि प्रथमं कार्य्यम्, तदनु वक्ष्यमाणचिकित्सा कार्य्येत्यर्थः। अग्रमिति पाठे प्रधानमित्यर्थः। बहुश इति बलरक्षार्थं स्तोकं स्तोकं दोषनिर्हरणं पुनः पुनः शोध्यः, एकदा हि भूरिदोषहरणे बलक्षयो मृत्यात्ययश्च स्यादिति। अत एव एतदनन्तरमुक्तं चरकेण "दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु" इति॥ १॥

वचेत्यादौ।—[ वचादीनां त्रयाणां मूलं ] फलिनी प्रियङ्गुः। वमनार्थश्च क्वाथविधौ परिभाषा यथा,—"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके। चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत" इति॥ २॥

[ विरेचनमिति त्रिफलाक्वाथे त्रिवृद्दन्तीमूलं प्रक्षिप्य अथवा दन्तीमूलत्रिवृत्तालता चूर्णं प्रति मा २ त्रिफलाक्वाथेन पेयम् ]॥ ३॥

ये लेपा इत्यादि।—निर्गतोऽस्रगतो दोषो येषां ते तथा॥ ४॥

मनःशिलेत्यादौ।—आलं हरितालम्। तैलञ्च सार्षपं कुष्ठहरत्वात्। आर्कं पयोऽर्कक्षीरम्॥ ५। ६॥

आरग्वधः सैड़गजः करञ्जो वासागुडूचीमदनं हरिद्रे ।
श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विड़ङ्गं करवीरकश्च ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला-काशीशलोध्रार्जुनमुस्तसर्जाः ॥
इत्यर्द्धरूपविहिताः षड़ेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रुम ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्ता अचिरान्नराणाम् ॥८
मनःशिला त्वक् कुटजात् सकुष्ठात् सलोमशः सैड़गजः करञ्ज
ग्रन्थिश्चभौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥
पलाशनिर्दाहरसेन वापि कर्षोद्धृतान्याढ़कसम्मितेन ।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठविनाशनाय ॥ ९ ॥

---

पर्णानीत्यादौ ।– चतुरङ्गुल शानात्, अश्वहनच्छद करवीरपत्रम, एतदेक एव योगः । योगोऽयं चरकोक्तत्वात् प्रतप्रदेहसंख्यावृद्धिः स्यादिति ॥ ७ ॥

आरग्वध इत्यादिना षडार्ध श्लोकार्द्धैः षड्योगाः । आरग्वधस्य पत्रम् श्र्याह्व नवनीतखोटिः, करवीरस्य त्वक्, ग्रन्थिश्च भौर्ज इति भूर्जपत्रग्रन्थि, लोमशा धातुकाशीश तमालपत्र वा, कृष्णगन्धा शोभाञ्जनकः, फणिज्झक. पर्णासभेदः, पीलु श्रोत्तरापथिक फलम. सुमनःप्रवाला जातीपल्लवाः, निकुम्भो दन्ती, अञ्जन रसाञ्जनम्, अर्द्धरूपोपारात अर्द्धश्लोकैः, गोपित्तपीता इति गोपित्तभावनया पीता पीतवर्णा, भावना च सप्ताहम् ॥ ८ ॥

मनःशिलेत्यादौ । -त्वक कुटजादिति कुटजस्य त्वक् । लोमशो धातुकाशीशम । तुषोदकं सतुषयवैः सन्धानविशेषात कृत काञ्जिकम् । पलाशनिदाहरसे इति पलाशवृक्षस्य प्रधानमूलं छित्वा तदध. कुम्भं स्थापयित्वा उपरि वृक्षदाहे यो गलति स्वरस. स पलाशनिदाहरस, अन्ये तु पलाशक्षारोदकमाहुः ॥ ९ ॥

कुष्ठाद्यम्—

कुष्ठं हरिद्रे सुरसं पटोलम्
निम्बाश्वगन्धे सुरदारुशिग्रु।
ससर्षपं तुम्बुरुधान्यवन्यम्
चण्डाञ्च दूर्वाञ्च समानि कुर्य्यात्॥
तैस्तक्रपिष्टैः प्रथमं शरीरम्
तैलाक्तमुद्वर्त्तयितुं यतेत।
तथास्य कण्डूः पिड़काः सकोठाः
कुष्ठानि शोथाश्च शमं प्रयान्ति॥ १०॥

धात्राक्षपथ्याक्रिमिशत्रुवह्नि-
भल्लातकावल्गुजलौहभृङ्गैः।
भागाभिवृद्धैस्तिलतैलमिश्रैः
सर्वाणि कुष्ठानि निहन्ति लेपः॥ ११॥

विडङ्गसैन्धवशिवाशशिरेखासर्षपकरञ्जरजनीभिः।
गोजलपिष्टो लेपः कुष्ठहरो दिवसनाथसमः॥ १२॥

---

कुष्ठमित्यादौ।—सुरसं पर्णासं, तुम्बुरु स्वनामख्यातम्, वन्यं कैवर्त्तमुस्तकम् ... चोरपुष्पी, प्रथमं तैलाक्तमिति योज्यम्। तैलञ्च इह सार्षपम्॥ १०॥

धात्रीत्यादौ।—अक्ष विभीतकम्, क्रिमिशत्रुर्विडङ्ग, वह्निश्चित्रक, लौह इति ... यथायथं न त्वयस्कृत। भृङ्ग इति भृङ्गराजस्य चूर्णं न तु गुडत्वक, उक्तं हि ... व्याख्यायाम्—"त्रिफलाथ विडङ्गानि चित्रकोऽरुष्करस्तथा। इन्दुलेखा अयश्चूर्णं ... राजोऽपि च। क्रमाभिवृद्धा संयुक्तं तैलेन सुपरिप्लुतम्। नवायसमिदं ... रसायनमनुत्तमम्" इति तथा लेप इति प्रमादपाठः किन्तु लेह इति ... हि तन्त्रान्तरे—'धात्री विभीतकं पथ्या विडङ्गाग्निमरुष्करम्। वागुजीलौह ... सचव्य क्रमवर्द्धितम्। तिलतैलान्वितं लिह्यात् श्रेष्ठमेतद्रसायनम्' इति। ... योगः अस्यात्र लेख्यत्वादनन्तरं बोध्यः, लेखकदोषात्तु लेपप्रकरणे पठित ... त॥ ११॥

विड़ङ्गैड़गजाकुष्ठ-निशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः ॥ १३ ॥
दूर्वाभयासैन्धवचक्रमर्द-कुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि बद्धमूलं दद्रुञ्च कण्डूञ्च रुजाञ्च हन्यात् ॥१४॥
तुल्यो रसः शालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदम्बुपिष्टो लेपः क्षतो दद्रुगजेन्द्रसिंहः ॥ १५ ॥
प्रपुन्नाड़स्य बोजानि धात्रीमर्ज्जरसस्नुहाः ।
सौवीरपिष्टं दद्रूणामितदुद्वर्त्तनं परम् ॥ १६ ॥
चक्रमर्दकबीजानि जीरकञ्च समांशिकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥ १७ ॥
लेपनाद्भक्षणाच्चैव तृणकं दद्रुनाशनम् ॥ १८ ॥
यूथोपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ।
कासमर्दकमूलञ्च सौवीरेण च पेषितम् ।
दद्रुकिटिभकुष्ठानि जयेदेतत् प्रलेपनात् ॥ १९ ॥
शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपतः सिध्म ।

---

विडङ्गेत्यादौ ।—शशिरेखा सोमराजीबीजम्, गोजल गोमूत्रम्, दिवसनाथ सूर्य्यः । दूर्वेत्यादौ ।—चक्रमर्द एडगज. ; कुठेरकः पर्णास. । काञ्जिकतक्रपिष्ट इति काञ्जिकतक्रयोरन्यतरेण पिष्टा इति वदन्ति । त्रिभि, प्रलेपैरित्यनेन शीघ्र प्रशमकारिता दर्शयति, न तु नियमोऽयम् ॥ १२ – १४ ॥

तुल्य इत्यादि ।— शालतरो रसो धूनकः, तुषेणेति धान्यत्वचा, धूनकादीन पानीयभक्तान्तानां समो भागः । तदम्बुपिष्ट इति पानीयभक्तजलेन पिष्टः ॥ १५ ॥

प्रपुन्नाडस्येति ।—प्रपुन्नाडः एडगजः । स्नुहायाः चीरमन्ये तु मूलमाहुः सौवीरं काञ्जिकम् । स्तोकं सुदर्शनामूलमिति मिलितचक्रमर्दजीरकापेक्षया पादिकमित्याहुः । तृणकं चिनाघास इति नाम्ना ख्यातम् । यूथीपुन्नागमूलम् स्वनामख्यातम् । कासमर्दकः कालकासुन्दा एतन्मूलं काञ्जिकेन पिष्टा रात्रौ स्थाप्य प्रातश्चाकाकवदिते लेपो विधेय इत्युपदिशन्ति । शिखरिरसेन अपामार्गस्वरसेन

क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ २० ॥
गन्धपाषाणचूर्णेन यवक्षारेण पेषितम्।
सिध्म नाशं व्रजत्याशु कटुतैलयुतेन वा ॥ २१ ॥
कासमर्दकवीजानि मूलकानां तथैव च।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ २२ ॥
धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तथा युतश्च।
भवन्ति सिध्मानि यथा न भूयस्तथैवमुद्वर्त्तनकं करोति ॥ २३ ॥
कुष्ठं मूलकवीजं प्रियङ्गवः सर्षपास्तथा रजनी।
एतत् केशरषष्ठं निहन्ति वहुवार्षिकं सिध्म ॥ २४ ॥
नीलकुरुण्टकपत्रं स्वरसेनालिप्य गात्रमतिवहुशः।
लिम्पेन्मूलकवीजैः पिष्टैस्तक्रेण सिध्मनाशाय ॥ २५ ॥
चक्राह्वयं सुक्षीरभावितं मूत्रसंयुतम्।
रवितप्तं रि किञ्चित्तु लेपनात् किटिमापहम् ॥ २६ ॥
आरग्वधस्य पत्राणि आरणालेन पेषयेत्।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ॥ २७ ॥

वीजानि वा मूलकसर्षपाणाम्
लाक्षारजन्यौ प्रपुनाडवीजम्।
श्रीवेष्टकव्योषविडङ्गकुष्ठम्
पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥

क्षारेण वा कदल्या इति कदलीक्षारोदकेन पिष्टमित्यर्थं, पेषणं प्रति विकल्प नास्य प्रवक्षात्। गन्धपाषाणो गन्धकम्, मूलकानान्तथैव चेति मूलकानां वीजानीत्यर्थ। धात्रीरस आमलकीस्वरस, पाक्यो यवक्षारः विड्लवणमित्यन्ये। तदा युत इति सौवीरेणैव दिनत्रय भावित, "पूतीकृत दिवसत्रयम्" इति योगान्तरदर्शनान। धात्रीरसस्थाने धात्रीफलमिति चन्द्राट पठति ॥ १९—२३ ॥

कुष्ठमित्यादौ।—केशर नागकेशरम्। नीलकुरुण्टको नीलझिण्टी। चक्राह्वयमेडगजावीजम्। "रवितप्त सकिञ्चित्तु" इत्यपि पाठान्तरम् ॥ २४—२७ ॥

दद्रूणि सिध्मं किटिमानि पामाम्
कपालकुष्ठं विषमञ्च हन्यात् ॥ २८ ॥
एड़गजकुष्ठसौवीर-सैन्धवसर्षपै: क्रिमिघ्नैश्च ।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेप: ॥ २९ ॥
स्नुक्काण्डे सर्षपात् कल्क: कुकूलानलपाचित: ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ३० ॥
स्नुक्काण्डे शुषिरे दग्ध्वा गृहधूमं ससैन्धवम् ।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्चिकाम् ॥ ३१ ॥
एडगजातिलसर्षप-कुष्ठ-मागधिकालवणत्रयमस्तु ।
पूतिकृतं दिवसत्रयमेतद्धन्ति विचर्चिकदद्रु सकुष्ठम् ॥
उन्मत्तकस्य बीजेन माणकक्षारवारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम् ॥ ३२ ॥
नारिकेलोदके न्यस्तस्तण्डुल: पूतिकां गत: ।

---

बीजानीत्यादौ । लाक्षारजन्याविति द्वन्द्व न तु हरिद्राद्वयमित्याहु । ... एकौ नवनीतखोटि ॥ २८ ॥

एडगजेत्यादौ ।—सौवीरक सौवीराञ्जनम्, अत्र विशिष्टद्रव्यस्यानुक्तत्वात् गोमूत्रमेव कुष्ठहरतया पेषणार्थं ग्राह्यमिति वदन्ति । अपरे तु सौवीरशब्दस्य काञ्जिकार्थता परिकल्प्य तेनैव पेषणमित्याहु ॥ २९ ॥

स्नुक्काण्ड इत्यादि ।—वाग्भटस्य । कुकूलानल करीषाग्नि । स्नुक्काण्ड मध्ये गर्त्त कृत्वा पिष्टश्च तत्सर्षपण तत प्रपूर्य स्नुहीकाण्डान्तरेणाच्छाद्य कुशादिभि बद्धा मृत्तिकया प्रलिप्य गोमयाग्निना दहेत् । तत: आकृष्य तेन कल्केन लेप ॥ ३० ॥

स्नुककाण्डशुषिर इत्यादौ ।—सौजपर्वं कोरयित्वा तद्विवर गृहधूमसैन्धव चूर्णाभ्या पूरयित्वा स्थालीमध्ये तन्निक्षिप्य उपरि शराव दत्त्वा मृत्तिकया शरावसन्धि पिधायान्तर्धूम दहेत, तदनु कटुतैलेन समिश्र्य लेप । एडगजे त्यादौ ।—लवणत्रय सौवर्चलसैन्धवविड्लवणम्, उन्मत्तकस्य धुस्तूरकस्य बीज कल्क, माणकक्षारपरिस्रुतजलं चतुर्गुणं पाकार्थम्, विपादिका पादस्फोटनम ॥ ३१।३२ ॥

सैपाद्दिपादिकां हन्ति चिरकालानुबन्धिनीम् ॥ ३३ ॥
सर्जरससिन्धुसम्भव-गुडमधुमहिषाक्षगैरिकं सघृतम् ।
सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥
अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥ ३४ ॥
कोमलं सिंहास्यदलं सनिशं सुरभीजलेन सम्पिष्टम् ।
दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः ॥ ३५ ॥
हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ।
पिबेन्नरः कामचारी कच्छूपामाविनाशनम् ॥ ३६ ॥
शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ।
कच्छूपामाहरो चैव पथ्या गोमूत्रसाधिता ॥ ३७ ॥

पिबति सकटुतैलं गन्धपाषाणचूर्णम्
रविकिरणसुतप्तं पामलो यः पलार्द्धम् ।
त्रिदिनतदनुसिक्तः क्षीरभोजी च शीघ्रम्
भवति कनकदीप्त्या कामयुक्तो मनुष्यः ॥ ३८ ॥

नारिकेलोदक इत्यादि ।—नारिकेलस्य सजलशस्यं ग्राह्यम । सर्जरसेत्यादौ सिन्धुसम्भव सैन्धवम । महिषाक्ष इति गुग्गुलुः । एतत सर्वं समभागमेकीकृत्य मनाक पक्तव्यं यथा सिक्थकाकृति सत्वा लेपयोग्य भवति ॥ ३३ ॥

अवल्गुजमित्यादौ ।—अवल्गुजं सोमराजीवीजम्, माणिमन्थं सैन्धवम, मस्तुकाञ्जिकपेषितमिति मस्तुकाञ्जिकयोरन्यतरेण ]। कोमलेत्यादौ ।—सिंहास्यो वासकः तस्य पत्रम ; सुरभीजलं गोमूत्रम् ॥ ३४ । ३५ ॥

हरिद्रेत्यादौ ।—शास्त्रयुक्त्या हरिद्राकल्ककर्षस्य प्रक्षेप., कर्षचूर्णस्य कल्कस्येति वचनात , व्यवहारस्तु हरिद्राकल्कस्याष्टौ माषकाः, गोमूत्रस्य पलमेकमिति । गोमूत्रसाधितेति गोमूत्रेण स्विन्ना ॥ ३६ । ३७ ॥

पिबतीत्यादौ ।—पलार्द्धमिति सप्तमबलामलं प्रति प्रात्यहिकी मात्रा, किंवा पलार्द्धं त्रिदिनं यः पिबतीति योज्यं, त्रिदिनेत्यत्रानुस्वारलोपश्छान्दसत्वात् । तेन

निशासुधारग्वधकाकमाचीपत्रैः सदार्वीप्रपुनाड़बीजैः।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिषूद्वर्त्तनमेतदिष्टम्॥ ३९
सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं बहुशः।
लेपाद्विनिहन्ति पामां तैलं करवीरसिद्धं वा॥ ४०॥
मांसीचन्दनसम्पाक-करञ्जारिष्टसर्षपम्।
यष्टीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः॥ ४१॥
भल्लातकं द्वीपिसुधार्कमूलं गुञ्जाफलं त्र्यूषणशङ्खचूर्णम्।
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकाञ्च पक्वा॥
स्नुह्यर्कदुग्धे घनमायसस्थं शलाकया तं विदधीत लेपम्।
कुष्ठे किलासे तिलकालके तु अशेषदुर्नामसु चर्मकीले॥ ४२॥

---

पलार्द्धं दिनवयं विभज्य योज्यं, तेन किञ्चिदधिकदशमाषकाः प्रत्यहं भवन्ति व्यवहारस्तु शोधितगन्धकचूर्णस्य माषकचतुष्टय कटुतैलस्य तु कर्ष एक इति। तदन्... सिक्त इति तेन सतैलगन्धकचूर्णेनाभ्यक्तगात्रः। क्षीरभोजीति क्षीरासहत्वे मण्ड... व्यवहारः। दिनत्रयं सप्ताह वा प्रयोगावधि वातातपवर्जनञ्चेति। कनकदीप्ति... उपलक्षणे तृतीया। कनकगौर इति च पाठः। कामयुक्त इति उपचितशुक्र... धातुः, कामतुल्य इत्यपि पाठः॥ ३८॥

निशेत्यादौ।—निशादिचतुष्टयस्य पत्राणि, अन्ये तु निशा हरिद्रैव सुधादीना... मेव पत्राणीत्याहुः॥ ३९॥

सिन्दूरेत्यादौ।—करवीरक्काथकल्काभ्यां सिद्धं कटुतैलमित्यर्थः। मांसीत्यादि... सम्पाकस्य पत्र; करञ्जस्य फल; अरिष्टो निम्बः, तस्य पत्रं, यष्टीति यष्टीमधु... कण्डूमित्यत्र कुष्ठमिति क्वचित् पाठः। किन्तु चरकेऽप्यस्मिन् गणे दशमानि... कण्डूघ्नानीत्युक्तम्॥ ४०॥ ४१॥

भल्लातकेत्यादि। वाग्भटस्य। द्वीपी चित्रकः, अत्र भल्लातकाद्यर्कान्तानां मूलमिति केचित्; अन्ये तु भल्लातकस्य बीजं तस्यैव सर्व्वोपयोगादित्याहुः... चित्रकादित्रयस्य मूलम्, एषां भल्लातकादिलाङ्गलिकान्तानां चूर्णं स्नुह्यर्कक्षीराभ्यां मिलित्वा चूर्णमपेक्ष्य चतुर्गुणाभ्यां लौहपात्रे लेपयोग्यता यावत् तावत् पाक... इत्याहुः॥ ४२॥

विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्वाः क्षीरमर्कस्नुहाभ्याम् ।
दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ ४३ ॥
शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला
सर्वाणि कुष्ठानि निहन्ति लीढ़ा ॥ ४४ ॥
तीव्रेण कुष्ठेन परीतदेहो
यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयाम्
स सोमराजीं वपुषातिशेते ॥ ४५ ॥
घर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभाजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥ ४६ ॥
एकस्तिलस्य भागौ द्वौ सोमराज्यास्तथैव च ।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥ ४७ ॥
अवल्गुजाद्बीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम् ॥ ४८ ॥

---

विषेत्यादौ । विषं स्थावरविषम्, अनलं भल्लातकम् । अत्रापि पूर्वचूर्णादि मानम् अर्कस्नुहीक्षीराभ्यां पाकविधिरिति वदन्ति । शशाङ्कलेखेत्यादि ।—वाग्भटस्य । शशाङ्कलेखा सोमराजी, हुताशश्चित्रकः, अयोमलं शोधितमण्डूरचूर्णम् । अस्मान्मिलितचूर्णान्माषकत्रयं चतुष्टयं वा गृहीत्वा तिलतैलेन लेह्यम् ॥ ४३ ॥ ४४ ॥

तीव्रेणेत्यादौ ।—नियमेनेत्यनेन प्रात्याह्निकत्वं पथ्याशित्वञ्च गमयति । सोमराजीकृष्णतिलयोस्तु प्रत्येकं माषकत्रयं माषकचतुष्टयं वा व्यवहरन्ति । सोमराजीमिति चन्द्ररेखीम् । घर्मसेवी आतपसेवी । वागुजी सोमराजीबीजम्,

नवकषायः—

त्रिफलापटोलरजनी मञ्जिष्ठारोहिणीवचानिम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥ ४९ ॥
छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।
जीर्णे घृतेन भुञ्जीत स्वल्पं यूषोदकेन वा ।
अतिपूतिशरीरोऽपि दिव्यरूपी भवेन्नरः ॥ ५० ॥
पटोलखदिरारिष्ट-त्रिफलाकृष्णवेत्रजम् ।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥ ५१ ॥

सप्तसमो योगः—

तिलाज्यत्रिफलाक्षौद्र-व्योषभल्लातशर्कराः ।
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः ॥ ५२ ॥
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रिमीन् मेहान् नाडीव्रणभगन्दरान् ॥ ५३ ॥
इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ।
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत् क्षीरघृताशनः ।
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम् ॥ ५४ ॥
यः खादेदभयारिष्टमरिष्टामलकानि वा ।
स जयेत् सर्वकुष्ठानि मासादूर्द्ध्वं न संशयः ॥ ५५ ॥
दह्यमानाच्च्युतः कुम्भे मूलात् खदिरादूरसः ।

अस्य च माषकचतुष्टयमुष्णोदकेनालोड्य पिबेत । एक इत्यादावपि उष्णोदकमनुपानम् । त्रिफलेत्यादि स्पष्टम् ॥ ४५—४९ ॥

छिन्नाया इत्यादौ ।—छिन्ना गुडूची । पटोलेत्यादौ ।—कृष्णवेत्र कालियाकेति ख्यातम् । तिक्ताशन इति तिक्तभूयिष्ठाहारः ॥ ५० ॥ ५१ ॥

तिलेत्यादौ सप्तसम इति सञ्ज्ञाबलात् मिलितत्रिफलैव तिलाद्येकभागसमा एवं व्योषमपि ॥ ५२ ॥ ५३ ॥

इन्द्राशनमित्यादौ ।—चूर्णमिति माषकद्वयं त्रयं वा देयम् । यः खादेदित्यादौ

माज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम् ॥ ५६ ॥
वायस्येड़गजाकुष्ठ-कृष्णाभिर्गुड़िका कृता ।
बस्तमूत्रेण सम्पिष्टा लेपाच्छ्वित्रविनाशिनी ॥ ५७ ॥

पूतिकार्कस्नुङ्नरेन्द्रद्रुमाणाम्
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ।
लेपाच्छ्वित्रं घ्नन्ति दद्रुव्रणांश्च
कुष्ठान्यर्शांस्युग्रनाडीव्रणांश्च ॥ ५८ ॥

गजचित्रव्याघ्रचर्ममसीतैलविलेपनात् ।
श्वित्र नाशं व्रजेत् किंवा पूतिकीटविलेपनात् ॥ ५९ ॥
कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे ॥ ६० ॥
धात्रीखदिरयोः क्वाथं पीत्वावल्गुजसंयुतम् ।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशय. ॥ ६१ ॥

क्षारे सुदग्धे गजलण्डजे च
गजस्य मूत्रेण बहुस्रुते च ।
द्रोणप्रमाणं दशभागयुक्तम्
दत्त्वा पचेद्बाजमवल्गुजस्य ॥

---

शिष्टा निम्ब । दह्यमानादित्यादौ खदिररसवीर्यसमा तुल्या । अनवीद्र न पलद्य इत्याहु ॥ ५४—५६ ॥

वायस्यादौ —वायसी काकमाची । पूतीकेत्यादि । मस्तु तस्य । पूतिको लाटाकरञ्ज, नरेन्द्रद्रुम आरग्वध , एषां पल्लवा इत्यन्वय । तथा सौमनाश्च पल्लवा जातीपल्लवा इत्यर्थ । गजेत्यादौ ।—चित्रव्याघ्र । कल्लगजचममसोतपश्च श्वित्र-हत्व नोक्ता यथा—श्वेतजयन्त्यङ्घ्रिमूल क्षोर श्वित्रविनाशनम । गजचर्ममसीलेपो मसो वा पूतिकोटज." इति । पूतिकोट पादुकाकोट ( पादकुरा ) इति लोके ख्यात ॥ ५७—६१ ॥

क्षार इत्यादि ।—सुश्रुतस्य । गजलण्ड गजपुरीष, लवणगण्डजेति पाठे जल-

एतद्द्वयदा चिक्कणतामुपैति
तदा सुसिद्धां गुड़िकां प्रयुञ्ज्यात् ।
श्वित्रं विलिम्पेदथ तेन घृष्टम्
तदा व्रजत्याशु सवर्णभावम् ॥ ६२ ॥
श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥ ६३ ॥

पञ्चनिम्बः—

पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
सञ्चूर्ण्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ।
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ॥
त्रिफलात्र्यूषणब्राह्मीश्वदंष्ट्रारुष्कराग्निकाः ।
विडङ्गसारवाराहीलौहचूर्णाम्रताः समाः ॥

---

गण्ड. शमठ. । गजस्य मूत्रेण द्रव्यन्तर पक्व ... शेषः । वचुमत इति एकी-शनिवारे मङ्गवारे वा पारमे न । दशभागयुक्तमिति द्रोणस्य दशम भाग युक्तमवल्गुजमित्यर्थ । एतस्य क्रियापरिपाटी लिख्यते । प्रथमतो गजलघु चारस्य द्रोणमकं २५६ पल गाह्यम् । त...न्याकार्थं गजमूत्रं चारपरिभाषया षड्गुणं दीयमान द्रवद्वैगुण्यन द्वादशद्रोणो भवति, अविगणगणनया तु षड्द्रोणा स्यु. तेन मूत्र शराव १९२ "प्रायस्त्रिभागावशेषऽस्मिन्" इति वचनेन तृतीयभागाव शेषात् द्वैगुण्यन द्रोणमक ग्राह्य तत्र शराव ६४ । ततस्तृतीयभागावशिष्टचारोदक द्रोणापेक्षया दशमांशेनावल्गुजवीज पिष्टा तत्र प्रक्षिप्य पचेत् । तेनावल्गुजवीजस्य किञ्चिन्न्यूनत्रयोदशमाषकाधिकैकपञ्चाशत्पलानि भवन्ति, पल ५१, तोला १, माषा ५, मन्ये तु षट्पञ्चाशदधिकपलशतद्वयरूपचारद्रोणापेक्षया दशमांशेनावल्गुजवीज गृह्णन्ति, तन तन्मते अवल्गुजवीजस्य पल २५, कर्ष २, माषा ६, रती ४ एतन्मात्र भवति ; किन्तु व्यवहार. पूर्वैरेव । ततोऽवतार्य्य शिलाया पिष्टा चिक्कणतामुपगते सति गुडिकाः कार्य्याः । घृष्टमिति फल्गुपत्रकरीषादिना ॥ ६२ ॥

श्वेतजयन्तीत्यादौ ।—गोपयसैव पिष्टं पीतञ्चेत्यर्थः ॥ ६३ ॥

पुष्पकाल इत्यादौ ।—पञ्चनिम्बानां प्रत्येकं भागद्वयं त्रिफलादीनान्तु प्रत्येकमेको

हरिद्राद्वयवागुजीव्याधिघाताः सशर्कराः।
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम्॥
खदिराशननिम्बानां घनक्वाथेन भावयेत्।
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने॥
मधुना तिक्तहविषा खदिराशनवारिणा।
लेह्यमुष्णाम्बुना वापि कोलवृद्ध्या पलं पिबेत्।
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत्॥
विचर्च्चिकौडुम्बरपुण्डरीककपालदद्रूकिटिमालसादि।
शतारुविस्फोटविसर्पपामा कफप्रकोपं त्रिविधं किलासम्॥
भगन्दरश्लीपदवातरक्तं जाताम्ध्यनाड़ीव्रणशीर्षरोगान्।
सर्वान् प्रमेहान् प्रदरांश्च सर्वान् दंष्ट्राविषं मूलविषं निहन्ति।
स्थूलोदरः सिंहकृशोदरश्च सुश्लिष्टसन्धिर्मधुनोपयोगात्॥
समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु।
जीवेच्चिरं व्याधिजराविमुक्तः शुभरतश्चन्द्रसमानकान्तिः॥६४॥

एकविंशतिको गुग्गुलुः—

चित्रकत्रिफलाव्योषमजाजीं कारवीं वचाम्।
सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम्॥
विड़ङ्गान्यजमोदांश्च मुस्तान्यमरदारु च।
यावन्त्येतानि सर्वाणि तावन्मात्रन्तु गुग्गुलुम्॥

---

भागः। त्रिफलाव्यूषणयोरपि प्रत्येकं भागः। अग्निश्चित्रकः। वाराही वाराही कन्दः। व्याधिघातः स्वर्णालुः। खदिराशननिम्बाना घनक्वाथेनेति खदिरादीना प्रत्येकमष्टभागावशिष्टेन क्वाथेन भावना। अशनः पीतशालः। तिक्तहविषेति वक्ष्यमाणतिक्तषट्पलकादिना। खदिराशनवारिणेति खदिराशनक्वाथेन। कोल-वृद्ध्येति कोलः कर्षार्द्धम्। समोपयोगादिति वर्षोपयोगात्॥६४॥

मक्षयित्वा सर्पिषा सार्द्धं गुड़िकां कारयेद्भिषक् ।
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ॥
हन्त्यष्टादश कुष्ठानि क्रिमीन् दुष्टव्रणानपि ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमथ भग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधीन् कोष्ठगतांश्चान्यान् जयेद्विष्णुरिवासुरान् ॥ ६५ ॥
पञ्च भल्लातकांश्छित्त्वा साधयेद्विधिवज्जले ।
कषायं तं पिबेच्छीतं घृतेनाक्तौष्ठतालुकः ॥
पञ्चवृद्ध्या पिबेद् यावत् सप्तति ह्रासयेत्ततः ।
जीर्णेऽद्यादोदनं शीतं घृतक्षीरोपसंहितम् ॥
एतद्रसायनं मेध्यं वलीपलितनाशनम् ।
कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविशोधनम् ॥ ६६ ॥
तैलं भल्लातकानाञ्च पिबेन्मासं यथाबलम् ।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढ़ः ॥ ६७ ॥
प्रलेपोद्वर्त्तनस्नानपानभोजनकर्मणि ।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥ ६८ ॥

तिक्तषट्पलकं घृतम्—

निम्बपटोलदार्वीदुरालभां तिक्तकरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशान् पर्पटकं त्रायमाणाञ्च ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते ।

---

चित्रकेत्यादि स्पष्टम् । पञ्चेत्यादौ ।–विधिवदिति क्वाथविधिना पिप्पलीवर्द्धमानवदेव वृद्धिह्रासौ ॥ ६५ ॥ ६६ ॥

तैलमित्यादौ ।—भल्लातकतैलं स्वयमेव ग्राह्यम् । निम्बेत्यादौ यद्यपि "सर्पिश्चाप्यनव हितम्" इति वचनात् पुराणसर्पिष एव सर्वत्रोपयोगित्वं तथाप्यत्र योगमहिम्ना नवसर्पिष एव प्रयोजकत्वमिति वचनादेवोन्नीयते । सर्पिष इति पदं षट्पलमानग्रहणार्थम् । द्वितीयन्तु घृतमिति पदं पेयत्वोपदर्शनार्थम् ।

चन्दनंकिराततिक्तकमागधिकात्रायमाणाश्च ॥
मुस्तकवत्सकवीजं कल्कीकृतमर्द्धकार्षिकान् भागान्।
नव सर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम् ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथून् हन्ति।
पामाविसर्पपिड़काकण्डूमदगण्डनुत् सिद्धम् ॥ ६८ ॥

पञ्चतिक्तघृतम्—

निम्बं पटोलं व्याघ्रीञ्च गुड़ूचीं वासकं तथा।
कुर्य्याद्दशपलान् भागानेकैकस्य सुकुट्टितान् ॥
जलद्रोणे विपक्तव्यं यावत् पादावशेषितम्।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति ॥ ७० ॥

तिक्तकघृतम्—

त्रिफलाद्विनिशावासायासपर्पटकुम्भकान्।
त्रायन्तीकटुकानिम्बान् प्रत्येकं द्विपलोन्मितान् ॥
क्वाथयित्वा जलद्रोणे पादशेषेण तेन तु।
घृतप्रस्थं पचेत् द्रव्यैः पिप्पलीघनचन्दनैः ॥
त्रायन्तीशक्रभूनिम्बैस्तत् पीतं तिक्तकं घृतम्।
हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम्।

---

[illegible]था प्रथम सिद्धमिति पक्वं, द्वितीयन्तु प्रसिद्धिख्यापकम्। अनेन च पर पर्य्यायाभि-[illegible]ानेन कुष्ठे ज्वरे च षट्पलौ च द्रमावा एकार्थपर्य्यायाख्या दर्शितत्याह ॥ ६७ ६८ ॥

पञ्चतिक्ते।—चत्वारिंशच्च पैत्तिकानिति चत्वारिंशद्रोगास्तानपकर्षति कास्ता-[illegible]श्लैष्मिकाश्चैवायामुक्तं पैत्तिकानिति। एवं भेदयित्वा योजना कार्य्या, अन्यथा [illegible]त्वारिंशतमिति द्वितीया स्यात् ॥ ७० ॥

पाण्डुरोगं विसर्पञ्च क्लीवानामपि शस्यते ॥ ७१ ॥

महातिक्तकं घृतम्—

सप्तच्छदं प्रतिविषां सम्पाकं तिक्तकरोहिणीं पाठाम्।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्द्दपर्पटकम् ॥
धन्वयवासं सचन्दनमुपकुल्ये पद्मकं रजन्यौ च।
षड्ग्रन्थां सविशालां शतावरीशारिवे चोभे ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तकञ्च।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥
कल्कस्य चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम्।
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत्सिद्धम् ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि।
विसर्पमम्लपित्तं वातासृक् पाण्डुरोगञ्च ॥
विस्फोटकान् सपामानुन्मादान् कामलां ज्वरं कण्डूम्।
हृद्रोगगुल्मपिड़कामसृग्दरं गण्डमालाञ्च ॥
हन्यादेतत् सद्यः पीतं काले यथाबलं सर्पिः।
योगशतैरप्यजितान् महाविकारान् महातिक्तकम् ॥ ७२ ॥

महाखदिरकं घृतम्—

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले।

---

त्रिफलेत्यादौ।—कुलक पटोलपत्रम्, शक्र. कुटजस्तस्य फलम् ॥ ७१ ॥

महातिक्तके।—उपकुल्येत्येकवचनपाठो न युक्तः। आयुर्वेदसारवाग्भटादौ पिप्पलीद्वयपाठात्। कल्कस्य चतुर्भाग इति घृताच्चतुर्थो भागः। एतच्च सामान्यपरिभाषासिद्धमपि स्पष्टार्थमुच्यते। षड्ग्रन्था वचा शौकषठस्तु पिप्पलीमूलमित्याह तन्न, वाग्भटे वचापाठात्। अमृतफलानामित्यामलकफलानाम्। अत्राप्येक सर्पिःपद कल्कादिविभागार्थम्; द्वतीय पैयत्वीपदर्शनार्थम्, तृतीयं महातिक्तकसंज्ञार्थम् ॥ ७२ ॥

महाखदिरघृते।—शिंशपा शिशु इति ख्यातवृक्षः; असनः स्वनामख्यात

तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥
सप्तपर्णस्तु संक्षुण्णो दशद्रोणे च वारिणः।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढकं पचेत्।
महातिक्तककल्कैश्च यथोक्तैः पलसम्मितैः ॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात्।
महाखदिरमित्येतत् परं कुष्ठविनाशनम् ॥ ७३ ॥

पञ्चतिक्त-घृतगुग्गुलुः—

निम्बामृतावृषपटोलनिदिग्धिकानाम्
भागान् पृथग्दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितजलेन सुनिःसृतेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिषिचव्यकुष्ठैः।

---

न तु पीतशाल इत्याहुः, एतयोस्तुलाद्वय मिलित्वा। तुलार्द्धाः सर्व एवैत इति करञ्जादिसप्तपर्णान्ता। [प्रत्येक तुलार्द्धा।] दशद्रोणे च वारिण इत्यनन्तर पचेदिति शेष। तुल्यांशमित्याढकमानमित्यर्थः। चक्रस्तु "धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढकं पचेत" इति ग्रन्थं न पठति। तथा "यथोक्तैः पलसम्मितैः" इत्यत्र यथोक्तैस्तु साधयेदिति पठति व्याचष्टे च। साधयेदित्यत्र सर्पिरिति शेष। अत्र यद्यपि घृतमानं नोक्तं तथापि क्वाथश्चतुराढकाधिकद्रोणस्य नियतत्वात् तत्क्वाथ-चतुर्थांश प्रस्थाधिकाढकमानं घृतस्यार्थापत्तिन्याययुक्त्या सिद्धं भवतीति। कल्कस्य च कर्षादिकत्वं सामान्यपरिभाषासिद्धमेवेति। केचिन्महाखदिरघृतमिदमनार्ष मित्याहुः ॥ ७३ ॥

निम्बामृतेत्यादि।—वाग्भटस्य। घट [illegible] दोषे। पिचु क [illegible]

तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः॥
मञ्जिष्ठयातिविषया वरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः।
तत् सेवितं विषमति प्रबलं समीरम्
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक्॥
नाडीव्रणार्बुदभगन्दरगण्डमालाम्
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोष-
श्वयथुपाण्डुरोगगलविद्रधिवातरक्तम्॥ ७४॥

वज्रकं घृतम्—

वासागुडूचीत्रिफलापटोलं करञ्जनिम्बाशनकृष्णवेत्रम्।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रवत् कुष्ठहरं प्रदिष्टम्॥
विशीर्णकर्णाङ्गुलिहस्तपादः क्रिम्यर्दितो भिन्नगलोऽपि मर्त्यः
पौराणिकीं कान्तिमवाप्य जीवेदव्याहतो वर्षशतञ्च कुष्ठी॥७५॥

आरग्वधाद्यं तैलम्—

आरग्वधं धवं कुष्ठं हरितालं मनःशिलाम्।
रजनीद्वयसंयुक्तं पचेत्तैलं विधानवित्।
एतेनाभ्यञ्जयेच्छ्वित्री क्षिप्रं श्वित्रं विनश्यति॥ ७६॥

---

येषा कल्काना तै.। मिषि. शतपुष्पा, न तु मधुरिका वृद्धव्यवहारात। तेजोवती ज्योतिष्मती। दीप्यकं जीरकम्। वत्सक कुटजफलम्। आग्निश्चित्रक.। कणमूल पिप्पलीमूलम्। वरया त्रिफलया॥ ७४॥

[ वासेत्यादौ।—कृष्णवेत्रं कालियालता।] वज्रकमिति वज्रवदव्यर्थशक्तिकत्वात॥ ७५॥

आरग्वधमित्यादौ।—तैलमिति सार्षपाद्यन्यतमं कुष्ठहितत्वात्, उक्तं हि चरके "तैला [illegible] करञ्जकोषातकीङ्गुदादीनाम्। कुष्ठेषु हितान्याहुस्तै

तृणकं तैलम्—

मञ्जिष्ठारुङ्निशाचक्रमर्दारग्वधपल्लवैः।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु॥ ७७॥

महातृणकं तैलम्—

हरिद्रात्रिफलादारु-हयमारकचित्रकम्।
सप्तच्छदश्च निम्बत्वक्-करञ्जौ बालकं नखी।
कुष्ठमेडगजाबीजं लाङ्गली गणिकारिका।
जातीपत्रश्च दार्वी च हरितालं मनःशिला॥
कलिङ्गतिलपत्रश्च अर्कक्षीरश्च गुग्गुलुः।
गुडत्वङ्मरिचश्चैव कुङ्कुमं ग्रन्थिपर्णकम्॥
सर्जपर्णासखदिरं विडङ्गं पिप्पली वचा।
घनरोगवमृतायष्टिकेशरं ध्यामकं विषम्॥
विश्वकट्फलमञ्जिष्ठा बोलस्तुम्बीफलं तथा।
कुहोमम्पाकयोः पत्रं वागुजीबीजमांसिके॥
एला ज्योतिष्मतीमूलं शिरीषो गोमयाद्रसः।
चन्दने कुष्ठनिर्गुण्डीविशालामल्लिकाद्वयम्॥
वासाश्वकर्णौ ब्राह्मी च आह्वचम्पककुड्मलम्।
एतैः कल्कैः पचेत्तैलं तृणकस्वरसद्रवम्।
सर्वत्वग्दोषहरणं महातृणकसंज्ञितम्॥ ७८॥

---

...पि खदिरस्य" इति अन्ये तु सामान्यश्रुतौ प्रधानकल्पत्वेन तिलतैलमेव ग्राह्यम।
... तु सार्षपादिविशेषोक्तित्वेव सार्षपादिग्रहणमित्याहुः। एवमन्यत्रापि एव-
...तीये ज्ञेयम्॥ ७६॥

मञ्जिष्ठेत्यादौ।—रुक् कुष्ठम्, तृणकं गन्धतृणम। हरिद्रेत्यादौ - लाङ्गली
...लाङ्गलीति ख्याता, कलिङ्ग इन्द्रयव, क्षीरा चीरपर्णी, ग्रन्थिपर्णं गेंठेला,
...मक गन्धतृणम्, बोलो गन्धरस, तुम्बीफल पक्वतिक्तालाबु.; मल्लिकाद्वयं
...ल्लिका इफरमल्लिका च, आह्वो नवनीतखोटि., चम्पककुड्मलं चम्पककलिका।

वज्रकतैलम्—

सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ।
मूलं स्नुहाशिरीषाभ्यां चित्रकास्फोतयोरपि ॥
करञ्जबीजं त्रिफलां त्रिकटुं रजनीद्वयम् ।
सिद्धार्थकं विडङ्गञ्च प्रपुन्नाडञ्च संहरेत् ॥
मूत्रपिष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् ।
अभ्यङ्गाद्वज्रकं नाम नाडीदुष्टव्रणापहम् ॥ ७९ ॥

मरिचाद्यं तैलम्—

मरिचालशिलाब्दार्कपयोऽश्वारिजटात्रिवृत् ।
शकृद्रसविशालारुङ् निशायुग्दारुचन्दनैः ॥
कटुतैलात् पचेत् प्रस्थं द्वाचैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते ॥ ८० ॥

स्वल्पमरिचाद्यं तैलम्—

मरिचं त्रिवृता दन्ती चीरमार्कं शकृद्रसः ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥

---

वज्रकस्वरसो द्रवः पाकसाधनं जलं यस्य तत्तथा । अत्रान्तरे सोमराजीतैलं केचित् पठन्ति तत्तु न टीकासम्मतमिति ॥ ७७ । ७८ ॥

सप्तपर्णाद्यादि ।—सुश्रुतस्य । मूत्रपिष्टैः पचेत्तैलमिति पाकोऽपि गोमूत्रेणैव आस्फोता श्वेतार्कमूलमिति केचित् । अत्र तिलतैलमेव देयम्, "तैलं ... साधितं तैः समूत्रैः" इति वाग्भटसंवादात् । तैलमत्र सार्षपम् ॥ ७९ ॥

स्वल्पमरिचाद्यतैले ।—आलं हरितालम्; शिला मनःशिला, अर्कपयोऽर्कक्षीरम्, अश्वारिः करवीरः; जटा जटामांसी; चक्रपाणिदादिपठितमरिचाद्ये मांसी-दर्शनात् व्यवहाराच्च; शकृद्रसो गोमयरसः, अयमपि कल्कः; विशाला गोरक्षकर्कटी, रुक् कुष्ठम्; निशायुक् हरिद्राद्वयम् । प्रस्थमिति प्रस्थपरिमितं तैलं सामानाधिकरण्यं न विरुध्यते । गोमूत्रमत्र चतुर्गुणं बोध्यम् ॥ ८० ॥

विशाला करवीरश्च हरितालं मनःशिला ।
चित्रको लाङ्गलाख्या च विडङ्गं चक्रमर्दकम् ॥
शिरीषं कुटजो निम्बः सप्तपर्णः स्नुगाप्लुता: ।
सम्पाको नक्तमालोऽब्दः खदिरं पिप्पली वचा ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् ।
आढ़कं कटुतैलस्य गोमूत्रन्तु चतुर्गुणम् ॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ।
पक्वा तैलवरं ह्येतन्म्रक्षयेत् कौष्ठिकान् व्रणान् ॥
पामाविचर्च्चिकादद्रुकण्डूविस्फोटकानि च ।
वलयः पलितं छायानीलिव्यङ्गं तथैव च ॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यश्च जायते ।
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते ॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम् ।
वलीवर्दस्तुरङ्गो वा गजो वा वायुपीड़ितः ।
एभिरभ्यञ्जनैर्गाढ़ं भवेन्मारुतविक्रमः ॥ ८१ ॥

विषतैलम्—नक्तमालं हरिद्रे द्वे अर्कं तगरमेव च ।
करवीरं वचा कुष्ठमास्फोता रक्तचन्दनम् ॥
मालती सप्तपर्णश्च मञ्जिष्ठा सिन्धुवारिका ।
एषामर्द्धपलान् भागान् विषस्यापि पलं भवेत् ॥
चतुर्गुणे गवां मूत्र तैलप्रस्थं विपाचयेत् ।
श्वित्रविस्फोटकिटिमकीटलूताविचर्च्चिका: ॥
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः ।
विषतैलमिदं नाम्ना सर्वव्रणविशोधनम् ॥ ८२ ॥

---

इहम्मरिचाद्ये—शक्रद्रसः पूर्ववत्, कुटजस्य च फलमित्याह । स्नुक्छायास्तु क्षीरम् । प्रथमे वयसीति वयःसन्धौ ॥ ८१ ॥

करवीराद्यं तैलम्—

श्वेतकरवीररसो गोमूत्रं चित्रकं विड़ङ्गञ्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ ८३ ॥

श्वेतकरवीराद्यं तैलम्—

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे ।
चर्मदलसिध्मपामाविस्फोटक्रिमिकिटिमजित्तैलम् ॥८४॥

सिन्दूराद्यं तैलम्—

सिन्दूरार्द्धपलात् पिष्ट्वा जीरकस्य पलं तथा ।
कटुतैलं पचेन्मानीं सद्यः पामाहरं परम् ॥ ८५ ॥

महासिन्दूराद्यं तैलम्—

सिन्दूरं चन्दनं मांसीविड़ङ्गं रजनीद्वयम् ।
प्रियङ्गुपद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥
जात्यर्कत्रिवृतानिम्बकरञ्जं विषमेव च ।
कृष्णावेतकलोध्रञ्च प्रपुन्नाड़ञ्च संहरेत् ॥

---

विषतैले नक्तमालं करञ्जवीजम्, अर्कस्य चीरम्; तगरं तगरपादुका, माल मालती तस्याः पत्रम्, सिन्धुवारिका निर्गुण्डी ॥ ८२ ॥

श्वेतकरवीरेत्यादौ ।—करवीररसगोमूत्रयोर्मिलित्वा चातुर्गुण्यम् । शेषस्य कल्कत्वम् ॥ ८३ ॥

श्वेतकरवीरमूलमित्यादौ ।—श्वेतकरवीरस्य मूलं यत्र, श्वेतं करवीरस्य मू यत्रेति वा विग्रहः तैलविशेषणता ज्ञेया । विषांशसाधितमिति विषस्यांशश्च भागः, स च करवीरमूलापेक्षया इति केचित् । अन्ये तु गतविषतैले विषस्य प मुक्तं तदपेक्षया कर्षमाहुः, तन्न तन्त्रान्तरीयवाक्यत्वात् । अन्ये पुनरंशो भाग तेन विषकरवीरमूलयोः समभागयोरेव कल्कत्व, व्यवहारोऽप्यनेनैव ॥ ८४ ॥

स्वल्पसिन्दूराद्ये मानीमित्यष्टौ पलानि । वृन्दे तु "कटुतैलं पचेदाभ्या म पामाहर परम्" इति पठ्यते । तन्मतेऽपि वृद्धवैद्यव्यवहारादेव पलाष्टकम् ॥ ८५ ॥

श्लक्ष्णपिष्टानि सर्वाणि योजयेत्तैलमात्रया ।
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥
पामाविचर्च्चिकाकण्डूविसर्पादिविनाशनम् ।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् बहून् ॥ ८६ ॥

आदित्यपाकं तैलम्—

मञ्जिष्ठात्रिफलालाक्षानिशाशिलालगन्धकैः ।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥ ८७ ॥

दूर्वाद्यं तैलम्—

स्वरसेन च दूर्वायाः पचेत्तैलं चतुर्गुणम् ।
कच्छूविचर्च्चिकापामा अभ्यङ्गादेव नाशयेत् ॥ ८८ ॥

अर्कमनःशिलातैले—

अर्कपत्ररसे पक्वं कटुतैलं निशायुतम् ।
मनःशिलायुतं वापि पामाकण्ड्वादिनाशनम् ॥ ८९ ॥

गण्डीरिकाद्यं तैलम्—

गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वग्लवणैः समूत्रैः ।
तैलं पचेन्मण्डलकुष्ठदद्रुदुष्टव्रणारुःकिटिमापहारि ॥ ९० ॥

---

महासिन्दूराद्ये—जात्याः पत्रं, अर्कस्य चीरं, करञ्जस्य फलम् । तैलमात्रया द्रव्यरूपया ॥ ८६ ॥

आदित्यपाकतैले—जलं तैलसमं दत्त्वा जलशोषपर्य्यन्तमातपे स्थाप्यं, जलं विना पाकानुपपत्तेः । अतएव इन्द्रलुप्तोक्तादित्यपाकेऽपि गुडूचीरसमेव तैलसमं व्यवहरन्ति वृद्धाः । अन्ये तु द्रवानुक्तावद्रवमेवादित्यपाकमाहुः ॥ ८७ ॥

दूर्वातैलं चतुर्गुणं यथा स्यात्तथा दूर्वास्वरसेन पचेत् । दूर्वास्वरसेन चतुर्गुणेन तैलं पचेदित्यर्थः । वृन्देऽपि "स्वरसेऽपि च दूर्वायाः पचेत्तैलं चतुर्गुणे" इति पाठः ॥ ८८ ॥

अर्कतैले कल्कभेदात् योगद्वयं, स्वरसश्चतुर्गुणः, कल्कश्चाष्टांश एव स्वरससाध्यत्वात् ॥ ८९ ॥

गण्डीरिकेत्यादौ ।—गण्डीरिका सुही, तस्याः चीरं ; एवमर्कस्यापि , द्रुम

पृथ्वीसारतैलम्—

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः।
नाड़ीचबीजाद्विषतः काञ्जिपिष्टं पलं पलम्॥
करञ्जतैलाष्टपलं काञ्जिकस्य पुलं पुनः।
मिश्रितं सूर्य्यसम्पक्वं तैलं कुष्ठव्रणास्रजित्॥ ८१॥

सोमराजीतैलम्—

सोमराजी हरिद्रे द्वे सर्षपारग्वधं गदम्।
करञ्जैड़गजाबीजं पत्रमारग्वधस्य च॥
चतुर्गुणं जलं दत्त्वा गोमूत्रप्रस्थसंयुतम्।
विपचेत् सार्षपं तैलं नाड़ीदुष्टव्रणापहम्।
अनेनाशु प्रणश्यन्ति कुष्ठान्यष्टादशैव तु॥
नीलिका पिप्लवो व्यङ्गा गम्भीरं वातशोणितम्।
कण्डून्यच्छप्रशमनं कच्छूपामाविनाशनम्॥ ८२॥

पक्षात् पक्षाच्छर्दनान्यभ्युपेयान्
मासान्मासात् स्रंसनञ्चाप्यधस्तात्।
त्र्यहात् त्र्यहान्नस्ततश्चावपीड़ान्
मासेष्वसृङ्मोक्षयेत् षट्सु षट्सु॥ ८३॥

यौषिन्मांससुरात्यागः शालिमुद्गयवादयः।
पुराणास्तिक्तशाकञ्च जाङ्गलं कुष्ठिनां हितम्॥ ८४॥

इति कुष्ठचिकित्सा॥

---

स्वर्णाल्लस्य त्वक्; लवणं सैन्धवं, यदुक्तमायुर्वेदसारे "पक्वं कर्ण्यकसिन्धूत्थकर स्वर्ज्जिकार्कवैः। समूत्रैस्तमाहन्ति दद्रूणि किटिभानि च" इति। अत्र कर्णौ स्वर्णालुः। तथा च द्रव्यावली "आरेवतस्तथा कर्णौ कर्णिकारोऽथ वैरत." इति। अन्ये तु गन्धीरिका मञ्जिष्ठा, द्रुमः कुटजस्तस्य त्वगित्याहुः॥ ८०॥

चित्रकेति।—अत्यन्तोत्कृष्टगुणत्वात् पृथ्वीसार इति संज्ञा॥ ८१॥

पक्षादित्यादि।—सुश्रुतस्य। स्रंसनं विरेचनम्। नस्तत इति नासापुटयोरव-

## अथोदर्द-कोठ-शीतपित्त-चिकित्सा।

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः।
उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥ १ ॥
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते।
त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकम् ॥ २ ॥
विसर्पोक्तममृतादिं भिषगत्रापि योजयेत्।
सितां मधुकसंयुक्तां गुडमामलकैः सह ॥ ३ ॥
सगुडं दीप्यकं यस्तु खादेत् पथ्यान्नभुङ् नरः।
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ ४ ॥
सिद्धार्थरजनीकल्कैः प्रपुन्नाड़तिलैः सह।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं परम् ॥ ५ ॥
दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः।
क्रिमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥ ६ ॥

---

पीडास्य विशेषान् दद्यात्। अवपीडशब्देन बहुमात्रसर्पिःप्रयोगोऽप्युच्यते तन्निरामाय नक्तं इत्युक्तम्। यौगिकादित्यादौ।—मासमानुपञ्च निषिद्ध आड्लस्य विधानात् ॥ ९२—९४ ॥

इति कुष्ठाधिकारः।

---

प्रायस्तुल्यचिकित्सितत्वात् उदर्दादिचिकित्सितमुच्यते। अभ्यङ्ग इत्यादौ। सेकश्चाम्ब स्वेद इत्यपि पाठः। अत एवोक्तमन्यत्र "अभ्यङ्गः कटुतैलेन स्वेदश्चोष्णवारिणा" इति। पटोलारिष्टवारिणेत्यत्रानुक्तमपि मदनफलकल्कं प्रदेयम्। त्रिफलापुरकृष्णाभिरिति त्रिफलायाः कषायः, गुग्गुलुपिप्पल्यौ प्रक्षेप्य, प्रक्षेपश्च व्यवहारादगुग्गुलोर्दशमाषका, पिप्पल्यास्तु षण्माषका इति ॥ १ ॥

त्रिफला क्षौद्रसहितामिति त्रिफलायाः क्वाथः, क्षौद्रन्तु प्रक्षेप्यम्। नवकार्षिकं वातरक्तोक्तम्। विसर्पोक्तममृतादिमिति अमृतवृषपटोलं मुस्तकमित्यादिनोक्तम्

अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्द्दकोठान् सप्ताहादेव नाशयेत् ॥ ७ ॥
कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ।
उदर्द्दोक्तां क्रियाञ्चापि कोठरोगे समागतः ।
सर्पिः पोत्वा महातिक्तं कार्य्यं शोणितमोचणम् ॥ ८ ॥
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात्
विस्फोटकोठक्षतशीतपित्तं कण्डूस्रपित्तं सहसा च हन्यात् ॥९॥
क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ।
गाम्भारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ।
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ॥ १० ॥
तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ।
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ॥
भोजनं सर्वदा कार्य्यं लावतित्तिरिजेन वा ।
शीतलान्यन्नपानानि बुद्धा दोषगतिं भिषक् ।
उष्णानि वा यथाकाल शीतपित्ते प्रयोजयेत् ॥ ११ ॥

इत्युदर्द्द-कोठ शीतपित्त-चिकित्सा ।

---

तस्यैव शीतपित्तहन्तृत्वेनोक्तत्वात्, न पुनरम्लतत्रषपटोल निम्बकल्केकृपेतमित्या दिकम्। सिता मधुकमयुक्तामित्यत्र सिता कटुकया युक्तामिति केचित पठन्ति टीष्यक यमानिकाम्। उदर्द्दचिकित्सां कोठरोगेऽप्यतिदिशति। उदर्द्दत्यादि महातिक्त सर्पि कुष्ठोक्तम। निम्बस्येत्यादि योगद्वयम्, अन्ये तु एकमेव योग वदन्ति। रकसा चुद्रकुष्ठभद इति श्रीकण्ठ। क्षारो यवक्षार, तलञ्च कटुतल वदन्ति। गाम्भारिकेत्यादि।—सुपक्वशुष्कगाम्भारीफल गव्य दुग्ध दत्त्वा उत्स्विन्न खाद्यम्। तैलत्यादि। सुश्रुतोक्त एलादिको गणस्तैलयोगेन उद्वर्त्तनयोगेन च योज्य इत्यर्थ ॥ २—११ ॥

इत्युदर्द्दाद्यधिकार-विवृति ।

## अथाम्लपित्तचिकित्सा।

प्रागम्लपित्तरोगार्त्तं कुलकारिष्टवारिभिः।
रामाठक्षौद्रसिन्धूत्थैर्वमनं कारयेद्भिषक् ॥ १ ॥
वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत्।
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम्।
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥ २ ॥
क्रियाशुद्धस्य शमनी ह्यनुबन्धव्यपेक्षया।
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना ॥
ऊर्द्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥ ३ ॥
तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत्।
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिबेत् ॥ ४ ॥
निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धिमधुयुतः पीतः।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५ ॥

उक्तसङ्गत्यैव अम्लपित्तचिकित्सितमुच्यते। वान्तिं कृत्वेति।—वमनञ्च अरिष्टादिभिः अत्र तन्त्रान्तरं यथा, —"प्रागम्लपित्तरोगार्त्तं कुलकारिष्टवारिभिः। रामाठक्षौद्रसिन्धूत्थैर्वमनं कारयेद्भिषक्" इति। राठं मदनफलम् ॥ १ ॥ २ ॥

क्रियेत्यादि।—दोषसंसर्गजे अनुबन्धव्यपेक्षया अनुबन्धभूतदोषाविरोधेन शमनी शमनरूपा भेषजाहारकल्पना क्रिया कार्य्येत्यर्थः। उक्तवमनविरेकयोर्विषयमाह ऊर्द्ध्वगमित्यादि। ऊर्द्ध्वगं बहुकफं वमनैः अधोगं तु अम्लपित्तं सविबन्धं विरेचनैः ॥ ३ ॥

यवगोधूमेति।—यवगोधूमौ हि सरत्वमधुरत्वादिना अम्लपित्तहितौ, तयोः पथ्यादिरूपान् विकारान्। तीक्ष्णसंस्कारवर्जिता इति कटुम्लवणादिसंस्कारसंयोगरहिता। यथास्वमिति पिबेदित्यनेन योज्यम्, तत्र दोषसंसर्गाद्यपेक्षया तत्तद्दोषशमनौषधेन द्रवेण पिबेदित्यर्थः। त्रिसुगन्धिमधुयुत इति त्रिसुगन्धि एलापत्रकम्, तच्च सौगन्ध्यमात्रकारकम्, मधु तु प्रक्षेपन्यायेन योज्यम् ॥ ४ ॥ ५ ॥

कफपित्तवमीकण्डु-ज्वरविस्फोटदाहहा।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥ ६ ॥
पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत्।
कण्डूपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ ७ ॥

पटोलविश्वामृतरोहिणीकृतम्
जलं पिबेत् पित्तकफोच्छ्रये तु।
शूलभ्रमारोचकवह्निमान्द्य-
दाहज्वरच्छर्दिनिवारणं तत् ॥ ८ ॥

यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिं तथा ॥ ९ ॥
द्राक्षा—वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ १० ॥
फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः।
पीतः क्लीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तजित् ॥ ११ ॥
पथ्याभृङ्गरजश्चूर्णं युक्तं जीर्णगुडेन तु।
जयेदम्लपित्तजन्यां छर्दिमन्नविदाहजाम् ॥ १२ ॥

वासागुग्गुलुः-

वासानिम्बपटोलत्रिफलाघनयासयोजितो जयति।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ १३ ॥

---

कफेत्यादौ।—शृङ्गवेर शुण्ठी ॥ ६—१० ॥

फलत्रिकमित्यादौ।—तिक्तेत्यत परमेषामिति शेष, तेन फलत्रिकादीनि सप्तार्तान एषा क्वाथ इत्यर्थ फलति। क्लीतकं यष्टीमधु, सिताक्लीतकमधूनि प्रक्षेप्याणि ॥ ११ ॥

पथ्येत्यादौ।—भृङ्गरजश्चूर्णं भृङ्गराजस्य चूर्णम्। वासेत्यादौ।—अत्रान पीत शालकः, यासो दुरालभा, वासादीनां चूर्णं गुग्गुलुसमं गुग्गुलौ प्रधानत्वात्। क्रमश इत्यभ्यासेन ॥ १२ ॥ १३ ॥

छिन्नाखदिरयष्ट्याह्वदार्वीभिर्वा मधुद्रवम्।
सद्राक्षामभयां खादेत् सक्षौद्रां सगुड़ाञ्च ताम्॥ १४॥
कटुका सितावलेह्या पटोलनिम्बञ्च मधुसमायुक्तम्॥ १५॥
रक्तस्रुतौ च युक्त्या खण्डं कुष्माण्डकं श्रेष्ठम्॥ १६॥

पटोलधन्याकमहौषधाब्दैः
कृतः कषायो विनिहन्ति शीघ्रम्।
मन्दानलं पित्तबलासदाह-
च्छर्दिज्वरामानिलशूलरोगान्॥ १७॥

छिन्नोद्भवानिम्बपटोलपत्रं फलत्रिकं सुक्वथितं सुशीतम्।
क्षौद्रान्वितं पीतमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम्॥ १८॥

पटोलत्रिफलानिम्बशृतं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये॥ १८॥
सिंहास्यामृतभण्टाकीक्वाथं पीत्वा समाक्षिकम्।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम्॥ २०॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा।
पक्तिशूलापहा योगास्तथा खण्डामलक्यपि॥ २१॥

छिन्नेत्यादौ।— मधुद्रवमिति बहुव्रीहि, तन्नाम्न इत्यस्य विशेषण, मध्वत्र प्रन नष्ट। सद्राक्षामित्यादि।— योगद्वयमेतत॥ १४॥

कटुका सिता चेति।—कटुका कटुरोहिणी सितया लेह्यव्यर्थः। पटोलनिम्बञ्च मधुसमायुक्तमिति पटोलनिम्बयो क्वाथं मधु प्रक्षिप्य पिबेदित्याहुः। कुष्माण्ड-खण्डक रक्तपित्तोक्तम्। तन्त्रान्तरे पटोलधन्याकेत्यादिर्योगस्तथा छिन्नोद्भवानिम्ब-त्यादियोगश्च क्वचित् पुस्तके दृश्यते, तौ च निश्चलेन वृन्देन च धृतौ। पटोल त्रिफलेत्यादा अरिष्टो निम्बः। सिंहास्येत्यादौ। सिंहास्यो वासक, भण्टाकी कण्टकारी॥ १५—२०॥

वासाघृत रक्तपित्तोक्तम्। तिक्तघृत कुष्ठोक्तमहातिक्तक तदेव अम्लपित्तहरत्व

पिप्पलीमधुसंयुक्ता चाम्लपित्तविनाशिनी।
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम्॥
गुडपिप्पलिपथ्याभिस्तुल्याभिर्मोदकीकृतः।
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निञ्च दीपयेत्॥ २२॥

हिङ्गु च कतकफलानि च तिन्तिडीत्वचो घृतञ्च पुटदग्धम्।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम्॥ २३॥

कान्तपात्रे वराकल्को व्युषितोऽभ्यासयोगतः।
सिताक्षौद्रसमायुक्तः कफपित्तहरः स्मृतः॥ २४॥
एकोंऽशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः।
शक्तुर्दशगुणो देयः शर्करामधुरीकृतः॥
शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम्।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम्॥ २५॥

---

च्यते। पिप्पलीघृतन्तु परिणामशूलोक्तम्, एतच्च यद्यपि "पक्तिशूलापहा योगा" इत्यनेनैव लभ्यते तथापि विशेषार्थमुक्तं; यथा खण्डामलकी। पिप्पलीमधुसंयुक्तेति अवलेहविधया॥ २१॥

जम्बीरेत्यादौ।—पक्वजम्बीरफलस्वरसः, अयञ्च योगो वातोल्बणेऽम्लपित्त इत्याहुः॥ २२॥

हिङ्ग्वित्यादौ—कतकफलं जलप्रसादनफलं प्रायो मगधे भवति। यथोत्तरं द्विगुणमिति हिङ्ग्वपेक्षया कतकफलं द्विगुणं, कतकफलापेक्षया तिन्तिडीतरुत्वक् द्विगुणा, तिन्तिडीतरुत्वगपेक्षया च घृतं द्विगुणमिति। एतत् सर्वं स्थालीमध्ये निक्षिप्य शरावेण पिधायान्तर्धूमं दग्ध्वा माषकचतुष्टयमुपयोज्यं, तप्तजलञ्चानुपानं तन्त्रान्तरसंवादात्। कान्तपात्र इति कान्ताख्यलौहविशेषपात्रे प्रक्षिप्य स्थापितत्रिफलाकल्क इत्यर्थः। शर्करामधुनी प्रक्षेप्ये॥ २३॥ २४॥

एकोंऽश इत्यादौ।—पञ्चनिम्बानामिति निम्बस्य त्वक्पत्रपुष्पफलमूलानां पञ्चानां मिलितानामेको भागः। शक्तुर्दशगुण इति निम्बभागापेक्षया, मात्रा च पलमर्द्धपलं वा आहारद्रव्यमकृत्वा[illegible]यात्॥ २५॥

अभ्रशुद्धिः—माषभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहारखण्डकर्णरसैरथ ॥
तण्डुलीयकशालिञ्च कालमारिषजेन च ।
वृषीरबृहतीभृङ्गलक्ष्मणाकेशराजकैः ॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः ॥ २६ ॥
लौहशुद्धिः—स्वर्णमाक्षिकशालिञ्च ध्मातं निर्वापितं जले ।
त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः ॥
हस्त्यश्वकरीकर्णत्रिफलावृद्धदारकैः ।
माणकन्दास्थिसंहारशृङ्गवेरभवै रसैः ॥
दशमूलीमुण्डितिकातालमूलीसमुद्भवैः ।
पुटितं साधु यत्नेन शुद्धिमेवमयो व्रजेत् ॥ २७ ॥

---

सम्प्रति सुधावती व्याख्या । तत्र प्रथमं माषभक्तेत्यादिना अभ्रकशुद्धिमाह । माषधान्यभेदः । अत्राभ्रकं कृष्णाभ्रकं ग्राह्यं श्रेष्ठत्वात् । तच्चैकपचीकृत्य उदूखलादिषु सञ्चूर्ण्य माषभक्तकाञ्जिके अहोरात्रं स्थापयित्वा तेनैव काञ्जिकेन पेषणीयम् । ततः कन्दादीनां व्यस्तसमस्तानां स्वरसेन पुनः पेषणं भावनं पुटनञ्च बहुधा कुर्वीत यावन्निश्चन्द्रिकत्वमभ्रस्य स्यादित्यर्थः । तत्र कन्दो वन्य ओलः, खण्डकर्णः आलुकानः ( खारकोनः ) इति ख्यातः । तण्डुलीयकालमारिषयोः स्वल्पपत्र-बहुपत्रभेदेन भेदः । वृषीरः पुनर्नवा, भृङ्गी भृङ्गराजः, लक्ष्मणा स्वनामख्याता । विहायस इत्यभ्रकस्य ॥ २६ ॥

लौहशुद्धिमाह स्वर्णमाक्षिकेत्यादि । पिष्टाभ्यां स्वर्णमाक्षिकशालिञ्चाभ्यां कान्तादि-लौहं लिप्त्वा ततो भस्त्रया वह्नौ ध्मातं ततोऽग्रतः वक्ष्यमाणविधिकथितत्रिफला-क्वाथे निर्वापितमित्यर्थः । त्रैफले जल इति त्रिफलाक्वाथ इत्यर्थः । तद्देव निर्वाप्य-मारितलौहचूर्णं प्रक्षालयन् भानुपाकादिशोधितं हस्त्यश्वकरिकर्णपलाशादिस्वरसैः पुटितं कुर्यादित्याह । हस्त्यश्वेत्यादि । हस्त्यश्वो बडवड़ इति ख्यातः ; अत्र हस्त्यश्वकरिकर्णाद्येकादशपुटनद्रव्येषु मध्ये येषां स्वरसप्राप्तिस्तेषां स्वरसो ग्राह्यः ।

मण्डूरशुद्धिः—वशिरं श्वेतवाव्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च वर्षाभूं दत्त्वाधश्चोर्द्ध मेव च॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्।
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता॥ २८॥

रसशुद्धिः—

जयन्त्या वर्द्धमानस्य आर्द्रकस्वरसेन च।
वायस्याश्चानुपूर्व्येवं मर्दनं रसशोधनम्॥ २९॥

गन्धकशुद्धिः—

गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम्॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम्।
यत्नाद्भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति॥ ३ ॥

---

यत्रान्तु स्वरसो न लभ्यते तत्र पुटनीयलौहसमानामष्टगुणं जलं दत्त्वा अष्टमभाग-शेषक्वाथेन पुटनं कर्त्तव्यमिति॥ २७॥

वशिरमित्यादिना लौहमलशुद्धिमाह। वशिरः श्वेतव्यावर्त्तः। मधुपर्णी गुडूची। मयूरकोऽपामार्गः। तण्डुलीयः क्षुद्रमारिषः। वर्षाभूः पुनर्नवा। सुजीर्णमण्डूरं पुराणमण्डूरम्। वशिरादीनां मूलत्वक्पत्रपल्लवान् स्थाल्याम-पातयित्वा तदुपरि जीर्णमण्डूरं दत्त्वा तैरेव पल्लवादिभिराच्छाद्य गोमूत्रेण दिवसत्रयं व्याप्य सुदग्धं यथा स्यात्तथा पाको विधेयः। तदनु शरावेण पिधायान्तर्-वाष्पं यथा स्यात्तथा दिनत्रयं स्थाप्यम्। तदनु प्रचण्डातपे शोषयित्वा चूर्णयेदिति मण्डूरशुद्धिः॥ २८॥

अथ रसशुद्धिमाह, जयन्त्या इत्यादि।—वर्द्धमान एरण्डः। वायसी काकमाची॥ २९॥

गन्धकशुद्धिमाह, गन्धकमित्यादि। क्षुद्रितमिति तण्डुलकणपरिमाणं कृत्वा लौहभाजने स्थापयित्वा भृङ्गराजस्वरसेनाप्लाव्य चण्डातपे शोषयेत्. एवमपरवारद्वय

सुधावती गुड़िका—

गगनाद्विपलं चूर्णं लौहस्य पलमात्रकम्।
लौहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम्॥
मण्डूकपर्णीविशिर-तालमूलीरसैः पुनः।
वरोभृङ्गकेशराज-कालमारिषजैरथ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम्।
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः॥
तस्मिनाक् च शिलाखल्ले यत्नतः कज्जलीकृतम्।
वचा चव्यं यमानी च जीरके शतपुष्पिका॥
व्योषं मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा॥
भृङ्गमाणककन्दौ च खण्डकर्णक एव च।
दन्तोत्पला केशराज-कालावकडकोऽपि च॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च॥
एतत् सर्वं समालोड्य लौहपात्रे तु भावयेत्।

---

र्पिप। तदनु प्रक्षाल्यातपे संशोष्य लौहपात्रमध्ये स्थापयित्वा ज्वलदङ्गारोपरि दत्त्वा दाण्डवया सञ्चाल्य यदा तन्मन्दद्रवीभवति तदा भृङ्गराजस्वरसपरिपूरित पात्रे घृताक्तमृन्मयस्य वा पिहितमुखे गन्धकं त्वरया ढालयित्वा पात्रान्तरेण पिदध्यात्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति गन्धकशुद्धिः ॥ ३० ।

अथ शोधिताभ्रकलौहलौहमलचूर्णानां मिलित्वा स्थालीपाकमाह गगनादित्यादि। गगनादित्यभ्रकात्। मण्डूकपर्ण्यादितालमूल्यन्तानां रसैर्भृङ्गकलौह सम्यङ् मर्द्दितचूर्णसमेनैकः स्थालीपाकः। वरोति शतावरी। तत शतावर्य्यादि कालमारिषान्तरसेन च द्वितीयः स्थालीपाकः। तदनु त्रिफलाभद्रमुस्ताभिरप्यनेन पाककार्य्यविधिकृतक्वाथेन तथैव तृतीयः स्थालीपाक इति। निश्चलस्तु मण्डूकपर्ण्यादितालमूल्यन्तरसेन पुटदानमाह। तन्तु न सम्यक्, पुटदानाश्रुते

आतपे दण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा ॥
तद्रसेन शिलापिष्टां गुड़िकां कारयेद्भिषक्।
बदरास्थिनिभां शुष्कां सुनिगुप्तां निधापयेत् ॥
तत् प्रातर्भोजनादौ च सेवितं गुड़िकात्रयम्।
शीतोदकानुपानञ्च हितं मधुरवर्जितम् ॥
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः।
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम् ॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम्।
पाण्डुरोगञ्च सर्वञ्च शोथोदरगुदामयान् ॥
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम्।
प्लीहानं श्वासमानाहमामवातं सुदारुणम्।
गुड़ी क्षुधावती सेयं विख्याता रोगनाशिनी ॥ ३१ ॥

जीरकाद्यं घृतम्—

पिष्ट्वाजाजीं सधन्याकं घृतप्रस्थं विपाचयेत्।
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥ ३२ ॥

---

पटदानस्य तु रसशोधनादिग्रन्थेन व्यवधानाच्चेति। स्थालीपाकाद्विचूर्णितामिति स्थालीपाकानन्तरं पुनर्लौहशिलाया चूर्णीकर्त्तव्यमित्यर्थः। एतदनन्तरं यद्विधेयं तदाह, रसगन्धकयो कर्षावित्यादि। रसगन्धकयोः कर्षौ प्रत्येकमिति च्छेदः तन्मिलितरसगन्धककर्षचतुष्टयमेकत्र इत्येकीकृत्य कज्जलीकृतं ग्राह्यमिति योज्यम् तथा चव्यमित्यादिना प्रक्षेप्यचूर्णद्रव्याण्याह। खरमञ्जरी अपामार्गः। सूर्य्यावर्त्तनामा हुलहुलः सूर्य्यावर्त्त, स च श्वेतः। माणककन्दो मानकन्दः। एषाञ्च वचादीनां चूर्णं प्रत्येकमर्द्धपलम्, त्रिफलाया मिलित्वा सार्द्धपलमेकम्। तेन त्रिफलाया प्रत्येकमर्द्धपलमिति फलति। बदरास्थिमिता इति अत्रोपदेशात् कलायपरिमाणा इत्याह अत्र क्षीरादिवर्जनं वारिभक्ताम्लकाञ्जिकादिविधानञ्च प्रयोगमाहात्म्यात्। अचिन्त्या हि योगशक्तिरिति ॥ ३१ ॥

पटोलशुण्ठीघृते—

पटोलशुण्ठ्योः कल्काभ्यां केवलं कुलकेन वा।
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम्॥ ३३॥

पिप्पलीघृतम्—

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम्।
पिबेच्च प्रातरुत्थाय अम्लपित्तनिवृत्तये॥ ३४॥

द्राक्षाद्यं घृतम्—

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरुपेतमेभिः॥
युञ्जीत मात्रां सह भोजनेन सर्वत्र पानेऽपि भिषग्विदध्यात्।
श्वासमपित्तं ग्रहणीं प्रवृद्धां कामाग्निसादज्वरमम्लपित्तम्।
सर्वं निहन्याद्घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च॥

शतावरीघृतम्—

शतावरीमूलकल्कं घृतप्रस्थं पयः समम्।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम्॥
नाशयेदम्लपित्तञ्च वातपित्तोत्तरान् गदान्।
रक्तपित्तं तृषां मूर्च्छां श्वाससन्तापमेव च॥ ३६॥

इत्यम्लपित्त-चिकित्सा।

पिबेत्यादौ।—जलं चतुर्गुणम्। पिप्पलीघृते मधुप्लुतमिति सिद्धं घृतं घृतचतुर्थांशादिकमधुयुक्तम्॥ ३२—३४॥

द्राक्षेत्यादौ।—शक्रः कुटजः, तस्य फलमिति वदन्ति। पद्मं पद्मकाष्ठम॥३५॥

शतावरीघृते पयः सममिति पयःशब्देनेह पयःसाधर्म्यात् शतावर्या रसं ग्राह्य, क्षीर, तस्य पृथगुपात्तत्वात। सममिति घृतेन सह तुल्यम्॥ ३६॥

इत्यम्लपित्ताधिकारः।

## अथ विसर्प-विस्फोट-चिकित्सा।

विरेकवमनालेप-सेचनासृग्विमोक्षणैः।
उपाचरेद्यथादोषं विसर्पानविदाहिभिः॥ १॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च।
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह॥ २॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरशान्तये॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत्॥ ३॥
तृणवर्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम्।
प्रदेहसेकसर्पिर्भिर्विसर्पे वातसम्भवे॥ ४॥
कुष्ठं शताह्वासुरदारुमुस्तावाराहिकुस्तुम्बुरुकृष्णगन्धाः।
वातेऽर्कवंशार्त्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु॥ ५

अत्र यद्यपि विसर्पेऽपि पित्तस्य सर्वत्रानुबन्धात् प्रायस्तच्चिकित्सत्वात् पित्तहरं विसर्पचिकित्सितमुच्यते। अविदाहिभिरित्यन्नपानैरिति शेषः। पटोलेत्यादि।—पटोलपिचुमर्दाभ्यामित्येको योगः। पिप्पल्या मदनेन च द्वितीयः। इन्द्रयवान् योगद्वयेऽपि सम्बध्यते इति केचित्। अन्ये तु पटोलनिम्बयोः क्वाथे पिप्पल्यादित्रयं प्रक्षेप्यमित्येकं योगमाहुः। व्यवहारस्तु रत्नेनैव॥ १॥ २॥

त्रिफलेत्यादि।—त्रिफलाक्वाथे सर्पिस्त्रिवृतं प्रक्षिप्य पचेत्। रसमित्यादावपि विरेकार्थमिति सम्बध्यते॥ ३॥

तृणवर्जमिति तृणपञ्चमूलं वर्जयित्वा पञ्चमूलचतुष्टयम्। तच्च स्वल्पमहत्पञ्चमूलद्वयं प्रसिद्धमेव। कण्टकिपञ्चमूलं वल्लीपञ्चमूलञ्च यथा,—"मधुपर्णी हरिद्रे च विदारी शारिवाऽमृता। वल्ल्याख्यं कण्टकाख्यन्तु श्वदंष्ट्राभीरुश्रेयकैः। आहृत करमर्दैश्च सर्वदोषहराश्च ते।" अत्र अभीरु शतमूली श्रेयकी झिण्टी, अहिंस्रा कालाकड, करमर्दः स्वल्पमधुरफल चोरीति लोके इति सुश्रुतटीका। तृणपञ्चमूलस्य वर्जनमिह पित्तहरत्वेन वातेऽयौगिकत्वात्॥ ४॥

प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः।
मयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपनम्॥ ६॥

कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः॥७॥

प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः।
पद्मकोशीरमधुकचन्दनैर्वा प्रशस्यते॥ ८॥

पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम्।
गुन्द्रामूलन्तु शुक्तिर्वा गैरिकं वा घृतान्वितम्॥ ९॥

न्यग्रोधपादा गुन्द्रा च कदलीगर्भ एव च।
विषघ्न्यश्च लेपः स्याच्छतधौतघृताप्लुतः॥ १०॥

हरेणवो मसूराश्च मुद्गाश्चैव सशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वैर्वा सर्पिषा सह॥ ११॥

---

कष्ठमित्यादि सुश्रुतस्य। वाराही वाराहीकन्द, एतदभावे चर्मकारालुक कसेरुक धनीयकम, कृष्णगन्धा शोभाञ्जनमूल [ अन्ये तु बीज ] अकाऽकन्द वशा वशनाली, आत्तगल्ल आगडामल अर्जुनवल्कल वा। प्रपौण्डरीकेत्यादि। इन्दीवर नीलोत्पलम। कशेर्वित्यादि सुश्रुतस्य। पद्म पद्मकाष्ठ, गुन्द्रा गलुञ्च उत्पल नीलोत्पल कर्दम पद्मिनीस्थानगतकर्दम वस्त्रान्तरा वस्त्रेणान्तरिता एव सति विसर्पे लिप्तदो त्वगाद्युपघाता न स्यात, लेप स्फोटनश्च सुकर भवतीति। लेपा इति बहुवचननिर्देशादेकैकशोऽप्येते लेपा योज्या इति वदन्ति। पञ्चवल्कलैरित कषीतनवटाश्वत्थप्लक्षोडुम्बरवल्कल। प्रशस्यत इत्येव वचनपरिणामेन प्रदेह इति योज्यम॥ ५—८।

पित्तेत्वित्यादि।—श्लोकपादेश्चत्वारो योगा, शङ्खञ्च शैवलञ्चेति समाहारः। गुन्द्रा गलुञ्च, शुक्तिर्मुक्तोत्पत्तिभाण्ड [ शीतवीर्यत्वात मौक्तिकमपीति केचित ]। घृतान्वितमिति योगचतुष्टयेऽपि योज्यम्॥ ९॥

न्यग्रोधेत्यादि।—वाग्भटस्य। न्यग्रोधस्य पादा प्ररोहा अन्ये तु मूलानी त्याह। तरुणा इत्यभिनवाः। तरुणा इत्यत्र गन्द्रात न पाठ वाग्भटे चरके च

द्राक्षारग्वधकाश्मर्यत्रिफलामरुपीलुभिः ।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ १२ ॥
गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः ।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥ १३ ॥
अजाश्वगन्धासरलाथ काला सैकैषिका वाप्यथवाजशृङ्गी ।
गोमूत्रपिष्टो विहितः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥ १४ ॥
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः ।
शिरीषपुष्पं कामाची हिता लेपावचूर्णने ॥

---

तद्दशा इति पाठात् । कदलीगर्भो गर्भस्था कदलीमञ्जरी ; विषग्रन्थिश्चामग्रन्थिः ; हरेणवो वर्त्तुलकलायाः ॥ १० ॥ ११ ॥

द्राक्षेत्यादौ ।—आरग्वधस्य फलम्, अमरुः एरण्डस्तस्य बीजं विरेचकत्वात् पीलुः पीलुरापाक्षिक फलम् । क्वाथेन कल्केन वा योगद्वयमिदम् । तत्र पीलुः एकः, हरीतक्यन्तश्च द्वितीय इति ॥ १२ ॥

गायत्रीत्यादौ ।—अत्र आरग्वधस्य पत्रं, कुटन्नटं कैवर्त्तमुस्तकम् । अस्य योगे वासास्थाने धवस्य कुटन्नटस्थाने कुरण्टकस्य प्रक्षेपादपि बोध्यः । यदाह चरकः— "खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् । कुरण्टकं देवदारु दद्यादालेपनं भिषक् इति ॥ १३ ॥

अजेत्यादि सुश्रुतस्य । अजगन्धा कौकाम्बी, अश्वगन्धा ख्यातैव । सरल त्रिवृत, काला कालाकड़., एकैषिका पाठा, अजशृङ्गी मेषशृङ्गी कर्कटशृङ्गी वा अजगन्धादिरजशृङ्ग्यन्त एको योगः । उक्तं हि वाग्भटे—"कालाजशृङ्गी सरलाश्वगन्धा ह्ययाह्वया । एकैषिका च लेपः स्यात् श्वयथावेकगात्रजे" इति । विहित इति हिमविपरीतः कोष्ण इत्यर्थः ॥ १४ ॥

त्रिफलेत्यादि ।—वाग्भटस्य । समङ्गा वराहक्रान्ता, करवीरकमित्यत्र करवीर

मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसंयुतः॥ १५॥

नवकषायगुग्गुलुः—

अमृतवृषपटोलं निम्बकल्कैरुपेतम्
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तम्
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम्॥ १६॥

अमृतादिः—अमृतवृषपटोलं मुस्तकं सप्तपर्णम्
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च॥ १७॥

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः।
खदिराब्दयुतैः क्वाथो विस्फोटार्त्तिज्वरापहः॥ १८॥
पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः।
समूर्वा रोहिणी पाठा रजनी सदुरालभा।

---

मिति पाठे मूलम्। अनन्ता अनन्तमूलम्। अयं लेपस्तथा वक्ष्यमाणोऽप्यारग्व-धादिः स्वल्पघृतयोगेन स्निग्धः कार्य्यः। एतदनन्तरं प्रदेहाः सर्वत्रैव एते देयाः। स्वल्पघृताप्लुत इति चरकेणोक्तत्वात्। स्नु आतकी मधुवारः। काकाची काकमाची। सर्वविसर्पनुदिति प्रत्येकदोषजसर्वविसर्पनुत् सन्निपातविसर्पस्यासाध्यत्वात्॥ १५॥

अमृतेत्यादौ।—त्रिफलं त्रिफला, व्याधिघातं स्वर्णान्नुफलम्। गुग्गुलोर्भाग युक्तमिति प्रत्यक्षोपयोगे प्रक्षेपपरिभाषयैव देयम्। विरेके कर्त्तव्ये प्रक्षेपमानापेक्षया वेगत्रेनेत्याहुः॥ १६॥

अमृतेत्यादौ।—असितवेत्रं कालियाखतामूलम्, अत्रापि विरेके कर्त्तव्ये गुग्गुलु प्रक्षिपन्ति वृद्धाः॥ १७॥

पटोलेत्यादिना विस्फोटचिकित्सामाह॥ १८॥

कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम्॥ १९ ॥

भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत् कषायः॥ २० ॥

सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः॥ २१ ॥
दुरालभां पर्पटकं पटोलं कटुकां तथा।
सोष्णं गुग्गुलुसंयुक्तं पिबेद्वा खदिराष्टकम्॥ २२ ॥
कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बु वा।
विस्फोटान् नाशयत्याशु वायुर्जलधरानिव॥ २३ ॥
चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः॥ २४ ॥
शुकतरुनतं च मांसी रजनी पद्मा च तुल्यानि।
पिष्टानि शीततोयेन लेपः स्यात् सर्वविस्फोटे॥ २५ ॥
शिरीषमूलमञ्जिष्ठाचव्यामलकयष्टिकाः।
सजातोपल्लवक्षौद्रा विस्फोटे कवड़ग्रहाः॥ २६ ॥

पटोलत्रिफलेत्यादौ।—समूर्वा रोहिणी पाठः रजनी सदुरालभेत्यत्र परमेभि-रिति शेष, तेन एभिः कृत कषाय पाययेदित्यर्थसङ्गति कार्या। त्रिफला योज-येत पुरैरिति त्रिफलाक्वाथं गुग्गुलु प्रक्षिप्य इत्यर्थ। दुरालभामित्यादावप्य-दुरालभादीनां क्वाथो गुग्गुलुप्रक्षेपसहित। सोष्णमिति सहशब्द ईषदर्थ खदिराष्टक समुच्चा वक्ष्यमाणम, इदमपि गुग्गुलुयुक्तमेव पिबेत॥ १९ - २२॥

कुण्डलीत्यादि।—योगद्वयम। कुण्डली गडूची अम्बु क्वाथ। चन्दन-मित्यादौ शारिवा अनन्तमूल जात्यास्तु पत्रम॥ २३। २४॥

शुकतर्वित्यादि वाग्भटस्य। शुकतरु शिरीष नत तगरपादिका। पद्मा ब्राह्मणयष्टिका। वाग्भटे तु "शुकतरुनतं च मांसी" इत्यत्र "शुकतरुनतमाचीका" इति पाठ, माचीकश्च देवदार्विति तट्टीका, तेन सर्वत्र मांसीति पाठो लेखक-दोषात॥ २५॥

शिरीषेत्यादौ।—शिरीषमूलेत्यत्र शिरीषपूगेति पाठ पूगस्य फलम। अत्र

शिरीषोडुम्बरौ जम्बुः सेकालेपनयोर्हिताः।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः॥ २७॥

दशाङ्गः—

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी॥२८॥

चतुःसमम्—

शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद् द्रुतम्।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः॥ २९॥

वृषाद्यं घृतम्—

वृषखदिरपटोलपत्रनिम्बत्वगमृतामलकीकषायकल्कैः।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदान् सकुष्ठगुल्मान्॥३०

पञ्चतिक्तकघृतम्—

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम्।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः॥३१॥

महापद्मकघृतम्—

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम्।
द्वे हरिद्रे विडङ्गानि सूक्ष्मैला तगरं तथा॥

वचनानिर्देशात् प्रत्येकमप्यत्र कवडं योज्या इति वदन्ति। जातीपत्रचोद्दयोगश्च सर्वत्र विज्ञेयः। आश्च्योतन सर्वत्र चक्षुषि द्रवौषधिदानम्॥ २६॥ २७॥

शिरीषेत्यादौ।—यष्टी यष्टीमधु, बाल ह्रीवेरम्॥ २८॥

शिरीषेत्यादौ।—नागाह्वं नागकेशरचूर्णम्, हिंस्रा कालाकड.॥ २९॥

वृषाद्यघृते।—निम्बत्वगमृतामलकीकषायकल्कैरित्यस्य स्थाने छन्द पूरणार्थं निम्बत्वगमृताधात्रीकषायकल्कयुक्तमिति केचित् पठन्ति। अन्ये तु त्वगमृतकामलकौति पठन्ति, क्वचित्तु नामलकीति पाठः, तन्न, व्यवहाराभावात्॥ ३०॥

पञ्चतिक्तघृते त्रिफलायाः कल्कः, शेषाणाञ्च कषाय इति व्यवहरन्ति वृद्ध वैद्या॥ ३१॥

कुष्ठं लाक्षा पद्मकञ्च सिक्थकं तुल्यमेव च ।
बहुवारः शिरीषश्च कपित्थफलमेव च ॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत् ।
यांश्च रोगान् निहन्त्याशु तान्निबोध महामुने ! ॥
सर्पकीटाखुदष्टेषु लूतामूत्रकृतेषु च ।
विविधेषु स्फोटकेषु तथा दुष्टविसर्पिषु ॥
नाडीषु गण्डमालासु प्रभिन्नासु विशेषतः ।
अगस्त्यविहितं धन्यं पद्मकन्तु महाघृतम् ॥ ३२ ॥
रोगस्तु स्नायुकाख्यो यः क्रिया तत्र विसर्पवत् ।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ।
शोभाञ्जनमूलदलैः काञ्जिकपिष्टैः सलवणैर्लेपः ।
हन्ति स्नायुकरोगं यद्वा मोचत्वचो लेपः ॥ ३३ ॥

इति विसर्प-विस्फोटचिकित्सा ।

---

पद्मकघृते —नागपुष्पस्य केशरमिति नागकेशरचूर्णमित्यर्थः ॥ ३२ ॥

स्नायुकरोगचिकित्सामाह, रोगस्त्वित्यादि । स्नायुकरोगो नारुया नाम्ना पश्चिमदेशे ख्यातः । अयञ्च रोगो सुश्रुतेनानभिहितः । वृन्देन पुनरुक्तः यथा — "शाखासु कुपितो वायुः शोथं कृत्वा विसर्पवत् । भित्त्वा तं क्षते तत्र शोषयामास विशोष्य च । कुर्यात्तन्तुनिभं सूत्रं ततं पिण्डं लकुचशकृते । लिप्तं शनैः क्षतादेति च्छेदात्तत् कोपमावहेत् । तत्पाताच्छोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत् । रोगः स स्नायुको नाम्ना तन्त्रकैः प्रकीर्त्तितः" इति । शाखास्विति जङ्घादिषु तदिति सत्वम, तक्रशकृजे पिण्डैर्लिप्तं सत् क्षतादेति निःसरति । छेदादिति कदाचिदाकर्षणादिना सूत्रच्छेदात । तत्पातादिति तस्य सूत्रस्य स्वयमेव पतनात् । पिबन्नित्यत्र पीत्वेति पाठे कर्त्तरि क्तः । मोचत्वचो लेप इति मोचं कदलीफलं कोषकं वा तस्य त्वक् ॥ ३३ ॥

इति विसर्पविस्फोटाधिकार-विवृतिः ।

---

## अथ मसूरिकाचिकित्सा।

सर्वासां वमनं पथ्यं पटोलारिष्टवासकैः।
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः॥ १॥
सक्षौद्रं पाययेद् ब्राह्म्या रसं वा हैलमोचिकम्।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे॥ २॥
सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम्।
रोमान्तीज्वरविस्फोटमसूरीशान्तये पिबेत्॥ ३॥
उभाभ्यां हृतदोषस्य विशुध्यन्ति मसूरिकाः।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः॥ ४॥

कण्टाकुष्माण्डमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तम्
पीतं बीजं जयायाः सघृतमुषितवाः पीतमङ्घ्रिः शिकट्याः।
मध्या मूलं शिफा वा मदनकुसुमजा सोषणा वाथ पूति-
र्यामा वास्यम्बुनेति प्रथममघगदे दृश्यमाने प्रयोज्या॥ ५॥

— — — — —

विस्फोटभेदत्वात् प्रायस्तुल्यचिकित्सितत्वाच्च मसूरीचिकित्सामाह सर्वासा-मित्यादि। वासकैरित्यत्र कृतैरिति शेषः। तेन कषायैरित्यनेन सामानाधिकरण्यं न विरुध्यते। वत्सः इन्द्रयवः। फलं मदनफलम्। सक्षौद्रमित्यादि। हैलमोचिकं रसमिति शेषः, एतच्च वामकं विरेचकञ्च। सुषवी कारवेल्लकः, एतद्रसोऽप्यघभागहरः। उभाभ्यामिति वमनविरेचनाभ्याम्॥ १—४॥

योगान्तरमाह। कण्टाकुष्माण्डमूलमित्यादि कण्टाकुष्माण्डलता स्वनामख्याता। हिङ्गुमाषकयुक्तं पीतमिति पूर्वेणैव सम्बध्यते। बीजं जयायाः सघृतमुषितवाः पीतमिति द्वितीयो योगः। जया जयन्ती, अस्याश्च बीजमुपदेशादेकाधिकषड्-गुञ्जकं सघृतं पर्य्युषितजलेन पीतमित्याहुः। ये तु उषितवाः पीतमिति पदं जयाबीजमित्यनेन सह न योजयन्ति, तन्मते पीतमिति नपुंसकलिङ्गनिर्देशो नोप-पद्यते इति, सामान्यविशेषभावेन योजनापि कष्टकल्पनैवेति। अङ्घ्रिः शिकट्या इति तृतीयो योगः। अत्राप्युषितवाः पीतमिति लिङ्गविपरिणामेन सम्बध्यते। अङ्घ्रिरिति मूलम्। शिकटी स्वनामख्यातैव। मध्या अपि तथैव च। [ मधौ

उद्धृत्य मुष्टिनाच्छाद्य भेषजं यत् प्रयुज्यते ।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः ॥
उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा ।
विधिगृहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम् ।
तद्वच्छृगालकण्टकमूलञ्च व्युषिताम्भसा ॥ ६ ॥
मसूरीं मूर्च्छितो हन्ति गन्धकार्द्रस्तु पारदः ।
निशाचिञ्चाच्छदे शीतवारिपीते तथैव तु ॥ ७ ॥
यावत्संख्या मसूर्य्यङ्गे तावद्भिः शेलुजैर्दलैः ।
छिन्नैरातुरनाम्ना तु गुणी व्येति न वर्द्धते ॥
व्युषितं वारि सक्षौद्रं पीतं दाहगुणोहरम् ।
शेलुत्वक्कृतशीताम्भः सेकं वा कायशोषणे ॥ ८ ॥

---

गुवाकस्तस्य मूलम् । ] सोषणा समरिचा । एतच्च पूतिरित्यनेनैव सम्बध्यते । पूति खट्टासिकाण्डम् । अन्ये तु मदनकुसुमजा शिफा सोषणा, पूतिर्नाटाकरञ्जोऽप्य सोषण इति वदन्ति । अत्रापि मरिचसैकाधिकषड्गण्डकमित्युपदिशन्ति । अघगद पापरोगौ मसूरीपर्य्याय एव ॥ ५ ॥

मुष्टियोगस्वरूपमाह उद्धृत्येत्यादि । उष्ट्रकण्टक स्वनामख्यातम् । (उष्ट्र इति केचित् ) अनन्तामूलमनन्तमूलम्, ज्येष्ठाम्बु तण्डुलोदकम् । शृगालकण्टकमपि स्वनामख्यातम् ॥ ६ ॥

मूर्च्छित इति कज्जलीकृतः । शोधितगन्धक कर्ष १, शोधितरस मा ८ कज्जलीकर्त्तव्या ; अतो माषकचतुष्टयं षट्कं वा पर्णे कृत्वा खाद्यमिति व्यवहारः । 'रुद्राक्षं मरिचैर्युक्तम्" इत्यादियोगः संग्रहे नास्ति ॥ निशेत्यादौ । छदः पत्र, छदशब्दस्य नपुंसकलिङ्गता छान्दसत्वात्, किंवा निशाचिञ्चाच्छदाविति पाठः, द्विवचनदर्शनात् पत्रद्वयं ग्राह्यमित्यन्ये ॥ ७ ॥

यावदित्यादौ । शेलुर्बहुवारः, मसूरिकां गणयित्वा तावत्सङ्ख्यया आतुरनाम्ना पत्राणि छिन्द्यादित्यर्थः । गुणी मसूरिकेत्यर्थः ॥ शेलुत्वगित्यादि ।—शीताम्भः शीतकषायः, कायशोषण इति उच्छूनगात्रप्रदेशशोषणनिमित्तमित्याहुः । कायशोषण-

उग्राज्यवंशनीलि-यववृषकर्पासकीकसमञ्जी।
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहरः ॥ ९ ॥
तर्पणं वातजायां प्राग् लाजचूर्णैः सशर्करैः।
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ॥ १० ॥
द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम्।
ग... ीमधुकं रास्नां पञ्चमूलं कनिष्ठकम्।
च...नं काश्मर्य्यफलं बलामूलं विकङ्कतम् ॥
पा... ाले मसूर्य्यान्तु वातजायां प्रयोजयेत् ॥ ११ ॥
द्राक्षाकाश्मर्य्यखर्जूर-पटोलारिष्टवासकैः।
लाजामलकदुःस्पर्शैः सितायुक्तैश्च पैत्तिके ॥ १२ ॥
शिरीषोडुम्बराश्वत्थ-शेलुन्यग्रोधवल्कलैः।
प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥ १३ ॥
दुरालभां पर्पटकं भूनिम्बं कटरोहिणीम्।
श्लेष्मिकायां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥

निम्बादिः—

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम्।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः।
हन्ति त्रिदोषमसूरीं ज्वरविसर्पसम्भवाम्।

---

...िमित पाठे शरीरमलक्लेदनिरासार्थमित्यर्थः, किंवा कायशब्देनोपचारान्मसूरि... ...च्यते ॥ ८ ॥

उग्रेत्यादौ।- उग्रा वचा, आज्यं घृत, वृषस्य वासकस्य मूल, कर्पासकीकसं कर्पासास्थि, सुरसः पर्णासः, मयूरकोऽपामार्गः। तर्पणमिति द्रवेणालोडिताः सक्तव। तिक्तयूषैरिति तिक्तद्रव्यकृतयूषैः। प्रतुदाः पारावतादयः ॥ ९ ॥ १० ॥

द्विपञ्चमूलमित्यादियोगः क्वाथेन, एवं गुडूचीत्यादिकमपि ॥ ११ ॥

उत्थिता प्रविशेद् या तु पुनस्तां वाह्यतो नयेत् ॥ १५ ॥
पटोलकुण्डलीमुस्तवृषधन्वयवासकैः।
भूनिम्बनिम्बकटुका-पर्पटैश्च शृतं जलम् ॥
मसूरीं शमयेदामां पक्वाञ्चैव विशोषयेत्।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ १६ ॥

पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्रामलककल्कसंयुतम्।
मसूरिविस्फोटविदाहशान्तये तदेव रोमान्तिवमिज्वरापहम्।
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम्।
पिबेज्जलं सुक्वथितं सुशीतं मसूरिकारोगविनाशनं परम्।

खदिराष्टकः—

खदिरत्रिफलारिष्ट-पटोलामृतवासकैः।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः।
कुष्ठवीसर्पविस्फोट-कण्ड्वादीनपि पानतः ॥ १८ ॥
अमृतादिकषायस्तु जयेत् पित्तकफात्मिकाम्।
सौवीरेण तु सम्पिष्टं मातुलुङ्गस्य केशरम्।
प्रलेपात् पातयत्याशु दाहञ्चाशु नियच्छति ॥ १९ ॥
पाददाहं प्रकुरुते पिड़का पादसम्भवा।
तत्र सेकं प्रशंसन्ति वहुशस्तण्डुलाम्बुना ॥ २० ॥

---

द्राक्षेत्यादौ। सितायुक्तमित्यनन्तरं कषायमिति शेषः। निम्बादिरपि क्वाथविधया देयः। पटोलेत्यादौ। कुण्डली गुडूची ॥ १२—१६ ॥

पटोलमूलेत्यादि।—क्वाथे हरिद्रामलकचूर्णं प्रक्षिप्य अनुलोमनार्थं पिबेत्। अरुणं लोहितं तण्डुलीयकम्। धात्रीखदिरेण संयुतमिति धात्रीखदिराभ्यां पटोलमूलारुणतण्डुलीयकाभ्यां सह क्वथनीयौ ॥ १७ ॥

खदिरेत्यादौ। अष्टकाख्य इति खदिराष्टकसंज्ञः। अत्र शोधने कर्त्तव्ये गुग्गुलुमपि प्रक्षिपन्ति ॥ १८ ॥

अमृतादिकषायो विसर्पोक्तो दशद्रव्यस्तस्यैव मसूरीहरत्वश्रुतेः; न तु ज्वराधिकारोक्तोऽमृतादिरिति। सौवीरेणेति काञ्जिकेन ॥ १९।२० ॥

पाककाले तु सर्वांस्ता विशोषयति मारुतः ।
तस्मात् संबृंहणं कार्य्यं न तु पथ्यं विशोषणम् ॥ २१ ॥
गुडूचीं मधुकं द्राक्षा मोरटं दाड़िमैः सह ।
पाककाले तु दातव्यं भेषजं गुड़संयुतम् ।
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥ २२ ॥
लिहेद्वा बादरं चूर्णं पाचनार्थं गुड़ेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥ २३ ॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना ।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ॥ २४ ॥
दाड़िमाम्लरसैर्युक्ता यूषाः सुररुचौ हिताः ।
पिबेदम्भस्तथशीतं भावितं खदिरासनैः ॥ २५ ॥
शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम् ।
जातीपत्रं समञ्जिष्ठं दार्वीपूगफलं शमीम् ॥
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ।
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ २६ ॥

---

पाककाले वायुप्रशमनार्थं बृंहणाहारमाह पाकेत्यादि । –विशोषणेन पाकी मुखस्य दोषस्यान्तःप्रवेशाद्रुजाधिक्यं स्यादिति भावः ॥ २१ ॥

गुडूच्यादौ ।—मोरटमिक्षुमूलम् । एषां क्वाथः । गुडस्तु प्रक्षेप्यः ॥२२।२३॥

धन्वमांसरसा इति जाङ्गलपशुमांसरसाः ॥ २४ ॥

पिबेदम्भस्तथशीतमित्यर्द्धशृतं शीतञ्च, एवं वक्ष्यमाणयोगेऽपि । भावितं खदिरासनैरिति खदिरासनैः साधितं क्वाथमित्यर्थः । असनः पीतशालः, अशन एव इत्यन्ये ॥ २५ ॥

गायत्री खदिरः । गवेधुमधुकाम्बुनेति ।—गवेधुको गुलुञ्चः । अनयोः कल्कं कर्पटे बद्धा प्रपीड्याक्षिसेकः कार्य्यः ॥ २६ ॥

मधुकं त्रिफला मूर्वा दार्वीलङ्नीलमुत्पलम् ।
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्चोतने हिताः ।
नश्यन्त्यनेन दृग्जाता मसूर्य्यो न द्रवन्ति च ॥ २७ ॥
पञ्चवल्कलचूर्णेन क्लेदिनोमवचूर्णयेत् ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
क्रिमिपातभयाद्‌द्वयोऽपि धूपयेत् सरलादिना ।
वेदनादाहशान्त्यर्थं स्रुतानाञ्च विशुद्धये ॥ २८ ॥
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ।
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ॥ २९ ॥
अष्टाङ्गावलेहो वा कवड़श्चार्द्रकादिभिः ।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥ ३० ॥
कुर्य्याद्‌व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ।
विपन्नैः सिद्धमन्त्रैश्च प्रमृज्यात्तु पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ ३१ ॥
निशाद्वयोशीरशिरोषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्पकुष्ठ-दौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥
बिम्बातिमुक्ताकाशोक प्लक्षवेतसपल्लवैः ।

---

मधुकमित्यादौ ।—हिता इति बहुवचननिर्देशात् व्यस्तैः समस्तैर्मधुकादि॰ प्रलेप । अर्द्धशतेश्च तैराश्चोतनमित्याहु । आश्चोतन परिषेक. ॥ २७ ॥

पञ्चवल्कलेत्यादौ ।—क्लेदिनी क्लेदयुक्ता मसूरीम । भस्मनेति शुष्कगोमय भस्मना । गोमयरेणुनेति गोमयचूर्णेन वस्त्रच्छानितेन । सरलादिभिरिति सरल गुरुगुग्गुलुप्रभृतिभिः ॥ २८ ॥

सगुग्गुलुमित्यादि ।—सगुग्गुलुमित्युभयत्रापि सम्बध्यते ॥ २९ ॥

अष्टाङ्गावलेहार्द्रकादिकवडौ ज्वराधिकारोक्तौ । पञ्चतिक्तघृतं कुष्ठोक्तम् ॥ ३० ॥ ३१ ॥

निशाद्वयेत्यादौ ।—भद्रश्रिय श्वेतचन्दनम् । बिम्बीत्यादि ।—बिम्बी कुन्दरीति

निशि पर्य्युषितः क्वाथो मसूरीभयनाशनः ॥ ३२ ॥
मसूरीस्फोटयोरन्ते कूर्परे मणिबन्धके।
मुखांसफलके शोथो जायते यः सुदारुणः ॥ ३३ ॥
व्रणशोथहरैर्योगैर्वातघ्नैश्च जलौकसा।
हर्त्तव्यस्तैलभृष्टस्य वृश्चिकस्य विलेपनैः ॥ ३४ ॥
चैत्रासितभूतदिने रक्तपताकान्विता स्नुही भवने।
धवलितकलसन्यस्ता पापरुजो दूरतो धत्ते ॥ ३५ ॥
इति मसूरी-चिकित्सा ॥

## अथ क्षुद्ररोगचिकित्सा।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत्।
शुक्तिसौराष्ट्रिकाक्षार-कल्कैश्चालेपयेन्मुहुः ॥ १ ॥
नवीना कण्टकार्य्यास्तु कण्टकैर्वेधमावतः।
किमाश्चर्य्यं विपच्याशु प्रशाम्यत्यजगल्लिका ॥ २ ॥

पीतकम्। अतिमुक्तकी माधवीलता। योगोऽयमनागतमसूरीनिवारणार्थं चैत्रे मासि पेयः ॥ ३२-३४ ॥

चैत्रासितभूतदिन इति चैत्रकृष्णचतुर्दश्याम ॥ ३५ ॥

इति मसूरीचिकित्साविवृतिः

---

विसर्पादीनामक्षुद्रत्वं तुल्यलक्षणचिकित्सितानामभिधानेन क्षुद्रत्वं तुल्यलक्षणचिकित्सितानां रोगाणां पारिशेष्यात् क्षुद्ररोगचिकित्सितमुक्तम्। ननु यदि क्षुद्रत्वमेषां तुल्यलक्षणचिकित्सितत्वेन तर्हि अग्निरोहिणीवल्मीकादीनां त्रिदोषजत्वेन दुःसाध्यत्वादिबाहुल्यात् तत् कथं क्षुद्रत्वम्? नैवं, बाहुल्येन तच्छब्दात् छत्रिणो गच्छन्तीतिवत्, किंवा अवान्तरभेदविरहत्वं क्षुद्रत्वं, येनाव वक्तव्यानामजगल्लिकादीनां न दोषदूष्यादिकृतभूरिसङ्ख्याभेदेन व्रणादिवन्निर्देशः, किन्तु प्रत्येकं लोकसङ्ख्या-

कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
अविद्रधिकल्केन जयेदनुशयीं भिषक् ॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिं गन्धमालां जयेत् पित्तविसर्पवत् ॥
मधुरौषधसिद्धेन सर्पिषा शमयेद्व्रणान् ।
रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ।
पनसिकां कच्छपिकामनेन विधिना भिषक् ॥
अन्त्रालजीं कच्छपिकां तथा पाषाणगर्दभम् ।
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् ।
कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥ ३ ॥
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ।
मनःशिलालभल्लात-सूक्ष्मैलागुरुचन्दनैः ॥

---

भिधानं तेषाम् । अजगल्लिका आंचिलौति लोके । आमामित्यपक्वा, वागभटे,ऽ अपक्वमित्युक्तम् । यक्तीत्यादि —शर्करामूर्त्तौत्पत्तिभाण्ड, सोराष्ट्रिका मंग ग क्त, सुश्रुते तु सौराष्ट्रस्थाने शुक्तिका पठ्यते, शुक्तिका सर्जिक्षार । सारा यवक्षार इति ॥ १ ॥ २ ॥

क्षारयोगैरिति घण्टापारुल्यादियोगैः । मधुरौषध काकोल्यादिगण । व्रणा-निति विवृतादीनेव गम्यमानान्तान् पाकेन व्रणभावमापन्नान् मधुरौषधसिद्धेन सर्पिषा शमयेदित्यर्थ । सुश्रुतेऽप्युक्त—"विवृतामिन्द्रवृद्धां गर्दभिकां जालगर्दभ मिरिवेल्लिकां गन्धमालां विस्फोटकञ्च पित्तविसर्पविधानेनोपाचरेत । पक्वाश्च मधुरौषधसिद्धेन सर्पिषा" इति । रक्तावसेकैरित्यादिना । विदारिकाचिकित्सा । अनेन विधानेनेति विदारिकोक्तेन । अन्यान् शोथानिति पाषाणगर्दभादीन दोषसम्भवानिति योग्यतया कफवातजान् साधयेत् । पाषाणगर्दभो "गालठाकुया' इति ख्यात. ॥ ३ ॥

जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् ।
वल्मीकं नाशयेत् तद्धि बहुच्छिद्रं बहुस्रवम् ॥
पाददारीषु च शिरां व्यधयेत्तलशोधनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्ज-घृतक्षारैर्विमिश्रितैः ।
मर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम् ॥
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥ ४ ॥

उपोदिकाक्षार-तैलम्—

उपोदिकासर्षपनिम्बमोच-
कर्कारुकैर्वारुकभस्मतोये ।
तैलं विपक्वं लवणांशयुक्तम्
तत् पाददारीं विनिहन्ति लेपात् ॥ ५ ॥

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्टकाशोश-त्रिफलाभिर्मुहुर्मुहुः ॥ ६ ॥

---

मनःशिलेत्यादि ।—आलं हरितालम् । निम्बतैलमिति निम्बबीजभवतैलम् । बहुस्रवमिति बहुस्रावम् । सुश्रुते आलेप्यानि पिप्पल्यादिगणादिषु योगं पठित । तलशोधनीमिति पादतलगामिनीम् । स्नेहस्वेदोपपन्नावित्यनन्तरं कृत्वेति शेषः । अन्ये तु शिराव्यधात् प्रभृतस्य स्नेहस्वेदौ कृत्वा शिरां व्यधयेदिति वाच्यम् । एवमन्ये तु शिराव्यधस्यापवृत्तौ स्नेहस्वेदोपपन्नावित्यादिना तु पश्चात् कर्मोपदेशः दोषशमनार्थं रक्तमोक्षजनितवातक्षयार्थं वेति । आलेपयेन्मधूच्छिष्टादिभिरित्यन्वयः । अत्र क्षारैर्विमिश्रितैरित्यपपाठः सुश्रुते यवक्षारैरिति पाठात् । मर्जेत्यादि ।—मर्जो धूनकः । कटुतैलाक्तमिति कटुतैलयुक्तं यथा स्यात् तथा पादप्रमार्जनार्थं [illegible] चूर्णविशेषणम् ॥ ४ ॥

उपोदिकेत्यादि ।—उपोदिका नाम ग्राम्यम् । मोचकः कदलीकाण्डः । कर्कारुः कुष्माण्डभेदः एर्वारुः कर्कटी, अनयोर्नाडी । एषां क्षारोदके चतुर्गुणे सम्यक् कल्केन तैलं पक्तव्यम् । लेपादित्यतिघनत्वात् ॥ ५ ॥

करञ्जबीजं रजनी काशीशं मधुकं मधु।
रोचना हरितालञ्च लेपोऽयमलसे हितः॥ ७॥
लाक्षाभयारसालेपः कार्य्यं वा रक्तमोक्षणम्।
जातीपत्रञ्च सम्मर्द्य दद्यादलसके भिषक्॥ ८॥
बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान्।
शिलारोचनकाशीशचूर्णैर्वा प्रतिसारयेत्॥ ९॥
दहेत् कदरमुत्कृत्य तैलेन दहनेन वा॥ १०॥
चिप्पमुष्णाम्बुना खिन्नमुत्कृत्याभ्यज्य तं व्रणम्।
दत्त्वा सर्जरसं चूर्णं बद्ध्वा व्रणवदाचरेत्।
स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम्॥
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः पुनः॥ ११॥
चिप्पे सटङ्कणास्फोतामूललेपो नखप्रदः।
निम्बोदकेन वमनं पद्मिनीकण्टके हितम्॥ १२॥
निम्बोदककृतं सर्पिः सक्षौद्रं पानमिष्यते।
पद्मनालकृतः क्षारः पद्मिनीं हन्ति लेपतः॥ १३॥

---

अलस 'पाकोयाना' इति ख्यातः। अम्लैरिति काञ्जिकैः। अरिष्टो निम्ब ॥ ६। ७॥

लाक्षेत्यादौ।—रसो गन्धरस ॥ ८॥

बृहतीत्यादि —बृहती कण्टकारी तस्याः स्वरसः, तैलञ्च सार्षपं, सुश्रुतसंवादात। प्रतिसारयेदिति घर्षयेत्॥ ९॥

दहेदित्यादि।—कदरं शस्त्रेणोद्धृत्य तप्ततैलेन दहनेन वा दहेदित्यर्थः। दहनेनेत्यत्र मदनेनेति पाठे मदनः सिक्थकः तेनापि तप्तेन॥ १०॥

चिप्पमिति।—चिप्पमिह कुनखमभिप्रेतं न त्वङ्गुलीवेष्टनम्, तत्कल्पपाचकि न्यायासत्वानर्हत्वादिति केचित्। उष्णाम्बुना स्वेदनमिह मार्दवजननार्थं, मृदुत्वमत्र व कुनखोत्कर्त्तनं कर्त्तुं शक्यमिति। बद्धेति व्रणोक्तबन्धनविधिना, व्रणवदाचरेदिति व्रणहितैराचारादिभिरित्यर्थः। कान्तलौहपात्रे॥ ११॥

निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम्।
नीलीपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम्॥
जालगर्दभरोगे तु सद्यो हन्ति च वेदनाम्॥ १४॥
अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत्।
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा॥ १५॥
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्॥ १६॥
गुदभ्रंशे गुदं स्नेहैरभ्यज्याशु प्रवेशयेत्।
प्रविष्टं स्वेदयेच्चापि बद्धं गोस्फणया दृढम्॥ १७॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम्।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः॥ १८॥
चुक्रास्लानलचाङ्गेरीबिल्वपाठायवाग्रजम्।
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम्॥ १९॥
गुदञ्च गव्यवसया म्रक्षयेदविशङ्कितः।
दृष्प्रवेशा विशत्याशु गुदभ्रंशो न संशयः॥ २०॥

चिप इत्यादौ। आस्फोता हाफोरमाली। योगोऽयं व्यस्तसमस्ततया व्यव स्थित इह। निम्बोदकेन निम्बक्वाथेन मदनफलादियुक्तेनेत्याहुः॥ १२। १३॥

निम्बेत्यादि।—निम्बारग्वधकषायश्चोत्सादन इति यत् सुश्रुतेनोक्तम् तत्रापि कषायशब्दस्य कल्क एवार्थः। नीली नीलवृक्षा॥ १४॥

स्तन्य विशोधयेदिति। पित्तश्लेष्महरैः स्तन्यशोधनद्रव्यैरित्यर्थः। उक्तं हि— तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः" इति॥ १५॥

करञ्जेत्यादौ।—तिक्तश्चरकोक्ततिक्तकगणः। अन्ये तु पटोलपत्रमाहुः॥ १६॥

गुदभ्रंश इत्यादौ।—स्नेहैरिति बहुवचनात् चतुर्भिरेव स्नेहैरित्यर्थः, किंवा गव्यवसया म्रक्षयेदिति वक्ष्यमाणयोगदर्शनादत्रापि स्नेहशब्देन गव्यवसैव ग्राह्या। गोस्फणा बन्धविशेषः, स हि सुश्रुते व्रणलेपबन्धविधौ व्यक्तः। उक्तं हि "वर्चोगमनार्थं सच्छिद्रेण चर्मणास्य कौपीनबन्धः कार्यः" इति॥ १७। १८॥

मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम्।
छिन्नमूषिकमांसेन चाथवा स्वेदयेद् गुदम्॥ २१॥

चाङ्गेरीघृतम्—

चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम्।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम्॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते॥ २२॥

मूषिकाद्यं तैलम्—

क्षीरे महत् पञ्चमूलं मूषिकामन्त्रवर्जिताम्।
पक्त्वा तस्मिन् पचेत्तैलं वातघ्नौषधसाधितम्॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत्॥ २३॥

स्वेदोपनाहौ परिकर्त्तिकायाम्
कृत्वा समभ्यज्य घृतेन पश्चात्।

---

इचाम्लं मद्यार्द्रकम्। अमलश्चित्रकः। एषां कल्कं तक्रेण पिबेत्॥ १९।२०॥

छिन्नमूषिकमांसेनेत्यत्र काञ्जिकेन खिन्नं घृतेन भ्रष्टमित्याहुः॥ २१॥

चाङ्गेरीघृते चाङ्गेर्याः स्वरसः, कोलस्य शुष्कवदरस्य क्वाथः, अम्लं दधि दध्यम्लम्। एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम्। किंवा चाङ्गेरीस्वरसः स्नेहसमः, स्वरसक्षीरवद्विधिरिति वचनात्; दधिकोलरसौ तु मिलित्वा त्रिगुणौ पूर्वेण व्यवहार। नागरक्षारौ कल्कौ॥ २२॥

क्षीर इत्यादौ।—मूषिकागूढकर्मकं ग्राह्यम्, पञ्चमूलस्य मिलित्वा प्रस्थ एकः, क्षीरस्यापि एकः, तोयस्य प्रस्थद्वयम्। एवं निःक्वाथ्य शेषः क्षीरप्रस्थः स्यात्, अनेन तैलकुडवः साध्य इति कश्चित्। अन्ये तु "द्रव्यादष्टगुणं क्षीरं साधयित्वा चतुर्गुणम्।" क्षीरमित्यादिपरिभाषया क्षीरं साधयित्वा चतुर्गुणेन तैलकुडवः साध्य इत्याहुः। चक्रस्त्वाह अन्त्रवर्जितामिति ग्रहणयोग्यतोपदर्शनार्थम्, तत्र मूषिकमांसस्य पलान्यष्टौ, पञ्चमूलस्यापि क्षीरस्य प्रस्थः, तोयस्य प्रस्थत्रयम्, शेषः क्षीरप्रस्थः, तेन कुडवः साध्यः; एवमन्यत्रापि; पक्वेन क्षीरेण स्नेहसाधने एषैव व्यवस्थेति। व्यवहारः प्रायः प्रथमव्याख्ययैव। वातघ्नौषधं भद्रदार्वादिगणः स च कल्कः॥ २३॥

प्रवेशयेच्चर्म शनैः प्रविष्टे-
मांसैः सुखोष्णैरुपनाहयेच्च ॥
स्वेदस्नेहैस्तथैवैनां चिकित्सेदवपाटिकाम् ।
निरुद्धप्रकशे नाड़ीं द्विमुखीं कनकादिजाम् ॥
स्निग्धाभ्यक्तां शुशुकादिवसेनैव परिषेचयेत् ।
तैलेन वा वचादारुकल्कैः सिद्धेन च त्र्यहात् ॥
पुनः स्थूलतरा नाड़ी देया स्रोतोविशुद्धये ।
शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत् ।
स्निग्धञ्च भोजनं वद्धगुदेऽप्येष क्रियाक्रमः ॥ २४ ॥
चर्मकीलं जतुमणिं मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ २५ ॥
इक्षुनालस्य चूर्णेन घर्षो मशकनाशनः ।
निर्मोकभस्मघर्षाद्वा मशः शान्तिं व्रजेत् सदा ॥ २६ ॥

---

स्वेदेत्यादौ।—परिकर्त्तिकायां सर्पिषा अभ्यज्य अनन्तरं वातघ्नमांसादिभिः स्वेदं कृत्वा शाल्वणादिना च उपनाहनं कृत्वा च परिकर्त्तितं चर्म यथोक्तस्वेदादिना मृदूभूतं प्रवेशयेत् सम्यगानयेदित्यर्थः। प्रविष्टे च सुखोष्णैर्मांसैरुपनाहयेत्। सुश्रुतेऽप्येवमेवोक्तम्। तथैवैनामित्यनेनावपाटिकायामप्युपनाहं चर्मानयनञ्चातिदिशति। निरुद्धेत्यादौ।—कनकादीत्यादिना शस्त्रपूतप्रभृतीनां ग्रहणम्। शुशुकी शुशु इति ख्यातो जलजन्तुः। आदिशब्दात् वराहादयः। त्र्यहादित्यत्र वीप्सा बोध्या, तेन त्र्यहात् त्र्यहात् प्रागुक्तनाड्यपेक्षया पुनः पुनः स्थूलतरा नाड़ी देया। स्रोतोविशुद्धये इत्यत्र स्रोतोविवृद्धये इति पाठः। यदाह सुश्रुतः एवमेव स्रोतोद्वारं वर्द्धयेदिति। व्रणवदिति सद्योव्रणवत्। स्निग्धञ्च भोजनमाचरेदित्यनेन सम्बध्यते। सुश्रुतेऽपि "निरुद्धप्रकशे स्निग्धमाहारमुपसेवते।" इत्युक्तम्। एष क्रम इति निरुद्धप्रकाशोक्तविधिः ॥ २४ ॥

जतुमणिर्जडुलः। क्षाराग्निभ्यामिति अनवगाढ़क्षारेण; अवगाढे त्वग्निना ॥२५॥

इक्षुरेक्षुकस्य नालेन गृहीतं यच्चूर्णमिति शङ्खचूर्णम्, तेन घर्षो घर्षणमित्यर्थः। निर्मोक इति कृष्णसर्पनिर्मोकः ॥ २६ ॥

युवानपिड़कान्यच्छनीलिकाव्यङ्गशर्करा: ।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥
लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ २७ ॥
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ॥ २८ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
लेपः सनवनीतो वा श्वेताश्वखुरजा मसी ॥ २९ ॥
रक्तचन्दनमञ्जिष्ठाकुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥
व्यङ्गिनां लेपनं शस्तं रुधिरेण शशस्य च ।
कवलान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥ ३० ॥
मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः ।
सप्तरात्राद्भवेदक्तं पुण्डरीकदलोपमम् ॥ ३१ ॥
मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः ।

---

पिड़का यूनामाननपिडका युवानपिडका वर्णागम इत्यादिनिकक्तार्थि... ...ति । धान्य धनियकम ॥ २७ । २८ ॥

व्यङ्गेष्वित्यादि ।—वाग्भटस्य । समाक्षिकेति अर्जुनत्वक् चापि सम्बन्धात् अर्जुनत्वक् वृक्षसम्बन्धादेव स्वय शुष्का ग्राह्या । श्वेता श्वेतापराजिता, अश्वखुर अश्वस्य घोटकस्य खुरः, तयोर्मसी भस्म, अन्ये तु धवलघोटकखुरमसीत्याहु ॥ २९ ॥

रक्तचन्दनेत्यादौ ।—बहुवचनात् व्यस्तसमस्तमिति वदन्ति । वटाङ्कुरा अभिनव पत्रमुकुलाः । तीक्ष्णानित्यभिन्नान् ॥ ३० ॥

मसूरैरित्यादौ ।—सर्पिषेति विशेषणे तृतीया । पिष्टैरित्यर्थात् पयसैव पिष्ट रित्यर्थः । पिष्टैरित्यत्र भृष्टैरित्यपि केचित् पठन्ति । वाग्भटेऽप्युक्तं "क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषा मसूरा" इति ॥ ३१ ॥

मुखकान्तिकरो लेपः पिड़कातिलकालजित्॥
नवनीतगुड़क्षौद्र-कोलमज्जप्रलेपनम्।
व्यङ्गजिद्रक्तत्वग्वा छागीक्षीरप्रपेषिता॥
जातीफलकल्कलेपो नीलीव्यङ्गादिनाशनः।
सायञ्च कटुतैलेनाभ्यङ्गो वक्त्रप्रसादनः॥ ३२॥

कालीयकोत्पलामयदधिसरवदरास्थिमध्यफलिनीभिः।
लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण॥ ३३॥
तुषरहितमसृणयवचूर्णसयष्टीमधुकलोध्रलेपेन।
भवति मुखं परिनिर्जितचामीकरचारुसौभाग्यम्॥
रक्षोघ्नशर्वरीद्वयं मञ्जिष्ठागैरिकाज्यवस्तपयः।
सिद्धं न लिप्तमाननमुद्यद्विधुबिम्बवद्विभाति॥ ३४॥
परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः।
मुखकमलकान्तिकारो भ्रुकुटीतिलकालकान् जयति॥ ३५॥

हरिद्राद्यं तैलम्—

हरिद्राद्वययष्ट्याह्व-कालीयककुचन्दनैः।
प्रपौण्डरीकमञ्जिष्ठा-पद्मपद्मककुङ्कुमैः॥
कपित्थतिन्दुकप्लक्ष-वटपत्रैः पयोऽन्वितैः।
लेपयेत् कल्कितैरेभिस्तैलं वाभ्यञ्जनं चरेत्॥

---

मातुलुङ्गस्य जटा मूलम्, शिला मनःशिला, कोलमज्जा वदरमज्जा। मरुव

जम् वेति द्वितीयो योगः॥ ३२॥

कालीयकेत्यादौ।—उत्पलं नीलोत्पलम्, आमयः कुष्ठम्, वदरास्थिमध्यं मज्जा फलिनी प्रियङ्गुः॥ ३३॥

रक्षोघ्नः श्वेतसर्षपः, आज्यं घृतम्। वस्तपयःसिद्धेनेति समासपदम्, रक्षोघ्नादिसिद्धेन लेपेनेत्यर्थः॥ ३४॥

परिणतेत्यादि।—परिणतदधिप्रभृतिभिर्लेपः। भ्रुकुटी ललाटे वलीरूपा॥३५॥

हरिद्रादौ।—कुचन्दनं चन्दनभेदः, पद्मं पद्मपुष्पम्। पत्रशब्दः कपित्थादिभिः

पिप्लवं नीलिकाव्यङ्गांस्तिलकान् मुखदूषिकान्।
नित्यसेवी जयेत् चिप्रं मुखं कुर्य्यान्मनोरमम्॥ ३६॥

कनक-तैलम्—

मधुकस्य कषायेण तैलस्य कुड़वं पचेत्।
कल्कैः प्रियङ्गुमञ्जिष्ठा-चन्दनोत्पलकेशरैः॥
कनकं नाम तत्तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्गशोधनं परमर्चितम्॥ ३७॥

मञ्जिष्ठाद्यं तैलम्—

मञ्जिष्ठा मधुकं लाचा मातुलुङ्गं सयष्टिकम्।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा॥
आजं पयस्तद्दिगुणं शनैर्मृद्वग्निना पचेत्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥
मुखं प्रसन्नोपचित बलोपलितवर्जितम्।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम्॥ ३८।

कुङ्कुमाद्यं तैलम्—

कुङ्कुमं चन्दनं लाचा मञ्जिष्ठा मधुयष्टिका।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम्॥
न्यग्रोधपादाः प्लचस्य शुङ्गाः पद्मस्य केशरम्।
द्विपलञ्चमूलसहितैः कषायैः पलिकैः पृथक्॥

---

प्रत्येकं सम्बध्यते। लेपपचे पयसैव पेषणम। तैलपाकपचे हरिद्रादीनां कल्कश्चारन्तु चतुर्गुणम्। पिप्लवमिति जटूलम्॥ ३६॥

मधुकस्येत्यादौ।—केशर नागकेशरम्। अभीरु जटुलम्॥ ३७॥

मञ्जिष्ठेत्यादौ।—मातुलङ्गस्य मूलम। मधुक सयष्टिकमिति पदद्वयोपादानात् जलस्थलभेदेन यष्टिमधुद्वयमिह ग्रहणमिति ज्ञेयम्॥ ३८॥

कुङ्कुममित्यादौ।—न्यग्रोधस्य वटस्य पादा, शुङ्गाः; प्लक्षः पाकुडी। कषायैरिति कषायसाधनैः कुङ्कुमरक्तचन्दनादिभिः, पञ्चवल्कलैरित्यन्ये। पत्तङ्गं रक्त

जलाढ़कं विपक्तव्यं पादशेषमथोद्धरेत्।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिका॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्॥
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ ३८।

कुङ्कुमाद्यं तैलम्

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्॥
सम्यक् पक्वं परं ह्येतन्मुखकान्तिप्रसादनम्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशनम्॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्॥ ४०॥

कुङ्कुमाद्यं तैलम्—

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम्।
कालीयकं पद्मकञ्च मातुलुङ्गं सकेशरम्॥
कुसुम्भं मधुयष्टीकं फलिनी मदयन्तिका।
निशे द्वे रोचनापद्ममुत्पलञ्च मनःशिला॥

---

चन्दनम्। द्विपञ्चमूलसहितैरित्यत्र पद्मकिञ्जल्कसहितैरिति केचित् पठन्ति वाग्भटेऽपि दशमूलं विना योगोऽयं दृश्यते, एवं चक्रादौऽपि, तेनापि योगान्तरम्॥ ३९॥

द्वितीयकुङ्कुमाद्यं तैलमाह कुङ्कुममित्यादि।—स्पष्टम्॥ ४०॥

तृतीयकुङ्कुमाद्यतैले किंशुकः पलाशस्तस्य पुष्पं ग्राह्यम्। मातुलुङ्ग सकेशर

काकोल्यादिसमायुक्तैरेतैरक्षसमैर्भिषक् ।
लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत् ॥
कुङ्कुमाद्यमिदं तैलञ्चाभ्यङ्गात् काञ्चनोपमम् ।
करोति वदनं सम्यक् पुष्टलावण्यकान्तिदम् ॥
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम् ॥ ४१ ॥

वर्णकं घृतम्—

मधुकं चन्दनं कङ्गुः सर्षपं पद्मकं तथा ।
कालेयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः ।
विपचेद्धि घृतं वैद्यस्तत्पक्वं वस्त्रगालितम् ।
पादांशं कुङ्कुमं सिक्थं क्षिप्त्वा मन्दानले पचेत् ॥
तत् सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत्ततः ।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥
अनेनाभ्यामलिप्तं हि वलीपलितनाशनम् ।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतामुखम् ॥ ४२ ॥

अरुंषिकायां रुधिरेऽवसिक्ते
शिराव्यधनाद्य जलौकसा वा ।
निम्बाम्बुसिक्ते शिरसि प्रलेपो
देयोऽश्ववर्चोरससैन्धवाभ्याम् ॥ ४३ ॥

---

मिति मातुलुङ्गस्य मूलं केशरञ्चेत्याहुः । मदयन्ती मल्लिकाभेदः । काकोल्यादि सौश्रुतगणः, अष्टवर्ग इत्यन्ये । लाक्षारसपयसी मिलित्वा तैलाच्चतुर्गुणे ॥ ४१

मधुकमित्यादौ ।—कङ्गुः कायोनीसञ्ज्ञकं तृणधान्यम् । वस्त्रगालितमिति किञ्चिज्जलसम्बन्धे सत्येव वस्त्रेण गालनीयम् ततो मिलित्वा घृतात् पादांशं कुङ्कुमसिक्थकयोः कल्कं प्रक्षिप्य मृद्वग्निना पुनरप्यवधानेन जलक्षयपर्य्यन्तं पक्तव्यं यथा सिक्थकदाहो न स्यात्; सिद्धे च तद्घृतपात्रं शीतलजले निक्षिप्य शीतीभूतमाकर्षयेत्, तथा सति सिक्थकस्य दाहो न स्यादिति भावः ॥ ४२ ॥

अरुंषिकायामित्यादौ ।—निम्बाम्बु अर्द्धसृतो निम्बक्वाथः ॥ ४३ ॥

पुराणमपि पिण्याकं पुरीषं कुक्कुटस्य वा।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम्॥
अरुंषिघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम्॥ ४४॥

हरिद्राद्यं तैलम्—

हरिद्राद्वयभूनिम्ब-त्रिफलारिष्टचन्दनैः।
एतत् तैलमरुंषीणां सिद्धमभ्यञ्जने हितम्॥ ४५॥
दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम्।
अवपीड़ाशिरोवस्तीनभ्यङ्गांश्चावचारयेत्॥
कोद्रवाणां तृणक्षार-पानीयं परिधावने।
कार्य्यो दारुणके मूर्द्ध्नि प्रलेपो मधुसंयुतः॥
पियालवीजमधुक कुष्ठमिश्रैः ससैन्धवैः।
काञ्जिकस्था त्रिमध्याक्तं माषा दारुणकापहा॥ ४६॥
सह नीलोत्पलकेशरयष्टीमधुकतिलैः सदृशमामलकम्।
विजातमपि च शीर्षे दारुणरोगं शमं नयति॥ ४७॥

त्रिफलाद्यं तैलम्—

त्रिफलाया रजो मांसी मार्कवोत्पलशारिवैः।
ससैन्धवैः पचेत्तैलमभ्यङ्गाद्रुक्थिकां जयेत्॥ ४८॥

---

पुराणमित्यादि—योगत्रयम्, अतएव वाग्भटः। पिण्याकमिन्नस्वन्नो, एकधाम ...प्यायुर्वेदसंवादात्। भृष्टकुष्ठचूर्णमिति कपाले भृष्टा दग्ध्वा चूर्णं कत्वा ...मित्यर्थः॥ ४४। ४५॥

दारुण इति रुक्थिकायाम्। अवपीडा नस्यभेदः। शिरोवस्तिश्च शिरोबस्ति... ...नेन देय इत्याहुः। पियालवीजमधुककुष्ठानि मिश्राणि येति विग्रहं कत्वा समा... ...धयम्, मिश्रैरित्यत्र स्थाने माषैरित्यपि पाठान्तरम्॥ ४६॥

सहेत्यादौ।—नीलोत्पलस्य केशरं किञ्जल्कः। सदृशमिति तुल्यम्॥ ४७॥

त्रिफलाया इत्यादौ।—मार्कवो भृङ्गराजः; उत्पलशारिवा अनन्तमूलम्, ...न्दमलाहुस्तः, अन्ये तु उत्पलं नीलोत्पलं शारिवा च इत्याहुः॥ ४८॥

चित्रकाद्यं तैलम्—

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम् ॥ ४९ ॥

गुञ्जाद्यं तैलम्—गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डूदारणहृत् कुष्ठ-कपालव्याधिनाशनम् ॥ ५० ॥

भृङ्गराजतैलम्—

भृङ्गरजत्रिफलोत्पलशारि-लौहपुरीषसमन्वितकारि ।
तैलमिदं पचदारणहारि कुञ्चितकेशघनस्थिरकारि ॥ ५१ ॥

प्रपौण्डरीकाद्यं तैलम्—

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवं तैर्द्विरामलकीरसः ।
साध्यः सप्रतिमर्षः स्यात् सर्वशीर्षगदापहः ॥ ५२ ॥

मालत्याद्यं तैलम्—

मालतीकरवीराग्नि-नक्तमालविपाचितम् ।

---

चित्रकमित्यादौ ।—कोषातकी घोषकः ॥ ४९ ॥

भृङ्गराजरसेनेति चतुर्गुणेनेत्यर्थः ॥ ५० ॥

भृङ्गरज इत्यादौ ।—भृङ्गरजो भृङ्गराजस्तस्य रसश्चतुर्गुणः, पाकार्थत्वात् । भृङ्गरजःशब्दोऽप्यस्ति, यथा "ये मासमेकं स्वरसं पिबन्ति च दिने दिने । भृङ्गरजःसमुत्थम्" इति । त्रिफलादीनां कल्कः । उत्पलं नीलोत्पलम् ; शारि शारिवा अनन्तमूलम्, समन्वितकारः सहकारः समन्वितशब्दस्य सहार्थत्वात्, अस्य च फलमध्यं ग्राह्यं केश्यत्वात् कृष्णीकरणत्वाच्च । भृङ्गराजादिसमन्वितकारान्तं द्रव्यमस्मिन्नस्तीति इन् तैलविशेषणमेतत् । अन्ये तु भृङ्गराजादि सर्वं द्रव्यं कल्कं जलेन पाकः, उत्पलशारिवा अनन्तमूलम्, भृङ्गरजः समन्वयं कर्त्तुं शीलमस्येति तैलविशेषणमिति । व्यवहारस्तु पूर्वव्याख्ययैव । कुञ्चितकेशघनस्थिरकारीति केशस्य कुञ्चितत्वघनत्वस्थिरत्वकारीत्यर्थः । कुञ्चितशब्दः पूर्वनिपातश्छान्दसत्वात् ॥ ५१ ॥

प्रपौण्डरीकेत्यादौ ।—तैलापेक्षया द्विगुणेनामलकरसेनैव पाकः । प्रतिमर्षो नस्यभेदः । सप्रतिमर्ष इति प्रतिमर्षविधिना उपयुक्त इत्यर्थः ॥ ५२ ॥

तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम्।
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम्॥ ५३॥
धात्र्याम्रमज्जलेपात् स्यात् स्थिरता स्निग्धकेशता।
इन्द्रलुप्ते शिरां विद्धा शिलाकाशीशतुत्थकैः॥
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम्।
कुटन्नटं शिखीजातीकरञ्जकरवीरजैः॥ ५४॥
अवगाढपदञ्चैव पुच्छयित्वा पुनः पुनः।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः॥ ५५॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि॥ ५६॥
भल्लातकबृहतीफलगुञ्जामूलफलैश्च एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति॥ ५७॥

---

मालतीत्यादि।—मालती जाती, अग्निश्चित्रकः। अत्र गोमूत्रेण पाक इति श्रीकण्ठः॥ ५३॥

धात्रीत्यादौ।—मज्जशब्देनाम्रेणैव सम्बन्धः, आममज्जा तु बालाम्रास्थि। इन्द्रलुप्त इत्यादौ।—शिरामिति इन्द्रलुप्तसन्निहितां शिराम्। तैलञ्चाभ्यञ्जने हितमिति। कुटन्नटादिकरवीरान्तैः कल्कैः सिद्धं तैलमित्यर्थः। कुटन्नटमिति कुटन्नटं कैवर्त्तमुस्तकम्, शिखी चित्रकः। अन्ये तु कुटन्नटमिति छेदः, विच्छेदपाठात् कुटन्नटं विनापि चित्रकादिद्रव्यचतुष्टयेन तैलसाधनं सूचयन्ति; व्याख्यानयन्ति च—शिखीति दीर्घपाठश्छान्दसत्वात् समर्थनीयः। अन्ये तु कुटन्नटादिभिरपि लेप एव; तैलन्तु पूर्वोक्तमालतीकरवीरादिसिद्धमेव बोध्यमित्याहुः॥ ५४॥

अवगाढेत्यादि।—अवगाढपदमिति गम्भीरपदं यथा स्यात् तथा कूर्च्चनखरश्म्यादिभिः पुच्छयित्वा रक्तगुञ्जाफलैः पुनः पुनर्लिम्पेत्॥ ५५॥

हस्तिदन्तेत्यादौ। मुख्यमित्यकृत्रिमम्—तेन दार्वीक्वाथोद्भवरसाञ्जननिषेधः। अत्र जलेन पेषणं बोध्यं द्रव्यान्तरस्यानुक्तेः। अतएव वक्ष्यमाणेन छागीक्षीररसाञ्जनेत्यादिना अस्य न पौनरुक्त्यम्॥ ५६॥

भल्लातकेत्यादौ।—भल्लातकबृहतीफलयो रसः। उक्तं हि वाग्भटे "सक्षौद्र

बृहतीफलरसपिष्टं गुञ्जाफलमूलमिन्द्रलुप्तस्य।
कनकनिघृष्टस्य सतो दातव्यं पृच्छितस्य सदा॥
घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्ठनम्।
चूर्णितैर्मरिचैः कार्यमिन्द्रलुप्तविनाशनम्॥ ५८॥
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसीलिप्ताः।
जायन्ते सप्तरात्रात् खल्वाग्रामपि कुञ्चितायिकुराः॥ ५९॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति घनकेशा दृढमूलायतानृजवः॥ ६०॥

गुञ्जाद्यं तैलम्—

गुञ्जोपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम्।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी॥
सिद्धार्थं तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचितम्।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम्॥
कूर्मपृष्ठसमानापि रूक्षा या रोमतस्करी।
दिग्धा मानेन जायेत ऋक्षशारीव लोमशी॥ ६१॥

---

नुद्दवार्ताकुस्वरसेन घर्षेन वा। भल्लातकस्य च पत्राणां भल्लातकरसेन … इति॥ ५७॥

बृहतीत्यादौ।— पक्वबृहतीफलरसेन पिष्टं गुञ्जाया मूलं फलं वा। कनकनिघृष्टस्येति कनकं सुवर्णं धुस्तूरस्य मूलं वा। पृच्छितस्येति नखरञ्जन्यादिना विलिखितस्य गण्डूर्नामित्यवचूर्णनम्॥ ५८। ५९॥

मधुकेत्यादौ।—इन्दीवरं नीलोत्पलम्, भृङ्गी भृङ्गराजः। अनृजवः कुटिलाः॥ ६०॥

गुञ्जेत्यादौ।—मार्कवो भृङ्गराजः; लाङ्गलीविषं विषलाङ्गलिकामूलाख्यं विषम्, शिवा लाङ्गली च विषञ्चेति द्रव्यद्वयम्। रक्तिका गुञ्जिका, तस्या मूलं, फलमित्यन्ये। इन्द्रवारुणी गोरक्षकर्कटी, सिद्धार्थं श्वेतसर्षपं, तीक्ष्णतैलं सार्षपतैलं, ज्योतिष्मतीमूलं फलमित्यन्ये। सिद्धार्थतीक्ष्णतैलमिति समस्तपाठपक्षे तीक्ष्णमिति तैलविशेषणम्। अभर्जितस्य सर्षपस्य तैलं ज्ञेयम्। अजामूत्रगोमूत्र

आदित्यपाकगुडूचीतैलम्—

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम्।
गुडूचीस्वरसे तैलमभ्यङ्गात् केशरोपणम्॥ ६२॥

चन्दनाद्यं तैलम्—

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम्।
कान्ता वटावरोहश्च गुडूची विसमेव च॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च।
मार्कवस्वरसेनैव तैलं मृदग्निना पचेत्॥
शिरस्युत्पतिता केशा जायन्ते घनकुञ्चिताः।
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः।
नस्येनाकालपलितं निहन्यात्तैलमुत्तमम्॥ ६३॥
तैलं सयष्टिमधुकैः क्षीरे धात्रीफलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ॥ ६४॥
त्रिफला नीलिनीपत्रं लौहभृङ्गरजः समम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम्॥ ६५॥
त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत्।

---

मिलित्वा चतुर्गुणे, शेषः कल्क.। दिग्धा इति मक्षिता। स्फोटस्य भल्लकस्य शार्वी नीयिका इव॥ ६१॥

वटावरोहेत्यादौ।—केशिनी भूतकेशी मांसी वा एतयोश्चूर्णं तैलात् पादिक कल्कत्वात्, गुडूचीरसस्तु तैलसम. आदित्यपाकत्वात्॥ ६२॥

चन्दनमित्यादौ।—कान्ता प्रियङ्गु.; विसं मृणाल, केशी भूतकेशी, मार्कव रसश्चतुर्गुणः॥ ६३॥

तैलमित्यादौ।—क्षीरमेव चतुर्गुण द्रवान्तराभावात्॥ ६४॥

त्रिफलेत्यादौ।—नीलिनी लताविशेषेति प्रसिद्धा, तस्याः पत्र; लौहभृङ्गराजसोश्चूर्णमित्यर्थः। अविमूत्रेण संयुक्तमिति भावितम् शिरोऽभिपीड्य प्रहरौ द्वौ त्रीन् वा धार्यः; एवमन्यत्रापि शिरोलेपनधारणम्॥ ६५॥

ईषत्पक्के नारिकेले भृङ्गराजरसान्विते ॥
मासमेकन्तु निक्षिप्य सम्यग्गर्भात् समुद्धरेत् ।
ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत् सप्तमे दिने ।
क्षालयेत् त्रिफलाक्काथैः क्षीरमांसरसाशिनः ।
कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥ ६६ ॥
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।
केशानां कृष्णकरणं स्नेहनञ्च विधीयते ॥ ६७ ॥
भृङ्गपुष्पं जवापुष्पं मेषीदुग्धप्रपेषितम् ।
तेनैवालोडितं लौहपात्रस्थं भूम्यधः कृतम् ॥
सप्ताहादुद्धृतं पश्चाद्भृङ्गराजरसेन तु ।
आलोड्याभ्यज्य च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम् ।
एवं सिन्दूरबालाम्रशङ्खभृङ्गरसैः क्रिया ॥ ६८ ॥
नरदुग्धशङ्खचूर्णं काञ्जिकसिक्तं हि सीसकं घृष्टा ।
लेपात् कचानकदलावनद्धान् शुभ्रान् करोति नीलतरान् ॥६९॥

---

त्रिफलेत्यादौ ।—गर्भादिति नारिकेलोदरात् । गर्त्तादिति च पाठः स एवार्थः ॥ ६६ ॥

उत्पलमित्यादौ ।—उत्पलं नीलोत्पलं, मास भूमौ निधापयेदिति लौहपात्रे कृत्वा भूम्यधः स्थापयेदित्यर्थः ॥ ६७ ॥

अभ्यज्येति भृङ्गराजरसालोडितेन भृङ्गराजपुष्पादिना म्रक्षयित्वेत्यर्थः । वेष्टयित्वा इति कदलीपत्रेणेति शेषः । शिरःप्रक्षालनञ्च त्रिफलाक्काथेन वदन्ति । बालाम्रं बालाम्रबीजं, शङ्ख. शङ्खनाभी एवमित्यनेन सिन्दूरादिनयेऽपि पूर्ववन्मेषीदुग्धपेषणादिकमतिदिशन्ति । भृङ्गरसैरिति भृङ्गराजरसोऽपि आलोडनार्थम्, एवं तत्र यद्यपि एवमित्यतिदेशेनैव लभ्यते तथापि स्पष्टार्थमुक्तम् ॥ ६८ ॥

नरेत्यादि ।—अत्र किञ्चित् पारदं गृहीत्वा आवर्त्यमाने सीसके प्रक्षिपेत्,

लौहमलामलकल्कैः सजवाकुसुमैर्नरः सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि॥ ७०॥

निम्बस्य वीजानि हि भावितानि
भृङ्गस्य तोयेन तथाशनस्य।
तैलन्तु तेषां विनिहन्ति नस्याद्
दुग्धान्नभोक्तुः पलितं समूलम्॥ ७१॥

निम्बस्य तैलं प्रकृतिस्थमेव
नस्ते निषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य
जराग्रभूतं पलितं निहन्ति॥ ७२॥

क्षीरात् समार्कवरसाद्द्विप्रस्थे मधुकात् पले।
तैलस्य कुडवं पक्वं तन्नस्यं पलितापहम्॥ ७३॥

महानीलतैलम्—

आदित्यवल्ल्या मूलानि कृष्णशैरीयकस्य च।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च॥
मार्कवं काकमाची च मधुकं देवदारु च।

---

तक्रेण सह एकीभूत सीसकं घृष्ट्वा शिरसि लेपो देय इत्युपदिशन्ति वृद्धाः। अकदलावनद्धमित्यर्कपत्रेण पिधाय बन्धनमित्यर्थः॥ ६९॥

लौहमलेत्यादौ।—आमलकं धात्रीफलं, जवाकुसुमं ओड्रपुष्पम्॥ ७०॥

निम्बस्येत्यादि।—अशनः पीतशालः। भावना च प्रत्येकं सप्ताहम्। ७१॥

निम्बतैलं निम्बवीजस्य तैलं, प्रकृतिस्थमेवेति भृङ्गराजरसादिभावनारहितम्। विधिनेति नस्योक्तविधिना। जराग्रभूतमिति जरागमनसूचकम्॥ ७२॥

क्षीरादित्यादि।—क्षीरभृङ्गराजरसयोर्मिलित्वा प्रस्थद्वयम्, निर्देशस्य मानप्रधानत्वात्। मधुकात् पले इति सप्तम्येकवचनम्, न तु प्रथमाया द्विवचनं, अनुक्तश्लसंवादात॥ ७३॥

महानीलतैले—आदित्यवल्ली सूर्यावर्त्तः, आदित्यपर्णीति पाठे स एवार्थः।

पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थिकर्दमः कृष्णो मृणाली रक्तचन्दनम् ॥
नीली भल्लातकास्थीनि कासीसं मदयन्तिका ।
सोमराज्यशनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥
पुष्पाण्यर्जुनकाश्मर्य्योश्चाम्रजम्बूफलानि च ।
पृथक् पञ्चपलैर्भागैः सुपिष्टैराढकं पचेत् ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥
लौहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ ७४ ॥

भृङ्गराजघृतम्—

भृङ्गराजरसे पक्वं शिखिपित्तेन कल्कितम् ।
घृतं नस्येन पलितं हन्यात् सप्ताहयोगतः ॥ ७५ ॥

---

कृष्णसैरीयकी नीलझिण्टी ; सुरसः पर्णासः, अञ्जनं रसाञ्जनं ; कृष्णकर्दमो नलिनीमूलस्थितकर्दमः, सुश्रुतेऽपि "पङ्केन नलिनीभवेन" इत्युक्तम् । नीली नीलीति ख्याता लता ; अशनः पीतशालः ; शस्त्रं काललौहचूर्णं, पिण्डीतो मदनः, कृष्णाविति कृष्णपुष्पी । पुष्पाण्यर्जुनकाश्मर्य्योरिति अर्जुनकाश्मरीभवानि पुष्पाणि, अर्जुनकाश्मर्य्योरित्यपि पाठः । लौहपात्रेऽग्निना पचेदादित्यपाकं वा कुर्य्यादिति योज्यम् । आदित्यपाकस्तु आदित्यरश्मिसम्बन्धादेव द्रवशोषावधि । अत भागैरिति बहुवचनादेव पृथग्भागे लब्धे पृथगिति पदं न्यायसिद्धस्यापि त्रिफलायाः पृथग्भागस्य द्योतकार्थं, कल्कभूयस्त्वञ्च वचनादेव भवन्न विकल्पनीयम् ॥ ७४ ॥

भृङ्गराजेत्यादौ ।—शिखी मयूरः । इदन्तु कुडवमानमव नस्ययोगत्वात् ॥७५॥

काञ्जीपिष्टशेलुफलमज्जभिः सच्छिद्रलौहगे।
यदर्कतापात् पतति तैलं तन्नस्यकर्मणात्॥
केशा नीलालिसङ्काशाः सद्यः स्निग्धा भवन्ति च।
नयनश्रवणग्रीवादन्तरोगांश्च हन्त्यदः॥ ७६॥
काशीशरोचनातुल्यं हरितालं रसाञ्जनैः।
अम्लपिष्टैः प्रलेपोऽयं हृषकच्छाहिपूतयोः॥ ७७॥

## पटोलाद्यं घृतम्—

पटोलपत्रत्रिफलारसाञ्जनविपाचितम्।
पीतं घृतं निहन्त्याशु कच्छामप्यहिपूतनाम्॥ ७८॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम्।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम्॥ ७९॥
नागकेशरचूर्णं वा शतधौतेन सर्पिषा।
पिष्ट्वा लेपो विधातव्यो दाहे हर्षे च पादयोः॥ ८०॥

इति क्षुद्ररोगचिकित्सा।

---

काञ्जीत्यादौ।—शेलुर्बहुवारः। सच्छिद्रलोहग इति बहुच्छिद्रलौहपात्रस्थं। नीलालिसङ्काशा इति नीलपदं पिङ्गलभ्रमरनिरासार्थम्॥ ७६॥

काशीशमित्यादौ।—एतैरिति शेषः। काशीशरोचनातुल्यहरितालरसाञ्जनैरित्यपि पाठः॥ ७७। ७८॥

वराहदशनाह्वमिति वराहदन्तमिति प्रसिद्धम्॥ ७९। ८०॥

इति क्षुद्ररोगचिकित्साविवृतिः।

# अथ मुखरोगचिकित्सा।

## ओष्ठरोगचिकित्सा।

ओष्ठप्रकोपे वातोत्थे शाल्वणेनोपनाहनम्।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम्॥ १॥
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते।
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च।
यष्टीमधुकचूर्णञ्च विदध्यात् प्रतिसारणम्॥ २॥

वेधं शिराणां वमनं विरेकम्
तिक्तस्य पानं रसभोजनञ्च।
शीतान् प्रलेपान् परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्य्यात्॥

पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः॥
शिरोविरेचनं धूमः स्वेदः कवड़धारणम्।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके॥
त्रिकटुः सर्जिकाचारः चारश्च यावशूकजः।

---

क्षुद्ररोगास्तु चतुश्चत्वारिंशत्, मुखरोगास्तु पञ्चषष्टिः, अतो रोगगणत्वसामान्यात् क्षुद्ररोगचिकित्सितप्रसङ्गान्मुखरोगचिकित्सितमुच्यते। ओष्ठेत्यादि।—सुश्रुतस्य। मस्तिष्के चैवेति। मस्तिष्कः शिरोबस्तिः स्नेहोक्तपिचुधारणं वा। वातहरैरिति भद्रदार्वादिभिः॥ १॥

रसायनमिहेष्यत इति रसायनं च्यवनप्राशादि। श्रीवेष्टकमित्यादि।—सुश्रुतस्य। श्रीवेष्टकं नवनीतखोटिः। प्रतिसारणं घर्षणम्। वाग्भटे तु श्रीवेष्टकस्थाने मधूच्छिष्टं पठ्यते॥ २॥

वेधमित्यादि।—शिरा च ओष्ठसमीपगता बोध्या। तिक्तस्येत्यत्र सर्पिष इति शेषः। शिर इत्यादि।—सुश्रुतस्य। धूमोऽत्र वैरेचनिकः कफघ्नयोग्यत्वात्, एव

क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ३ ॥
भेदोजे खेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ॥ ४ ॥
सर्जरसकनकगैरिकधन्याकतैलघृतसिन्धुसंयुक्तम्।
सिद्धं सिक्थकमधरे स्फुटितोच्चटिते व्रणं हरति ॥ ५ ॥

इत्योष्ठरोगचिकित्सा।

## अथ दन्तरोगचिकित्सा।

शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्।
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम् ॥ १ ॥

कुष्ठं धात्री लोध्रमब्दं समङ्गा
पाठा तिक्ता तेजनी पीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानाम्
रक्तस्रावं हन्ति कण्डूं रुजाञ्च ॥ २ ॥

कवलधारणमिति कफहरद्रव्यकृतं, वाग्भटेऽप्युक्तं "धूमस्वेदनगण्डूषा प्रयोज्याश्च कफच्छिदः" इति ॥ ३ ॥

भेदोज इत्यादि।—सुश्रुतस्य। शोधित इति भेदोहरणेन विशद्धे। ज्वलन इति अग्निकर्म ॥ ४ ॥

सर्जेत्यादौ।—कनकगैरिकम् उत्कृष्टगैरिकमित्यर्थः। एतच्च सर्जरसादिचूर्णं सिक्थकान्त खोलके किञ्चिदग्नावुष्णीकृत्य प्रलेपयोग्यं पक्का अवतार्य अधरे धारणीयम् ॥ ५ ॥

इत्योष्ठरोगचिकित्साविवृतिः।

दन्तरोगचिकित्सामाह शीताद इत्यादि।—सुश्रुतस्य। नागरादित्रिफलान्त एको योगः ॥ १ ॥

कुष्ठमित्यादि।—तेजनी चवी। पीतिका हरिद्रा ॥ २ ॥

चलदन्तस्थिरकरं कुर्य्याद्बकुलचर्वणम्।
आर्त्तगलदलक्वाथगण्डूषो दन्तचालनुत्॥
दन्तचाले हितं श्रेष्ठं तिलोग्राचर्वणं सदा।
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्॥
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम्।
दन्तानां तोदहर्षे च वातघ्नाः कवड़ा हिताः॥ ३॥
दन्तचाले तु गण्डूषो बकुलत्वक्कृतो हितः।
माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम्॥ ४॥
विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत्।
लोध्रपत्तङ्गमधुकलाक्षाचूर्णैर्मधूत्तरैः।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः॥ ५॥
शैशिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः॥ ६॥

---

चलेत्यादौ।—बकुलस्य फल दन्तस्थिरकरत्वात्। आर्त्तगल छागडा इति ख्याता, उग्रा वचा दन्तपुप्पुटक इत्यादि।—स्पष्टम्। तरुण इत्यत्वन्नभावे, रक्तमोक्षणञ्च प्रच्छनेन। क्षारो यवक्षारः। वातघ्नाः कवडा इति उष्णतैलघृतसर्वैर्दशमूलक्वाथादयः॥ ३॥

माक्षिकमित्यादौ।—पिप्पलीघृतापेक्षया मधु तु बहुमात्रं देयमिति वदन्ति, मधुनः कर्षमेकम्, गव्यघृत माषकाष्टकम्, पिप्पलीचूर्णं माषकचतुष्टयम्, आलोड्य मुखे धार्य्यम्॥ ४॥

विस्रावित इत्यादि।—जलौकाप्रच्छनादिना रक्ते स्रुते। व्रणमिति जलौकाप्रच्छनादिजं क्षतम्। पत्तङ्गं रक्तचन्दनम्। क्षीरिण इति वटोडुम्बरादयः एषां क्वाथः, क्षौद्रघृतशर्कराः प्रक्षेपणीयाः॥ ५॥

शैशिर इति दन्तरोगविशेषे, एवं परिदरेऽपि॥ ६॥

क्रियां परिदरे कुर्य्याच्छीतादौक्तां विचक्षणः।
संशोध्योभयतः कायं शिरश्चोपकुशे ततः॥ ७॥
काकोडुम्बरिकागोजीपत्रैर्विस्रावयेद्भिषक्।
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिशोधयेत्॥ ८॥
पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन संगृह्य कवड़ं तस्य योजयेत्॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः॥ ९॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।
क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता॥ १०॥

क्रियामित्यादि।—सुश्रुतस्य। कायमुभयतः संशोध्येति कायं शरीरम्, उभयत इति वमनविरेचनाभ्यां शिरश्च विशोध्येत्यन्वयः। शिरःशोधनञ्च शिरोविरेचनेनैव संशोध्य। उभयतः कायः शिरश्चेति ग्रन्थं परिदरे उपकुशे च योजयन्ति, पुरैवतत्, यतः परिदरो रक्तकफजः अतएव कफप्रत्यनीकं वमनं पित्तप्रत्यनीकञ्च विरेचनं हितमेव, शिरोविरेचनं युक्तमेव हि। कायमित्यत्र कार्य्यमिति पाठः शीतादौक्तां क्रियां परिदरे कुर्य्यात्। उपकुशे तु वक्ष्यमाणरक्तस्रावादि कार्य्यमिति शेषः॥ ७॥

गोजी शाखोटकः। लवणैरिति पञ्चभिः॥ ८॥

पिप्पल्य इत्यादौ।—निचुलफलं हिज्जलफलम्। एते च व्यस्ताः समस्ताश्च कवले योज्याः। शोधयेदिति दन्तमूलानि शोधयेत्। अतिघातजेऽपि दन्तवैदर्भे शस्त्रेण दन्तमूलमांसच्छेदनम् अभिघातदुष्टरक्तकृतपाकेन शीर्णमांसस्यापगमनार्थम्। क्षारप्रयोगोऽपीह शोधितशेषपूतिमांसदूरीकरणार्थं तदनन्तरञ्च शीतक्रियाः क्षारदग्धपित्तरक्तनिर्वापणार्थं तास्च नस्यगण्डूषादयः। उक्तं हि वाग्भटे "क्षारः स्यात्ततो नस्यं गण्डूषादि च शीतलम्" इति॥ ९॥

उद्धृत्येत्यादि।—सुश्रुतस्य। अग्निदाहोऽत्र रक्तादिसुतिनिषेधार्थम्। क्रिमिदन्तो द्विविधः चलश्चलश्च तत्र यश्चलः स उद्धार्य्यस्तद्विधिर्वक्ष्यमाणातिदिश्यते। उद्धार्य्यत्वेन समानत्वात् न त्वचलस्य, तस्यानुद्धार्य्यत्वात् स एव क्रिमिदन्तो उद्धरणदाहौ

छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
पाठावचातेजोवती-सर्जिकयावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलनिम्बत्रिफला-कषायश्चात्र धावने ।
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥
नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ।
यं दन्तमधिजायेत नाडी तं दन्तमुद्धरेत् ॥
छित्त्वाधिमांसं शस्त्रेण यदि नोपरिजो भवेत् ।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥
गतिर्हि नन्ति हन्वस्थि दशने समुपेक्षिते ।
तस्मात् समूलं दशनमुद्धरेद् भग्नमस्थि च ॥ ११ ॥
उद्धृते तूत्तरे दन्ते शोणितं सम्प्रसिच्यते ।
रक्ताभियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥

---

युक्तौ। अधिदन्तं पुनरचलेऽपि तद्विधानार्थमिह क्रिमिदन्तकविध्यतिदेशनव्यापारव्युद्धरणदार्थ्योरभिधानम् ॥ १० ॥

छित्त्वेत्यादि।—सुश्रुतस्य। तेजोवती चवी कवडग्रहीऽयम्। क्षौद्रद्वितीयाः पिप्पल्य इति क्षौद्रालोडितपिप्पलीकवलः। वैरेचनिकधूमसाहचर्यात् शिरोविरेकोऽपि तीक्ष्ण एव बोध्यः। यस्य दन्तस्य समीपे नाडी स्यात् तं दन्तं चलमचलं वा शस्त्रेण दन्तावरकमांसं छित्त्वा उद्धरेत्। यदि नोपरिजो भवेदित्युद्धरणस्यापवादः। अधोगतदन्तानुद्धरणे दोषमाह गतिरित्यादि।—गतिर्नाडी हन्वस्थिकपालसमीपास्थि दारयति। दशने समुपेक्षिते सत्यनुद्धृते सतीत्यर्थः। किंवा गतिर्हि नन्ति हन्वस्थि दशनं समुपेक्षितं इति पाठान्तरे दन्तं गतिरुपेक्षितेत्यर्थः। भग्नमस्थि चेति चशब्द उद्धृतदन्तस्य भग्नशेषमस्थि चेत्यर्थः। किंवा गतिविशोधितहन्वस्थि भग्नास्थ्युच्यते ॥ ११ ॥

उपरिजदन्तानुद्धरणे हेतुमाह उद्धृते इत्यादि।—उत्तरे इत्युपरिजाते सम्प्रसिच्यते अतिस्रवतीत्यर्थः। पूर्वोक्ता इति शोणितवर्णनीयोक्ता पक्षवधादयः।

चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ।
कषायं जातीमदनकटुकास्वादुकण्टकैः ॥
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत् कृतम् ।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥
कषायं परतः कृत्वा पिष्ट्वा लोध्रादिकल्कितम् ।
कण्टकी मदनो योज्यः स्वादुकण्टो विकङ्कतः ॥ १२ ॥
सुखोष्णाः स्नेहकवडाः सर्पिषस्त्रैवृतस्य वा ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ।
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥ १३ ॥

कषायमित्यादि ।—सुश्रुतस्य । जात्याः पत्रम्, मदनं मदनकण्टकम्, कटुका कटुरोहिणी, स्वादुकण्टकः विकङ्कतः । एतैः कृतः कषायः मुखधारणरूपः क्वाथः दन्तगतां गतिं हन्यात् तथा लोध्रादिभिश्च यष्ट्याह्वान्तैः कल्करूपैर्यत् कृतं तैलं तदपि दन्तगतिं हन्यादित्यर्थः । अन्ये तु कषायमित्यतः परं कृत्वेति शेषः तेन कण्टक्यादिभिः कषायं कृत्वा लोध्रादिकल्केन च कृतं यत् तैलमिति व्याचक्षते । एतेनाप्यनुमतोऽयमर्थः व्यवहारोऽप्यनेनैव धावनम् । जातीमदनस्वादुकण्टकखदिरमिश्रधिकं श्लोकार्द्धं पठित्वा तदनन्तरमेव कषायं जातीमदन इत्यादिकं पठति आचष्टे च । कषायमिति पदं धावनमित्यनेन सम्बध्यते तेन जात्यादिद्रव्यचतुष्टयकषायेण धावनं परेण तु जातीमदनकादिद्रव्याष्टकेन कल्केन तैलं साधनीयमिति ; एतच्च तन्मतानुयायिवाग्भटेऽपि धावनं जातीमदनखदिरस्वादुकण्टकैरित्य कथनात् । अन्ये तु कषायशब्दं समासे विभक्तिरहितं पठन्ति तेषां मते कषायमाम्रद्रुतकम्, विसाऽत्यायोक्तखदिरादिशोधनकषायद्रव्यं वा ; अस्मिन् पक्षे कषायद्रव्यादिभिः यष्ट्याह्वान्तैस्तैलपाकः कषायद्रव्यान्तर्गताया अपि जात्याः पृथगभिधानं ...गदग्रहणार्थमित्यपि वदन्ति ॥ १२ ॥

दन्तमूलगतचिकित्सितमभिधाय दन्तगतव्याधिचिकित्सामाह सुखोष्णा इत्यादि— सुश्रुतस्य । स्नेहाः सर्पिस्तैलवसामज्जानस्तेषां व्यस्तानां समस्तानाञ्च, कवलाः कवडाः । सर्पिषस्त्रैवृतस्य वेति त्रैवृतसर्पिः पतानकचिकित्सायां सुश्रुतेनोक्तम् । अनिलघ्नानामिति भद्रदार्वादिदशमूलादीनां निर्यूहः क्वाथः ॥ १३ ॥

अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥
दन्तहर्षक्रियाश्चापि कुर्य्यान्निरवशेषतः।
कपालिकाः कृच्छ्रसाध्यास्तत्राप्येषा क्रिया हिता ॥ १४ ॥
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम्।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः।
हिङ्गु सोष्णम्बु मतिमान् क्रिमिदन्तेषु दापयेत् ॥ १५ ॥
हस्तिभूमिकदम्बकपञ्चाङ्गुलकण्टकारिकाक्वाथः।
गण्डूषस्तैलयुक्तः क्रिमिदन्तकवेदनाशमनः ॥
नीलीवायसजङ्घाकगुदुग्धीनान्तु मूलमेकैकम्।
सञ्चर्व्य दशनविधृतं दशनक्रिमिपातनं प्राहुः।
चलमुद्धृत्य वा स्थानं दहेत्तु शुषिरस्य वा ॥ १६ ॥

विदार्य्यादितैलम्—

ततो विदारीयष्ट्याह्व-शृङ्गाटककशेरुभिः।
तैलं दशगुणं क्षीरं सिद्धं नस्ये तु योजयेत् ॥ १७ ॥

---

अहिंसन्नित्यादि।—सुश्रुतस्य। दन्तमूलहिंसया हि अभिघातजा दन्तनाडी दन्तघातश्च स्यात्। कृच्छ्रसाध्येत्यनेन कपालिकायाः शीघ्रप्रतिकर्त्तव्यता सूचयति। एषा क्रियेति दन्तहर्षोक्ता कपालिकाया अपि वातजत्वात्, शर्करोक्तेत्यन्ये ॥ १४ ॥

जयेद्विस्रावणैरिति विस्रावणं क्रिमिदूषितरक्तस्य। अवपीडो नस्यभेदः वातघ्नैरिति वातघ्नद्रव्यकृतैरपीति चक्रः। अन्ये तु अवपीडो यद्यपि वातहरस्तथापि स्थानानुरोधात् क्रियते, विस्रावणादिकुपितरक्तशान्त्यर्थं वातहरं कर्म कर्त्तव्यमिति दर्शयितुं वातघ्नैरितिस्नेहगण्डूषादिविशेषणं कृतम् वाग्भटेऽप्येवमेवोक्तम्। हिङ्ग्वित्यादौ।—सोष्णमिति ईषदुष्णम् ॥ १५ ॥

भूमिकदम्बोऽलम्बुषः; पञ्चाङ्गुल एरण्डः। काकजङ्घा काकजङ्घी; दुग्धी क्षीरादः। चलमित्यादि।— सुश्रुतस्य। सञ्चर्व्योऽवधार्य्य। स्थानमिति उद्धृतदन्तस्य स्थानं

हनुमोक्षे समुद्दिष्टा कार्य्या चार्द्दितवत् क्रिया।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत्॥ १८॥
सप्तच्छदार्कदुग्धाभ्यां पूरणं क्रिमिदन्तनुत्।
जीवनीयेन दुग्धेन क्रिमिरन्ध्रप्रपूरणम्।
अर्कक्षीरेणैवमेकयोगः॥ १९॥
द्रोणपुष्पद्रवः फेनमधुतैलसमायुतः।
क्रिमिदन्तविनाशाय कार्य्यं कर्णस्य पूरणम्॥ २०॥
पटोलकटुकाव्योष-पाठासैन्धवभार्गिकैः।
चूर्णैर्मधुयुतो लेपः कवड़ो मधुतैलकैः॥ २१॥
जिह्वारोगेषु कर्त्तव्यं विधानमिदमौषधम्।
मुस्तामधुकनिर्गुण्डी-खदिरोशीरदारुभिः।
समञ्जिष्ठाविड़ङ्गैश्च सिद्धं तैलं हरेत् क्रिमीन्॥ २२॥

इति दन्तरोग-चिकित्सा॥

अथ जिह्वारोग-चिकित्सा।

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा खलु॥ १॥

---

...नम सुषिरस्येति क्रिमिकृतच्छिद्रस्य यावन्मात्र स्थान तावदेव दहेत। ...नशब्दोऽत्रापि योजनीय। भूरिदेशदुष्टौ समयस्यैव दन्तस्थानस्य दाह, एक ...नदुष्टौ च सुषिरस्थानमात्रदाह इति॥ १६। १७॥

...समुद्दिष्टा इति पदम् अर्दितोक्तसमस्तविध्यर्थमाह। दन्तधावनं दन्तकाष्ठम ...१८—२२॥

इति दन्तरोगचिकित्साविवृतिः।

...जिह्वारोगचिकित्सामाह ओष्ठेत्यादि।—सुस्पष्टम्। कण्टको आरीति ख्यातो ...। १।

पित्तजेषु निघृष्टेषु निःस्रुते दुष्टशोणिते।
प्रतिसारणगण्डूषान्नस्यञ्च मधुरं हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यन्तु प्रतिसारणम् ॥ २ ॥
गृह्णीयात् कवलान् वापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकु-क्षारयूषैश्च भोजयेत् ॥ ३ ॥
जिह्वाजाड्यं चिरजं माणकभस्मलवणतैलघर्षणं हन्ति।
ईषत्तप्तकुक्षीराक्तं जम्बीराद्यम्लचर्वणं वापि ॥ ४ ॥
कर्कटाङ्घ्रिक्षीरपक्व-घृताभ्यङ्गेन नश्यति।
दन्तशब्दः कर्कटाङ्घ्रिलेपाद्वा दन्तयोजितात् ॥ ५ ॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेकगण्डूष-धूमैश्चैनामुपाचरेत् ॥

---

निघृष्टेष्विति शाखोटकादिपत्रैः। मधुरमिति मधुरेण काकोल्यादिगणेन कृत नस्यादित्रयमित्याहुः। लिखितेष्विति मण्डलाग्रादिना। असृजः क्षय इति स्रावविराम इत्यर्थः। पिप्पल्यादिरिति पिप्पल्यादिगणः ॥ २ ॥

श्वेतसर्षपसैन्धवाभ्याञ्च कवल उष्णोदकेन कार्य्यः। पटोलादिभिर्भोजयेत् तथा क्षारयूषैश्च भोजयेदिति। क्षारप्रधानकुलत्थादियूषः क्षारयूषः। तदुक्तं "शुष्कमूलककुलत्थादियूषाः क्षारोत्तरा हिताः। कुलकं बिल्वपत्रञ्च वार्त्ताकुशाकं हितम्" इति ॥ ३ ॥

जिह्वाजाड्यं जौलिसंज्ञकमिति लोके। ईषत्तप्तकुक्षीरेण युक्तं चर्वितं यत् जम्बीरादिकेशरचर्वणम्। चर्वणमित्यत्र घर्षणमित्यपि पाठः ॥ ४ ॥

कर्कटेत्यादौ।—क्षीरसाधनपरिभाषया कर्कटपादेन साधितं यत् क्षीरं तत्पक्वघृताभ्यङ्गेनेत्यर्थः। अभ्यङ्गश्च दशनप्रदेशे म्रक्षणमित्याहुः। अन्ये तु कर्कटपादकल्कक्षीराभ्यां साधितं यद्घृतं तेनाभ्यङ्ग इत्याहुः। दन्तशब्दो दन्तकडकडध्वनिः ॥ ५ ॥

उपजिह्वामित्यादि।—सुश्रुतस्य। संलिख्येति शाखोटकादिपत्रेण। क्षारे

क्षौमयवक्षाराभयाव्योषवह्नि-चूर्णमेतत् प्रघर्षणम्।
उपजिह्वाप्रशान्त्यर्थमेतैस्तैलं विपाचयेत्॥ ६॥
छिन्नां घर्षेद्गलशुण्डीं व्योषोग्राक्षौद्रसिन्धुजैः।
कुष्ठोषणवचासिन्धु-कणापाठाप्लवैरपि।
मक्षौद्रैर्भिषजा कार्य्यं गलशुण्ड्या विघर्षणम्॥ ७॥
उपनासाव्यधो हन्ति गलशुण्डीमशेषतः।
गलशुण्डीहरं तद्वच्छेफालीमूलचर्वणम्॥ ८॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।
निःक्वाथ्य पिचुमर्दञ्च कवलञ्च प्रयोजयेत्।
क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः॥ ९॥

इति जिह्वारोग-चिकित्सा॥

अथ कण्ठरोग-चिकित्सा।

तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पटे।

---

र्णमिति यवक्षारेण। उक्तं हि वाग्भटे—"उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत।" अन्ये तु प्रतिसारणीयक्षारेणेत्याहुः। एभिस्तैलमिति व्योषादिभिः कल्करूपेरित्यर्थः। जल चतुर्गुणम्॥ ६॥

छिन्नामित्यादौ।—उग्रा वचा। कुष्ठोषणेत्यादौ।—ऊषण मरिचं; प्लवः कैवर्त्तमुस्तकः। सिन्धुकणेत्यत्र सिन्धकणेति केचित् पठन्ति। अरुणा अतिविषा। वागभटेऽप्युक्तम्—"मरिचातिविषा पाठा वचाकुष्ठकुटन्नटम्। छिन्नाया सपटुक्षौद्रैर्घर्षणम्" इति, एवं सुश्रुतेऽप्यायुर्वेदसारेऽपि॥ ७॥

उपनासाव्यध इति।—नासासमीपवर्त्ती शिराव्यध इत्यर्थः। नासाया शिराश्चतुर्विंशतिः, तन्मध्ये नासिकाया अतिसन्निहितास्वतस्र परिहार्य्याः। उक्तं हि सुश्रुते—"द्विहादशनासायां तासामौपनासिकाश्चतस्रः परिहार्य्याः." इति॥ ८॥

वचामित्यादि। सुश्रुतस्य। पिचुमर्दो निम्बः। क्षारसिद्धेष्विति मुष्ककापामार्गादिक्षारोदकसिद्धेषु॥ ९॥

इति जिह्वारोगचिकित्साविवृतिः।

एष एव विधिः कार्य्यो विशेषः शस्त्रकर्मणि ॥ १ ॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनुत्।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ २ ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम्।
छर्द्दनं धूमपानञ्च गण्डूषो नस्तकर्म च ॥
वातिकीन्तु स्नुते रक्ते लवणैः प्रतिसारयेत्।
सुखोष्णान् स्नेहकवड़ान् धारयेच्चाप्यभीक्ष्णशः ॥
पत्तङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत्।
द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ॥ ३ ॥
आगारधूमकटुकैः कफजां प्रतिसारयेत्।
श्वेताविड़ङ्गदन्तीषु सिद्धं तैलं ससैन्धवम्।
नस्तकर्मणि दातव्यं कवलञ्च कफोच्छ्रये ॥ ४ ॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्।
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ ५ ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम्।
उन्नाम्य जिह्वामाकृष्य वड़िशेनाधिजिह्विकाम्।

---

तुण्डिकेर्य्यश्रुष इत्यादि।—सुश्रुतस्य। कृमं इति कच्छपरोगे। एष एवेति शस्त्रकर्म्मोक्तविधिविशेषः। शस्त्रकर्मणीति तुण्डीकेरीतालुपुप्पुटौ भेद्यौ, अदर्च्छेद्या इति शेषः ॥ १ ॥

पित्तनाशनं पित्तव्रणनाशनमित्यर्थः ॥ २ ॥

साध्यानामित्यादि।—सुश्रुतस्य। साध्यानामित्यादिना सन्निपातजाया असाध्याया व्यवच्छेदः। लवणैरिति पञ्चभिः। पत्तङ्गं रक्तचन्दनम् ॥ ३ ॥

आगारधूमेत्यादौ।—श्वेता कटभी अपराजिता वा। श्वेतादिसैन्धवान्त कल्कं कवलश्चेति श्वेतादिसैन्धवान्तसिद्धं तैलमेव कवड़मपीत्यर्थः ॥ ४ ॥

पित्तवदिति पित्तरोहिणीवदित्यर्थः। विस्राव्येत्यत्र रक्तमिति शेषः। एतद्

छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्लवणादिभिः ॥ ६ ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ।
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥ ७ ॥
अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम् ।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णनस्यादिकर्म च ॥
क्वाथपानन्तु दार्वीत्वङ्निम्बतार्क्ष्यकलिङ्गजम् ।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ८ ॥
कटुकातिविषादारुपाठामुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥ ९ ॥

---

गर्वेण सम्बध्यते । साधयेत् तुण्डिकेरीवदिति तुण्डिकेर्य्यामपि गलशुण्डिकाविध्यतिदेशात् साधयेत् गलशुण्डिवदिति वाच्ये तुण्डिकेरीविध्यतिदेशो निःशेषच्छेदनार्थः, गलशुण्डीवदत्र विभागच्छेदो न कार्य्य इति बोधयति । छेदयेदित्यादि ।—वाग्भटस्य । तीक्ष्णोष्णैर्लवणादिभिरित्यत्र उपाचरेदिति शेषः । आदिशब्दात् कवडादिपरिग्रह ॥ ५ । ६ ॥

एकवृन्दमित्यादि ।—सुश्रुतस्य । विस्राव्येति जलौकादिभीरक्तं विस्राव्येत्यर्थः । शोधनमिति गलगतदोषशोधनं प्रतिसारणशिरोविरेककवलादिकं, तथा कायशोधनञ्च वमनादिकं, तस्यापि कायशोधनेन शिरोगतदोषस्यापि शोधकत्वात् । तत्र शस्त्रेण साधयेदिति कठिनमल्पवेदनमपक्वं शिलायुं छेदयेत् । पक्वन्तु भेदयेत् । पूयनिःसारणार्थं ततो द्विव्रणीयोक्तविधिना शोधनादिरत्रापि लभ्यते ॥ ७ ॥

अमर्मस्थमित्यादि ।—सुश्रुते गलविद्रधिरयं त्रिदोषविद्रधितुल्यत्वेनोक्तोऽपि चिकित्सितोपदेशात साध्य इति ज्ञेयः । अन्ये तु गलविद्रधेस्त्रिदोषजविद्रधितुल्यत्वेनोक्तत्वेऽपि चिकित्साविधानं कृच्छ्रसाध्यत्वं ज्ञेयम । यश्च सर्वं गलं व्याप्नोति स सर्वसर इत्यभिधानेन मर्मव्यापकोऽपि गलगतमर्मणि मनागस्पर्शविरहादमर्मस्थ उच्यते । किंवा अमर्मस्थमिति क्रियाविशेषणम् । अगम्भीरत्वेन मर्मानवस्पर्शीयं यथा स्यात् तथा भेदयेदित्यर्थः । सामान्यकण्ठरोगचिकित्सामाह कण्ठरोगेष्वित्यादि । वाग्भटस्य । वाग्भटे 'क्वाथः पाने तु दार्वीत्वङ्निम्ब-तार्क्ष्य-कलिङ्गजः' इति पाठः । दार्व्यास्त्वक् ; तार्क्ष्यं रसाञ्जनम् । ८ ॥ ९ ॥

कालकचूर्णम्—

गृहधूमो यवक्षारः पाठाव्योषरसाञ्जनम्।
तेजोह्वात्रिफलालौहचित्रकश्चेति चूर्णितम्॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत्॥ १०॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
सर्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गलरोगनुत्॥ ११॥

पीतकचूर्णम्—

मनःशिला यवक्षारो हरितालं समैन्धवम्।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम्॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम्॥ १२॥

यवाग्रजं तेजोवतीं सपाठाम्
रसाञ्जनं दारुनिशां सकृष्णाम्।
क्षौद्रेण कुर्य्याद् गुड़िकां मुखेन
तां धारयेत् सर्वगलामयेषु॥ १३॥

---

कालकचूर्णे तेजोह्वा चवी : लौह काललौहचूर्णम् अगुरु वा। व्यवहारमप्येवमेव। लौहस्थाने लोध्रमिति केचित् पठन्ति। अस्य योगस्य लौहचूर्णरसाञ्जनचूर्णयोगात् कृष्णत्वेन कालक इति सज्ञा, एवं वक्ष्यमाणपीतकचूर्णेऽपि मनःशिलादियोगात् पीतत्वेन पीतकसंज्ञा विभेया॥ १०। ११॥

पीतकचूर्णे दार्वीत्वगिति षष्ठीसमासः। मूर्च्छितमित्यालोडितम्। एतच्च तथा कालकचूर्णं सर्वस्मिन्नेव मुखरोगे धार्य्यम्। अतएवोक्तं चरके—"योगराजत्रयः प्रोक्ता वातपित्तकफापहाः" इति। प्रत्येकमेव कालकादयस्त्रिदोषहरा इति चक्रव्याख्या॥ १२॥

यवाग्रजमिति।—तेजोवती ज्योतिष्मती, चवी इत्यन्ये। दारुनिशा दारुहरिद्रा॥ १३॥

दशमूलं पिबेदुष्णं यूषं मूलकुलत्थयोः।
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः।
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ १४ ॥

क्षारगुडिका—

पञ्चकोलकतालीशपत्रैलामरिचत्वचः।
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ॥
गुडे पुराणे क्वथिते द्विगुणे गुडिकाः कृताः।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ॥ १५ ॥
मूत्रस्विन्नां शिवां तुल्यां मधुरीकुष्ठबालकैः।
अभ्यस्य मुखरोगांस्तु जयेद्विरसतामपि ॥ १६ ॥
वातात् सर्वसरं चूर्णैर्लावणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवडनस्ययोः ॥ १७ ॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वपित्तहरः कार्यो विधिर्मधुरशीतलः ॥ १८ ॥

---

दशमूलमित्यादौ।—मूलं मूलकशब्देन। क्षीरेत्यादि। मस्तु दधिमस्तु। क्षीरादिभिः प्रत्येकं यथादोषं कवडाः कार्याः, एवं तैलघृतैरपि ॥ १४ ॥

पञ्चकोलेत्यादौ।—पत्रं तेजपत्रं, त्वक् गुडत्वक्। मुष्कको घण्टापारुलः। क्षारसमादितवचनात् द्विगुणो गुडः। क्वथित इति वह्निसंयोगात् द्रवीभूते कर्कन्धुमात्रा अर्द्धमाषकमाना ॥ १५ ॥

मूत्रेत्यादौ।—शिवा हरीतकी, मधुरी मधुरिकैव। अभ्यस्यावर्त्तितं भक्षणविधया। विरसता वैरस्यम् ॥ १६ ॥

वातादित्यादि।—मुस्त्वस्य। सर्वसरो मुखपाकः। लावणैश्चूर्णैरिति सैन्धवचूर्णं। अन्ये तु लवणा ज्योतिष्मती तद्भव लावणमित्याहुः। निश्चलस्तु पञ्चलवणचूर्णैरित्याह। वातहरैः सिद्धमिति भद्रदार्व्वादिभिः कल्कक्वाथरूपैः ॥ १७ ॥

शुद्धकायस्येति विरेकेण वमनेनापि, कफस्थानगतत्वेन पित्तस्यापि वमनार्हत्वात्। मधुरशीतल इति विशेषणार्थमुक्तः ॥ १८ ॥

प्रतिसारणगण्डूषान् धूमं संशोधनानि च ।
कफात्मके सर्वसरे क्रमं कुर्य्यात् कफापहम् ॥ १९ ॥
मुखपाके शिरावेधः शिरः कायविरेचनम् ।
कार्य्यन्तु बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ २० ॥
जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ २१ ॥
कृष्णाजीरककुष्ठेन्द्रयवाणां चूर्णतस्त्र्यहात् ।
मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥ २२ ॥
रसाञ्जनं लोध्रमथाभयञ्च मनःशिला नागरगैरिकञ्च ।
पाठा हरिद्रा गजपिप्पली च स्यात्धारणं क्षौद्रयुतं मुखस्य ॥२३॥
पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवाः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ २४ ॥
पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥ २५ ॥

---

प्रतिसारण इत्यादिना कफजसर्वसरचिकित्सामाह क्रमं कुर्य्यात् कफापहमिति ।
अनुक्तकफापहमिति अनुक्तकफहरविधिसंग्रहार्थमुक्तम् ॥ १९ ॥

मुखपाके शिरावेध इति । शिरावेधस्तु तालुनि अधोजिह्विकायां वा कार्य्यः ।
शिरोविरेचनं कायविरेचनञ्च बहुधा कार्य्यमिति योज्यम् । नित्यमिति तु परेण
सम्बध्यते ॥ २० ॥

जातीपत्रेति जाती मालती, पथ्या. पत्रम्, अमृता गुडूची, यासो दुरालभा,
दार्वी दारुहरिद्रा । यासस्थाने पाठेति केचित् पठन्ति ॥ २१—२३ ॥

पटोलेत्यादि ।—पटोलादीनां पल्लवाः ॥ २४ ॥

पञ्चवल्केत्यादौ ।—सक्षौद्र इत्युभयत्रापि सम्बध्यते । स्वरस इत्यादि । अयं
योग भाष्ये धार्य्यः । वाग्भटे तु गैरिकमप्यत्र योगे पठ्यते, यथा—"स्वरसः क्वथितो
दार्व्या घनीभूतः सगैरिकः । आस्यस्थः समधुर्वक्त्रपाकनाडीव्रणापहः." इति ॥२५॥

सप्तच्छदोशीरपटोलमुस्त-हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य ॥ २६ ॥
पटोलशुण्ठीत्रिफलाविशाला-त्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥
क्वथितास्त्रिफलापाठा मृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ २८ ॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत् ।
तैलेन काञ्जिकेनाथ गण्डूषस्तूर्णदाहहा ॥ २९ ॥
घनकुष्ठैलाधान्यक-यष्टीमधुलवालुकाकवडः ।
वदनेऽतिपूतिगन्धं हरति सुरालशुनगन्धञ्च ॥ ३० ॥

महासहचरतैलम्—

तुलां धृतां नीलसहाचरस्य
द्रोणेऽम्भसः संश्रपयेद्यथावत् ।
पूत्वा चतुर्भागरसे तु तैलम्
पचेच्छनैरर्द्धपलप्रयुक्तैः ॥
कल्कैरनन्ताखदिरैरिमेद-

---

सप्तच्छदेति सप्तच्छदः शारदी, तिक्तरोहिणी कटुकी, राजद्रुम आरग्वध ॥ २६ । २७ ॥

क्वथिता इत्यादौ ।—निषेव्या इति पानगण्डूषाभ्यामुपयोज्या इत्यर्थः । भक्षणीयेति परेण सम्बध्यते ; तेन लेहादिविधया त्रिफला भक्षणीया वेत्यर्थः ॥ २८ ॥

तिला इत्यादि ।—एतैर्गण्डूष इत्यर्थः । सक्षौद्रा इति प्रत्येकममी सक्षौद्रा योगा इति नियमः । दग्धवक्त्रस्येति शम्बूकशङ्खचूर्णादिनेत्यर्थः । घनकुष्ठेत्यादि योगमत्र केचित् पठन्ति ; तदयुक्तम्, हृद्याधिकारे अस्य योगस्य वक्ष्यमाणत्वात् । निबन्धेन तु भ्रमादुभयत्राय योगः पठितो व्याख्यातश्च ॥ २९ । ३० ॥

तुलामित्यादि ।—नीलसहाचरो नीलझिण्टी । चतुर्भागरस इति चतुर्थभाग

जम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत् तैलमास्येव धृतं मुखेन
स्थैर्य्यं द्विजानां विदधाति सद्यः ॥ २१ ॥

इरिमेदाद्यं तैलम्—

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमांस्तैलस्यार्द्धाढ़कं शनैर्विपचेत् ।
कल्कै रक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला-
कर्पूरागुरुपद्मक-लवङ्गकक्कोलजातीफलानाम् ॥
पत्तङ्गगैरिकवराङ्गगजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्णदन्तविद्रधि-शैशिरशीतादन्तहर्षेषु ।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥ २२ ॥

लाक्षाद्यं तैलम्—

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणेरिमक्वाथे द्रव्यैश्च पलसम्मितैः ॥
लोध्रकट्फलमञ्जिष्ठा-पद्मकेशरपद्मकैः ।

---

र्से । अनन्ता अनन्तमूलम् ; इरिमेदो विट्खदिरः, तदभावे खदिरमेव द्विगुणं गृह्णन्ति ॥ २१ ॥

इरिमेदत्वगित्यादौ ।—पद्मेति पद्मकाष्ठम् ; जाती जातीकोषः ; फल जातीफलम् , पत्तङ्गं रक्तचन्दनम् , वराङ्गं गुड़त्वक् , गजकुसुमं नागकेशरम् । परिशीर्णदन्तो दन्तरोगभेदः । विद्रधिर्गलविद्रधिः । दालनो दालनवद्व्याधियोगात् । प्रहृष्टमांसोऽधिमांसः । अवशीर्णोऽवशीर्णमांसः ॥ २२ ॥

तैलमित्यादौ ।—लाक्षाया रसः क्वाथः ; इरिमक्वाथ इति इरिमेदक्वाथः ; चतु-

[illegible]दनोत्पलय[illegible]ह्वैस्तैलं गण्डूषधारणम् ॥
शालनं दन्तचालश्च हनुमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥ २३ ॥

वकुलाद्यं तैलम्—

वकुलस्य फलं लोध्रं वज्रवल्ली कुरुण्टकम् ।
चतुरङ्गुलवब्बोल-वाजिकर्णेरिमाशनम् ॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च ॥ २४ ॥

सहकारगुडिका—

एलालतालवनिकाफलशीतकोष-
कोलद्विकानि खदिरस्य कृते कषाये ।
तुल्यांशकानि दशभागमिते निधाय
प्रोज्झितकैतकपुटे पुटवह्निपाच्य ॥
प्रागंशतुल्यशशिनाथ तदेकसंस्थम्
पिष्ट्वा नवेन सहकाररसेन हस्तौ ।

---

ण्डाऽय पाक । हनुमोक्षो दन्तरोगविशेष । उक्त हि सुश्रुते—"वातन लेखै भावैस्तु हनुसन्धौ विघट्टिते । हनुमोक्ष इति ज्ञेयो व्याधिवर्द्धितलक्षण ' इति । अयञ्च दन्तदेशसामीप्यात् दन्तपीडाजनकत्वाच्च दन्तरोगमध्ये सुश्रुतेन पठित । वङ्गाटे हनुमोक्ष इत्यपपाठ ॥ २३ ॥

वकुलाद्ये वज्रवल्ली अस्थिसहार , कुरुण्टको नीलझिण्टी , चतुरङ्गुल आर ग्वध , वब्बोल तुलसी वावुइ इति ख्यात , वाजिकर्ण शालभेद , अशन पीतशाल , चलतामिति षष्ठीबहुवचनम् ॥ २४ ॥

एलेत्यादि ।—लता लताकस्तूरी , लवनिका लवङ्ग , फल जातीफलम् , शीत कर्पूरम् , कोषी जातीकोष , कोल कक्कोलम् , द्विकमगुरु । एलादीना तुल्यांश , एषां मिलितानां एकभागापेक्षया दशभागपरिमिते खदिरक्काथ इत्यर्थ. । प्रोज्झित

लिप्त्वा यथाभिलषितां गुड़िकां वि[illegible]यात्
स्त्रीपुंसयोर्वदनसौरभवन्धुभूताम् ॥ ३५

खल्पखदिरवटिका—

खदिरस्य तुलां सम्यग् जलद्रोणे विपाचयेत्।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥
जातीकर्पूरपूगानि कक्कोलकफलानि च।
इत्येषा गुड़िका कार्य्या मुखसौभाग्यवर्द्धिनी।
दन्तौष्ठमुखरोगेषु जिह्वातात्वामयेषु च ॥ ३६ ॥

वृहत्खदिरवटिका—

गायत्रीसारतुलयेरिमवल्कलानाम्
सार्द्धं तुलायुगलमम्बु घटैश्चतुर्भिः।
निःक्वाथ्य पादमवशिष्टसुवस्त्रपूतम्
भूयः पचेदथ शनैर्मृदुपावकेन ॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषाम्
श्लक्ष्णं क्षिपेच्च कवड़यहभागिकाणाम्।
एलामृणालसितचन्दनचन्दनाम्बु-
श्यामातमालविकषाघनलोहयष्टी ॥

---

कतकपुट इति विकसितकेतकपत्रकृतपुटके खदिरक्वाथालोडितमेलादिचूर्णं निधाय पुटविधिना मनाक् विपाच्य ततः शीतीकृत्य प्रथमगृहीतकर्पूरमानवदपरञ्च तद् गृहीत्वा तेन पुटपक्वचूर्णपिण्डेन सह एकीकृत्य पिष्टैकत्र स्थाप्यम्। ततोऽभि-नवच्युतचूतनिर्यासेन हस्तौ लिप्त्वा यथेष्टं गुडिका कार्य्या इति ॥ ३५ ॥

खदिरस्येत्यादौ।—जाती जातीकोषः; पूगं पूगफलम्; फलानि जातीफलानि। एषां चूर्णानां प्रत्येकं पलम्, वक्ष्यमाणखदिरवटिकायां पलाशिकानीति दर्शनात्। अन्ये तु वक्ष्यमाणखदिरवटिकायां तुलात्रयनिष्पाद्यक्वाथे यावच्चूर्णमुक्तं तावतो मिलितचूर्णात् तृतीयभागेनैषां मिलितानां ग्राह्यम्, एतत्क्वाथस्य तुलैक-निष्पाद्यत्वादित्याहुः ॥ ३६ ॥

गायत्रीत्यादौ।—गायत्रीसारः खदिरसारः, तस्य तुलया सार्द्धम् इरिमेदवल्क-

लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटकट्फलानाम् ।
पद्माह्वलोध्रवटरोहयवासकानाम्
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥
कक्कोलजातिफलकोषलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशिकानि ।
शीतेऽवतार्य्य घनसारचतुःपलञ्च
क्षिप्ता कलायसदृशीर्वटिकाः प्रकुर्य्यात् ॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाद्विजतालुजातान् ।
कुर्य्युर्मुखे सुरभितामरुचिञ्च हन्युः
स्थैर्य्यं परं दशनगं वदनापटुत्वम् ॥ ३७ ॥

इति कण्ठगतरोग-चिकित्सा ।

इति मुखरोग-चिकित्सा ॥

---

ाना विट्खदिरत्वचां तुलायुगलमित्यर्थः । घटी द्रोणः । कवडग्रहभागिकाणा-
र्नति प्रत्येकं कर्षमानानाम् । अमृणालमुशीरम् , चन्दन रक्तचन्दनम् , अम्बु
ालकम, श्यामा प्रियङ्गुः, तमाल तमालपत्रम् ; विकषा मञ्जिष्ठा , घन मुस्तकम ;
हिमगरु , यष्टि यष्टिमधु, लज्जा वराहक्रान्ता , इभो नागकेशरम् , श्रीपुष्प पद्म-
कम् . कटङ्कटी दारुहरिद्रा ; पद्माह्वं पद्मकाष्ठम् ; सुरभि शल्लकी । वेष्टक
र्य्यात व्यातम्, रास्नेत्यन्ये, मूर्वेत्यपरे । वल्कलमिति पाठे वल्कल गुडत्वक ।
ातीफलकोष इति जातीफलं जातीकोषञ्च । घनसारं कर्पूरम् । अपटुत्वं
ासराहित्यम् ॥ ३७ ॥ इति कण्ठगतरोग-चिकित्सा

इति मुखरोग चिकित्सा-विवृति ।

## अथ कर्णरोग-चिकित्सा।

कपित्थमातुलुङ्गाम्ल-शृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये॥ १॥
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम्॥ २॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत्॥ ३॥
आर्द्रकसूर्य्यावर्त्त-शोभाञ्जनमूलकस्वरसाः।
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः॥ ४॥

---

मुखरोगेषु जिह्वाश्रयरोगा उक्ताः, जिह्वा चेन्द्रियाधिष्ठानमत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितमुच्यते। कपित्थेत्यादि।—सुश्रुतस्य। कपित्थस्य फलम्, एवं मातुलुङ्गस्यापि; अम्लेति विशेषणात् सुपक्वफलं ग्राह्यम्। वाशब्दस्य कपित्थादिभिरन्वयः। एते च त्रयो योगाः॥ १॥

शृङ्गवेरमित्यादि।—शृङ्गवेरस्वरसमाषकचतुष्टयम्, मधुनो माषकद्वयम्, सैन्धवरक्तिकामेकाम्, तैलम्, तिलजं माषकद्वयं गृहीत्वा सर्वमालोड्य कदुष्णं कृत्वा कर्णौ पूरयेत्॥ २॥

लशुनेत्यादि।—सुश्रुतस्य। सुरङ्गी रक्तशोभाञ्जनम्; कदली कदलीवागुडा, तस्याः स्वरसः। एते च लशुनस्वरसादयो व्यस्ताः समस्ता वा बोध्याः। पूर्वोक्तस्याप्यार्द्रकरसस्यापि पुनरुपादानं समस्तपक्षे सम्प्रयोजनमेव। युक्त्येति प्रथमं तैलेन कर्णौ म्रक्षयित्वा ततोऽवचूर्णनमिति युक्त्यर्थ इति केचित्। अन्ये तु शुक्तेन कर्णौ पूरयित्वा ततो समुद्रफेनेनावचूर्णनमिति युक्त्यर्थमाहुः; युक्तञ्चैतत्, यदाह वाग्भटः;—"शुक्तेन पूरयित्वा सिन्धुफेनेन वावचूर्णयेत्।" अतएव समुद्रफेनयुक्तेनेति पाठान्तरं सुश्रुते केचित् पठन्ति; तन्मते समुद्रफेनयुक्तेनेति पदं पूर्वोक्तशुक्तविशेषणम्, सुश्रुते हि एतस्मात् पूर्वं "कर्णौ कोष्णेन शुक्तेन पूरयेत् कर्णशूलिन" इत्युक्तम्। अस्मिन् पक्षे युक्त्येति अस्य मात्रया इत्यर्थः॥ ३॥

आर्द्रकेत्यादौ।—शोभाञ्जनं शोभाञ्जनमूलम्, मूलकन्तु मूलककन्दम्।

श्रीभाञ्जनकनिर्य्यासमिश्रितैलेन संयुतः।
अल्पोष्णः पूरणः कर्णे कर्णशूलोपशान्तये॥
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन च।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये॥ ५॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम्।
तैलाक्तमङ्गारपूर्णं विदध्यात् श्रवणोपरि॥
यत् तैलं च्यवते तस्मात् खल्लादङ्गारतापितात्।
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम्॥ ६॥
अर्कपत्रपुटे दग्धस्नुहीपत्रभवो रसः।
कदुष्णः पूरणादेव कर्णशूलनिवारणः॥ ७॥

दीपिकातैलम्—

महतः पञ्चमूलस्य काष्ठान्यष्टाङ्गुलानि च॥
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः॥
यत् तैलं च्यवते तेभ्यः सुखोष्णं सम्प्रयोजयेत्॥
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम्॥

---

कदलीकल्पीपयोज्याः। अतएव पृथगुक्ता इत्यत्र पृथगुणा इति पाठान्तरं केचित् पठन्ति॥ ४॥

श्रीभाञ्जनेत्यादि।—श्रीभाञ्जननिर्यासः श्रीभाञ्जनस्वरसः॥ ५॥

अश्वत्थेत्यादि।—सुश्रुतस्य। अश्वत्थपत्रैर्बहुभिस्तैलाक्तैः शूलिकां कृत्वा सरन्ध्रां कृत्वा तदुपरि ज्वलदङ्गारं विन्यस्य कर्णयोरुपरि धारयेत्, ततः पतिततैलेन कर्णपूरणम्। पित्तानुबन्धे तु सर्पिरिदं तैलस्थाने, विदेहसंवादात्॥ ६॥

अर्कपत्रेत्यादि।—स्नुहीपत्रमर्कपत्रेण वेष्टयित्वा तदनु स्नुहीपत्रं दग्ध्वा पीडयित्वा तद्रसेन कर्णयोः पूरणमित्युपदेशः॥ ७॥

महत इत्यादि।—सुश्रुतस्य। पञ्चमूलस्येति बिल्वादीनामन्यतमस्य। अष्टाङ्गुलानीति अग्रभागे अष्टाङ्गुलानि त्याज्यं क्षौमेण वेष्टनं कार्य्यमित्यर्थः। तेन तत्काष्ठमष्टाङ्गुलाधिकं कार्य्यम्। इन्द्रास्तु अष्टादशाङ्गुलमिति पञ्चमूलकाष्ठं गृहीत्वा

एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ८ ॥

अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनावतप्तम्।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनञ्च ॥

तीव्रशूलान्विते कर्णे सशब्दे क्लेदवाहिनि।
वस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम् ॥
वंशावलेखसंयुक्ते मूत्रे वाजाविके भिषक्।
तैलं पचेत् तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १० ॥

हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम्।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते ॥ ११ ॥

क्षारतैलम्—

बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम्।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥

---

तस्याग्रभागेऽष्टाङ्गुलं व्याप्य तैलाक्तं वस्त्रं बद्ध्वा प्रज्वाल्य ततो गलिततैलेन कर्णपूरणं कुर्वन्ति। स्वल्पवाग्भटे तु अष्टाङ्गुलादिपरिमाणं नोक्तम्, यथा—"महत्पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात्। तैलसिक्तात् प्रदीपाग्रात् स्नेहः सद्योरुजापहः" इति ॥ ८ ॥

अर्कस्येत्यादौ।—परिणामपीतमिति। कालप्रकर्षेण पाकवशात् पीतवर्णं शिखिना वह्निना अवतप्तं स्विन्नमित्यर्थः। तोयमिति रसः। बहुवेदनमिति नानाविधतोदभेदादिवेदनासहितम्। वस्तेत्यादि।—सुश्रुतस्य। वंशावलेखो वंशावलेखनी, तस्याः कल्कम्, मूत्रे चाजाविक इति आजे वा आविके वा मूत्रे पचेदित्यर्थः। यदाह—"वंशावलेखकल्केन मूत्र आजे तथाविके। पचेत् तैलं रुजाशान्त्यै कर्णयोः पूरणं भिषक्" इति विदेहवचनात् घृतमप्यनेन विधिना पक्तव्यम् ॥ ९ । १० ॥

हिङ्ग्वित्यादौ।—साध्यमिति जलं चतुर्गुणेन ॥ ११ ॥

बालकेत्यादौ।—मधुशुक्तं चतुर्गुणमिति मधूपलक्षितं शुक्तं मधुशुक्तम्। एतैः

…ं यवक्षारः सर्जिकोद्भिदसैन्धवम् ।
…विड़ं मुस्तं मधुशुक्तं चतुर्गुणम् ॥
…रसश्चैव कदल्या रस एव च ।
…भिर्विपक्वन्तं कर्णशूलहरं परम् ॥
…र्यं कर्णनादश्च पूयास्रावश्च दारुणः ।
…ादश्च तैलस्य क्रिमयः कर्णसंश्रिताः ॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥
मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम् ।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ १२ ॥
कर्णनादे कर्णक्ष्वेड़े कटुतैलेन पूरणम् ।
नादवाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ॥ १३ ॥

---

…स्य तण्डुलतोयत इत्युक्तस्य मधुरहितशुक्तस्य निषेधः । ग्रहणन्तु शुक्तस्वादि मधौ …ाद्य इत्यादिनोक्तस्य, तथा जम्बीरस्य फलमित्यादिना अनन्तरमेव वक्ष्यमाणस्य वा …ेयम् । एतदेव मधुप्रधानं शुक्तमित्यादिना वक्ष्यति । अन्ये तु मध्विति छेदः, …तेन मधुनः कल्कत्वम्, शुक्तस्य चतुर्गुणत्वञ्चेत्यर्थः । अपरे तु मधु चतुर्गुणं शुक्तञ्च चतुर्गुणमिति व्याचक्षते । एतन्मतद्वयमपि नोपपद्यते, समानतन्त्रे जतूकर्णे न मधुनोऽप्यपाठत्वात् । मातुलुङ्ग-कदलीवागुरास्वरसौ तु तैलसमौ, जतूकर्णसंवादात्, अतः षड्गुणः पाकः । अन्ये तु वाग्भटसंवादात् मातुलुङ्गकदलीस्वरसयोः प्रत्येकं चतुर्गुणत्वमाहुः, अतो हि मधुशुक्तं चतुर्गुणं मातुलुङ्गरसञ्च तद्वत् कदलीरसश्चेत्युक्तम् । उभयमपि प्रमाणं स्मृतिद्वैधवत् । व्यवहारस्तु पूर्व्वेणैव । जम्बीरस्येति जम्बीरफलरसस्य द्वात्रिंशत्पलानि, पिप्पलीमूलस्य चत्वारि, मधुनोऽष्टौ पलानि इति इद्ववैद्योपदेशात् मानक्रमः ॥ १२ ॥

कर्णनाद इत्यादौ ।—कटुतैलं सार्षपतैलम् ॥ १३ ॥

अपामार्गक्षारतैलम्—

मार्गक्षारजले तत्कृतकल्केन साधितं तिलजम् ।
अपहरति कर्णनादं वाधिर्य्यञ्चापि पूरणतः ॥ १४ ॥

सर्जिकाक्षारतैलम् ।

सर्जिका मूलकं शुष्कं हिङ्गु कृष्णा महौषधम् ।
शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम् ।
प्रणादशूलवाधिर्य्यं स्रावञ्चाशु व्यपोहति ॥ १५ ॥

दशमूलीतैलम्—

दशमूलीकषायेण तैलप्रस्थं विपाचयेत् ।
एतत् कल्कं प्रदायैव वाधिर्य्ये परमौषधम् ॥ १६ ॥

विल्वतैलम्—

फलं विल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत् ।
साजाक्षीरं तद्धि हरेद्वाधिर्य्यं कर्णपूरणे ॥ १७ ॥
एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः ।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि ॥ १८ ॥

---

मार्गेत्यादि ।—मार्गोऽपामार्गः । अपामार्गक्षारपलानि षोडश, द्रवश्चतुर्गुणात् जलस्य चतुर्विंशतिशरावाः, एकविंशतिवारान् परिस्राव्य अतः क्षारजलात् षोड़श शरावा ग्राह्याः । तत्कृतकल्केनेति अपामार्गकृतक्षारकल्केन । स च तैलसम-भयाज्जलेनालोड्य तैले देयः, यदा तु पिण्डीभूतात् कल्कं तैलं सम्यक् पृथग्भूत दृश्यते, तदैव तैलं पात्रान्तरे कृत्वा ग्राह्यम्, न तु कल्को गालनीयः, क्षारमिश्रित भयात् । अन्ये तु समासान्तर्भूतमपि मार्गपदं तच्छब्देन समाकृष्य अपामार्गमूलस्यैव कल्कमाहुः ॥ १४—१६ ॥

फलमित्यादौ । मूत्रेणेत्यस्य पिष्ट्वेत्यनेन तथा पाचयेदित्यनेन सम्बन्धः । पाचये-दित्यनेनैव वा, तदुक्तं तन्त्रान्तरे "विल्वगर्भं पचेत् तैलं गोमूत्राजपयोऽन्वितम् । वाधिर्य्यं पूरयेत् तेन कर्णौ सकफवातजौ" इति । अजाक्षीरं तैलसमं गोमूत्र त्रिगुणं चतुर्गुणं वेत्याहुः ॥ १७ ॥

एष एवेति ।—विधिर्वाधिर्य्यहरः । उभयोरपि वाधिर्य्यकर्णनादयोः ॥ १८ ॥

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ १९ ॥
मालतिदलरसमधुना पूरितमथवा गवां मूत्रैः ।
दूरेण परित्यज्यते च श्रवणयुगलं पूतिरोगेण ।
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित् ॥ २० ॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ।
मधुना संयुतः साधुः कर्णस्रावे प्रशस्यते ॥ २१ ॥

जम्ब्वाद्यं तैलम्—

जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सार्द्रम् ।
क्षुत्त्वा रसं तन्मधुना विमिश्रं स्रावापहं सम्प्रवदन्ति तज्ज्ञाः ॥
एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ २२ ॥

---

कर्णस्रावचिकित्सामाह चूर्णमित्यादि ।—सुश्रुतस्य । पञ्चकषायाणां पञ्चवल्कलानां चूर्णम् । उक्तं हि वाग्भटे—"पञ्चवल्कलचूर्णञ्च कपित्थस्वरसान्वितम् । मधुना योजितं हन्यात् कर्णस्रावं प्रपूरयेत्" इति । अन्ये तु पञ्चकषायशब्देन सौश्रुतमेव कर्णस्रावोक्तं तिन्दुकादिपञ्चकमुच्यते, यथा—"तिन्दुकान्यभया लोध्रं समङ्गामलकं तथा । पूरणञ्चात्र पथ्यं स्यात् कपित्थरसयोजितम्" इति । न च तयोरपि वचनयोः सौश्रुतत्वेन पौनरुक्त्यमिति वाच्यं, मधुयोगात् योगद्वैविध्यादित्याहुः ॥ १९ ॥

मालतिदलेति छन्दोऽनुरोधात् ह्रस्वत्वम् ॥ २० ॥

सर्जेत्यादि ।—सुश्रुतस्य । सर्जः शालः, कार्पासी वनकार्पासी, ग्रामकार्पासी वा । अत्र कार्पासीफलरसमपेक्ष्य अर्द्धं मधु, मध्वपेक्षया च सर्जत्वक्चूर्णमर्द्धमिति वृद्धोपदेशः । साध्विति कार्पासीफलरसविशेषणं, तेन कीटाद्यजग्धकार्पासीफलरसो ग्राह्य इति ॥ २१ ॥

जम्ब्वाम्रेत्यादौ ।—सार्द्रमिति समन्तादार्द्रमित्यर्थः । क्षुत्त्वेति संक्षुद्येत्यर्थः । तैरिति जम्ब्वाम्रपत्रादिभिः कल्करूपैरित्यर्थः ; जलञ्चात्रार्थाच्चतुर्गुणम् । अन्ये तु जम्ब्वाम्रपत्रादिरसैरित्यर्थं व्याहुः । एतन्मते त्वकल्क एवायं पाक इति ; पाकी-

पुटपाकविधिस्विन्नहस्तिविड्जातगोण्डकः ।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ २३ ॥

शम्बूकाद्यं तैलम्—

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ २४ ॥

धुस्तूराद्यं तैलम्—

निशागन्धपले पक्वं कटुतैलं पलाष्टकम् ।
धुस्तूरपत्रजरसे कर्णनाड़ीजिदुत्तमम् ॥ २५ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ।
नाड़ीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् ॥
विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ॥ २६ ॥

---

नरकालश्च मधुप्रदीप इत्याहुः । निम्बबीजकरञ्जबीजभवं तैलं सार्षपतैलञ्च संमिश्य पक्तव्यम् । पृथगेव तैलत्रयं पक्तव्यमित्यन्ये ॥ २२ ॥

पुटपाकेत्यादौ ।—हस्तिविड्जातगोण्डकी हस्तिलण्डीभूतच्छत्रकः । रस इत्यत्र तस्येति शेषः ; तेन हस्तिलण्डीभूतच्छत्रकरस इत्यर्थः । अन्ये तु कोरण्ड इति पठन्ति । अपरे तु कोरण्टकरस इति समस्तमेव पठन्ति 'वेशवारपयोदधि । माष धावनतीयाभम्' इतिवत् ॥ १३ ॥

शम्बूकस्येत्यादि ।—शम्बूकमांसस्य कल्कः, जलं चतुर्गुणमिति ॥ २४ ॥

निशेत्यादि ।—निशा हरिद्रा । निशागन्धयोर्मिलित्वा पलमेकं, तथा धुस्तूरपत्रस्वरसश्च तैलसमः । उक्तं हि 'गन्धकशिलारजनीभवेन सुर्य्यांशिकेन कटुतैलपलाष्टकञ्च । धुस्तूरपत्ररसतुल्यमिदन्तु सिद्धं नाड़ीं जयेच्चिरभवामपि कर्णजाताम्' इति । कटुतैलस्थाने केचित् कटुतैलं पठन्ति ॥ २५ ॥

अथेत्यादि ।—सुश्रुतस्य । क्रियां प्राप्तामिति दोषानुरूपाम् । नाड़ीस्वे

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुड़: ।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुत: ॥ २७ ॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ।
वरुणार्ककपित्थाम्रजम्बूपल्लवसाधितम् ॥
पूतिकर्णापहं तैलं जातीपत्ररसेन वा ॥
सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसं तथा ।
लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम् ।
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ॥
क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम् ।
वार्त्ताकुधूमश्च हित: सार्षपस्नेह एव च ॥ २८ ॥
हलिसूर्य्यावर्त्तव्योषस्वरसेनातिपूरिते ।
कर्णे पतन्ति सहसा सर्वास्तु क्रिमिजातय: ॥ २९ ॥
नीलवृक्षारसस्तैलसिन्धुकाञ्जिकसंयुत: ।
कदुष्ण: पूरणात् कर्णे नि:शेषक्रिमिपातन: ।
धूपन: कर्णदौर्गन्ध्ये गुग्गुलु: श्रेष्ठ उच्यते ॥ ३० ॥

---

द्यादौ स्नेहस्वेद इति पाठे कफकृतायामपि कर्णनाड्यां स्नेहो वमनाङ्गतया बाच्य. ॥ २६ ॥

निर्गुण्डीत्यादि ।—निर्गुण्डीस्वरसतिलतैलयो: प्रत्येकं माषकचतुष्टय, गृह धूमचूर्णगुड़योस्तु प्रत्येकन्तु माषकद्वय, मधुनस्तु माषकद्वयं, सैन्धवस्य रक्तिपञ्चकमिति व्यवहरन्ति ॥ २७ ॥

वरुणेत्यादि ।—वरुणादिपल्लवानां कल्क: । सूर्य्यावर्त्तकादिषु त्रिषु योगेषु व्योषचूर्णं प्रक्षेप्यम् । वार्त्ताकुधूम इति परिणतवार्त्ताकुफलचूर्णम् अङ्गारसम्पुटे दत्त्वा नलिकया धूमो देय: । वार्त्ताकुबीजेन धूम: कार्य्य इति मध्यवाग्भट ॥ २८ ॥

हलीत्यादि ।—हली लाङ्गलीयामूलं हलीसूर्य्यावर्त्तयोर्व्योषयुक्तरसेन कर्णपूरणमित्यर्थ: ॥ २९ । ३० ॥

राजवृक्षादितोयेन सुरसादिजलेन वा।
कर्णप्रक्षालनं कुर्याच्चूर्णैरेतैः प्रपूरणम्॥ २१॥
स्पृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्।
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके॥ २२॥

कुष्ठाद्यं तैलम्—

कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम्॥ २३॥
विद्रधौ चापि कुर्वीत विद्रध्युक्तं हि भेषजम्।
शतावरी वाजिगन्धा पयस्यैरण्डबीजकैः।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम्॥ २४॥
गुञ्जाचूर्णयुते जाते माहिषे क्षीर उद्धृतम्।
नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम्॥ २५॥
विषगर्भं तिक्ततुम्बी-तैलमष्टगुणे खरात्।
मूत्रे पक्वं तदभ्यङ्गात् कर्णपालिविवर्द्धनम्॥ २६॥

जीवनीयाद्यं तैलम्—

कल्केन जीवनीयेन तैलं पयसि साधितम्।

---

राजवृक्षेति। राजवृक्षादिगणः आरग्वधादिगणः। सुरसादिः सुरसादिगणः। चूर्णैरेतैरिति आरग्वधादिसुरसादिजैः॥ २१॥

कुष्ठेत्यादि।—कुष्ठादीनां कल्कम्॥ २१। २३॥

विद्रध्युक्तमित्यत्र विद्रध्युक्तमिति श्रीकण्ठः। शतावरीत्यादि।—सुश्रुतस्य। पयस्या क्षीरकाकोली, विदारीगन्धेत्यन्ये। एरण्डस्य बीजकं, न तु बीजकः पीतशालः, तस्य वृक्षत्वादिति। बीजकैरित्यत्र जीरकैरित्येव पाठ इति निश्चलः॥ २४॥

गुञ्जेत्यादि।—गुञ्जाचूर्णं क्षीरापेक्षया अष्टमांशमित्याहुः। जात इत्यत्र दधीति शेषः। अष्टमांशगुञ्जाचूर्णयुते माहिषीक्षीरे जातस्य दध्नो नवनीतमित्यर्थः॥ २५॥

विषगर्भमित्यादि।—विषस्य कल्कम्। तिक्ततुम्बीबीजभवं तैलं तिक्ततुम्बीतैलम्। खरस्य गर्दभस्य मूत्रं खरमूत्रं॥ २६॥

पमांसक्काथेन पालीपोषणवर्द्धनम् ॥ ३७ ॥
हिषनवनीतयुक्तं सप्ताहं धान्यराशिपरिवासितम्।
मूषलिकन्दचूर्णम्हितकरं कर्णपालीनाम् ॥ ३८ ॥
र्णस्य दुर्व्यधे भूते संरम्भो वेदना भवेत्।
तत्र दुर्व्यधरोहार्थं लेपो मध्वाज्यसंयुतैः।
मधुकयवमञ्जिष्ठारुवुमूलैः समन्ततः ॥ ३९ ॥
अनेकधा तु छिन्नस्य सन्धिः कर्णस्य वै भिषक्।
यो यथा विनिविष्टः स्यात् तं तथा विनियोजयेत् ॥
धान्याम्लोष्णोदकाभ्यान्तु सेको वातेन दूषिते।
रक्तपित्तेन पयसा श्लेष्मणा तूष्णवारिणा।
ततः सीव्य स्थिरं कुर्य्यात् सन्धिं बन्धेन वा पुनः ॥

---

कल्केनेत्यादि।—वाग्भटस्य। जीवनीयेनेति जीवनीयदशकेन अष्टवर्गेण इत्यन्ये। दुग्धमत्र स्नेहसमम्, आनूपमांसक्काथस्तु त्रिगुणः। पोषणं परिणाहेन वर्द्धनम्, अन्ये तु दैर्घ्येण ॥ ३७ ॥

माहिषेत्यादौ।—सप्ताहं धान्यराशौ परिवस्तुं शीलमस्येति तत् तथा। नवमूषलीकन्दचूर्णमिति तत्त्वतानीतमक्कतालमूलीकन्दचूर्णं पल २, माहिषनवनीत-पल १, समर्द्य सप्ताहं धान्यराशौ स्थाप्यमित्यर्थः ॥ ३८ ॥

दुर्विद्धकर्णचिकित्सामाह कर्णस्येत्यादि।—रुवुमूलमेरण्डमूलम्। उक्तं हि तन्त्रान्तरे—"यष्टीरण्डजटासर्पिर्मधुकमधुसंयुतम्। तिलमाषयवचूर्णं वा केवलं रोपणं हितम्" इति। अतएव रुवुमूलस्थाने रुवुतैलमित्युपपाठः ॥ ३९ ॥

छिन्नकर्णपालिसन्धानार्थं विधिमाह अनेकधेत्यादि।—कर्णपालिच्छेदो हि हेतुद्वयेन भवति; उक्तं हि सुश्रुते—"एवं विवर्द्धितः कर्णश्छिद्यते तद्द्विधा नृणाम्। दोषतश्चाभिघाताद्वा" इति। दोषत इति वातादिकोपात्। छिन्नस्य कर्णस्येति छिन्नकर्णयोः कर्णलतिकयोः। अथ स्थूलह्रस्वदीर्घहस्तुतिर्य्यगादिभेदेन अनेकविधत्वात् सन्धिरपि अनेकधा भवति, तत्र सन्धिर्यथा येन प्रकारेण विनिविष्टः सुसम्बद्धः स्यात् तं सन्धिं तथा तेन प्रकारेण योजयेत्, सन्धानार्थं योजयेदित्यर्थः।

मध्वाज्येन ततोऽभ्यज्य पिचुना सन्धिवेष्टकम्।
कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाथवा ॥ ४० ॥

इति कर्णरोग-चिकित्सा।

---

## अथ नासारोग-चिकित्सा।

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी।
सर्पिर्गुड़ः षड़ङ्गश्च यूषः पीनसशान्तये ॥ १ ॥

व्योषादिचूर्णम्—

व्योषचित्रकतालीश-तिन्तिड़ी चाम्लवेतसम्।

---

तत्र सुश्रुते पञ्चदश छिन्नकर्णबन्धप्रकारा आकृतिभेदैर्नामतः ते च तत्रैव कुब्धघर्मा विश्रानीयाध्याये चानुसन्धेयाः। तत्र दोषानुरूपं प्रक्षालनमाह धान्याम्लेत्यादि।—पयसेति दुग्धेन, शीतोदकेनेति वा। उक्तं हि सुश्रुते—"पित्तदुष्टे शीतोदकपयोभ्याम्" इति। तत इत्यादि।—तत इति सन्धिद्वयसंयोगानन्तरम्। सीव्यति सीवु तन्तुसन्तान इत्यस्य रूपं छान्दसत्वात्। सीव्येत्यत्र क्षौमसूत्रेणेति शेषः। सन्धि कर्णपालिद्वयसन्धिं सीव्य स्थिरं कुर्य्यात्, तथा बन्धेन स्थिरं कुर्य्यात्। सन्धिस्थिरीकरणानन्तरं मधुघृताभ्यां सन्धिमभ्यज्य पिचुना तूलकपिण्डेन सन्धिवेष्टनं कुर्य्यात्। सन्धिवेष्टनानन्तरञ्च सूत्रेणातिगाढं नातिशिथिलञ्च बन्धनं बोध्यम्, वाग्भटसंवादात्। कपाली मृत्पात्रकपालः ॥ ४० ॥

इति कर्णरोगचिकित्सा-विवृतिः ॥

---

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते। पञ्चमूलीत्यादि।—पञ्चमूली स्वल्पेति निश्चलः। महतीत्यन्ये। चित्रकहरीतकी अत्रैवाधिकारे वाच्या। सर्पिर्गुड़-षडङ्गयूषौ यक्ष्मोक्तौ। इदन्तु क्रियासूत्रं पीनसे बोध्यम् ॥ १ ॥

मरिचाजाजितिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥
व्योषादिकं चूर्णमिदं पुराणगुड़संयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ २ ॥

पाठादितैलम्—

पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्यगपीनसे ॥ ३ ॥

व्याघ्रीतैलम्—

व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासागदं जयेत् ॥ ४ ॥
त्रिकटुविडङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ५ ॥
कलिङ्गहिङ्गुमरिच-लाक्षासुरसकट्फलैः ।
कुष्ठोग्राशिग्रुजन्तुघ्नै रवपीडः प्रशस्यते ॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत् ।
अपीनसे पूतिनस्ये शमनं कीर्त्तितं परम् ॥ ६ ॥

---

व्योषादिचूर्णे—व्योषस्त्रिकटु, तिन्तिडी महार्द्रकम्, अजाजी जीरकम्, एलात्वक्पत्रपादिकमिति एलात्वकपत्रादि प्रत्येकमेकभागापेक्षया पादिकम्, गुडन्तु चूर्णसमांशात् नियतं। किन्तु "तालीशचित्रकव्योषतिन्तिडीकाम्लवेतसम्। सचव्याजाजिपलमेलात्वकपत्रपादिकम्। जीर्णगुडतुलार्द्धेन पाकेन वटकीकृतम्। पीनसश्वासकासघ्नं रुचिस्वरकरं परम्" इति वाग्भटे सार्द्धनवविंशतिपलचूर्णे तुलार्द्धोक्तत्वात् गुडस्य सर्वसमत्वं नोपपद्यते इति ॥ २ ॥

पाठेत्यादि।—पाठादीनां कल्को जलं चतुर्गुणमिति ॥ ३ ॥

व्याघ्रीत्यादौ।—सुरसः सिन्धुवारः, पर्णास इत्यन्ये ॥ ४ ॥

त्रिकट्वित्यादि।—अत्रापि सुरसः सिन्धुवारः, पर्णास इत्यन्ये। अत्र शिग्रुवीजं वीजं ग्राह्यम्, तथा बृहतीफलस्यापि वीजम्। उक्तं हि वाग्भटे "शिग्रुसिंही-निकुम्भानां वीजे सव्योषसैन्धवे। सुरेवसुरसैस्तैलं मूत्रसिद्धन्तु नावनम्" इति ॥५॥

कलिङ्गेत्यादौ।—सुरसः पर्णासः, उग्रा वचा, क्रिमिघ्नो विडङ्गः। अत्रापि

नासापाके पित्तहरं विधानम्
कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च।
हरेद्रक्तं चीरिवृक्षत्वचश्च
योज्याः सेके सघृताश्च प्रदेहाः।
पूयास्रक्तपित्तघ्नाः कषाया नावनानि च ॥ ७ ॥
शुण्ठीकुष्ठकणाविल्व-द्राक्षाकल्ककषायवत्।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ८ ॥
दीप्ते रोगे पैत्तिके संविधानम्
सर्वं कुर्य्यान्मधुरं शीतलञ्च।
नासानाहे स्नेहपानं प्रधानम्
स्निग्धा धूमा मूर्ध्नि वस्तिश्च नित्यम् ॥ ९ ॥
वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम्।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥

---

वक्ष्यमाणमूत्रसंयुक्तैरित्यस्य सम्बन्धं कृत्वा अवपीडमपि मूत्रेण पिष्ट्वा कुर्य्यात्। तैलपाके तु गोमूत्रमेव चतुर्गुणमिति ॥ ६ ॥

नासापाके पित्तहर विधानमित्यत्र पित्तहृत सन्धारणमिति पाठो रत्नप्रभासम्मतः। हरेद्रक्तमित्यत्र हृत्वा रक्तमित्यपि तथा। वाह्यमाभ्यन्तरञ्चेति वाह्यं लेपादि आभ्यन्तरं स्नेहपानादि। चीरिवृक्षा वटोडुम्बरादयः पञ्च ॥ ७ ॥

शुण्ठीत्यादि।—वाग्भटस्य विल्वं विल्वस्य मूलम्। क्षवथुपुटनुदित्येव पाठो वाग्भटे तु दृश्यते, टीकायाञ्चैवमेवोक्तम्; अस्यार्थमवबुद्ध्यैव क्षवथुरुक्प्रणुदिति पाठमज्ञाः कुर्वन्ति। क्षवथुः क्षवः, पटोऽपि नासारोगविशेषः। उक्तं हि वाग्भटे—"पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत। कफं सशुष्कपुटतां प्राप्नोति पुटकं हि तत्" इति ॥ ८ ॥

दीप्त इत्यादि।—सुश्रुतस्य। दीप्ते रोगे पैत्तिकसन्धानमिति पाठः सुश्रुते दृश्यते ॥ ९ ॥

वातिक इत्यादि।—सुश्रुतस्य। पञ्चभिर्लवणैरिति कल्करूपैः सिद्धं सर्पि

नस्यादिषु विधिं कृत्स्नमवेचेतार्दितेरितम्।
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम्।
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥ १० ॥
कफजे सर्पिषा स्निग्धं तिलमाषविपक्कया।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥ ११ ॥
दार्व्वीङ्गुदीनिकुम्भैश्च किणिह्या सुरसेन च।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ १२ ॥
अथवा सघृतान् शक्तून् कृत्वा मल्लकसम्पुटे।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १३ ॥

---

पिबेत्, यथाक्रममिति स्नेहो यौगिकाध्यायोक्तविध्यनतिक्रमेण। प्रथमेन गणेनेति विदारीगन्धादिगणेन वा क्वाथकल्करूपेण सिद्धं सर्पिः पिबेदित्यर्थः। तथा नस्यादि कर्म्मसु कर्त्तव्येषु अर्दितोक्तविधिम् अवेचेत जानीयात्। वाग्भटेऽप्युक्तं—"पिबेद्‌ वातप्रतिश्याये सर्पिर्वातप्रसाधितम्। पटुपञ्चकसिद्धं वा विदार्य्यादिगणेन वा। स्वेदनस्यादिकं कुर्य्यात् चिकित्सामार्दितेरिताम्" इति। अन्ये त्वाहुः प्रथमेन गणेन सिद्धं सर्पिर्नस्यापनासशिरोवस्त्यादिषु योज्यमिति, एतत्तु वाग्भटविरोधादुपेक्षणीयमिति। पित्तेत्यादि।—सुश्रुतस्य। पित्तरक्तोत्थयोः प्रतिश्याययोरिति शेषः। मधुरकैः शृतमिति काकोल्यादिभिर्विपक्कम्। शीतलानिति न्यग्रोधाद्युत्पलादिगणाः शीतलास्तैः कृतान् ॥ १० ॥

कफज इत्यादौ।—तिलमाषौ कल्करूपौ; अत्र मदनफलमपि बोध्यं, वमनयोगात्। कफघ्नं क्रममिति कफहरद्रव्यकृतपेयादिक्रमम् ॥ ११ ॥

दार्व्वीत्यादि।—सुश्रुतस्य। दार्व्वी दारुहरिद्रा; इङ्गुदी पुत्रजीवकः। निकुम्भी दन्ती तस्या बीजं मूलं वा। किणिही कटभीबीजम्, अपामार्ग इत्यन्ये। सुरसेनेत्यत्र सरलेनेति सुश्रुते पठ्यते, तन्मते सरलं सरलकाष्ठमेव। सुरसः पर्णासः, निर्गुण्डी वा। यथाविधीति वैरेचकधूमवर्त्तिविधानक्रमेण ॥ १२ ॥

अथवेत्यादौ।—यवशक्तून् सुघृतान् शरावस्थिताङ्गारे दत्त्वा तदुपरि कृतछिद्रेण शरावान्तरेण पिधाय तस्मिन्नेव छिद्रे नलिकां दत्त्वा धूमं पिबेदित्यर्थः ॥ १३ ॥

यः पिबति शयनकाले शयनारूढ़ः सुशीतलं भूरि ।
सलिलं पीनसयुक्तः स मुच्यते तेन रोगेण ॥ १४ ॥
पुटपक्वं जयापत्रं सिन्धुतैलसमन्वितम् ।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ १५ ॥
सोषणं गुडसंयुक्तं स्निग्धदध्यम्लभोजनम् ।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥ १६ ॥
प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः ।
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ।
शिरसोऽभ्यञ्जनस्वेद-नस्यकट्वम्लभोजनैः ।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥ १७ ॥
भक्षयति भुक्तमात्रे सलवणमुत्स्विन्नमाषमत्युष्णम् ।
स जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥
पिप्पल्यः शिग्रुबीजानि विड़ङ्गमरिचानि च ।
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ १८ ॥
समूत्रपिष्टास्तद्दिष्टाः क्रियाः क्रिमिषु योजयेत् ।
नावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान् ।
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥ १९ ॥

---

य पिबतीत्यादि ।—योगोऽयं वातपित्तोत्तरे प्रतिश्याये बोध्य ॥ १४ ॥

पुटेत्यादौ ।—जया जयन्ती ॥ १५ ॥

सोषणमित्यादि ।—ऊषणं मरिचम् । योगोऽयं वातिके इत्याहुः ॥ १६ ॥

प्रतिश्याय इत्यादि ।—चिञ्चा तिन्तिडी तस्या छद पत्रम । यूष क्वाथ एव हिङ्गुमरिचचूर्णं मात्रानुरूप प्रक्षिपन्ति वृद्धा । शिरस इत्यादौ ।—यथास्वमिति पक्षे शिरोऽभ्यङ्गस्वेदनस्य घृतपानादिशेषपक्षे स्वेदस्य ॥ १७ ॥

भक्षयतीत्यादि ।—योगोऽयं वातोत्तरे बोध्य ॥ १८ ॥

समूत्रेत्यादि ।—सुश्रुतस्य । समूत्र यथा स्यात् तथा पिष्टा कर्मधारयो वा तद्दिष्टा इति सुश्रुतेऽनन्तरोक्ताः सर्वाः क्रिया. मूत्रपिष्टा प्रतिश्याये क्रिमिसम्भव

करवीराद्यं तैलम्—

रक्तकरवीरपुष्पं जात्यश्मनमल्लिकायाश्च।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम्॥ २०॥

शिखरितैलम्—

गृहधूमकणादारु-क्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम्॥ २१॥

चित्रकतैलम्—

चित्रकचविकादीप्यक-निदिग्धिकाकरञ्जलवणार्कैः।
गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम्॥ २२॥

चित्रकहरीतकी—

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात्॥
शतं पचेद्घनीभूते पलं द्वादशकं क्षिपेत्।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि॥
प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्द्रितः।

---

सति योजयेदित्यर्थः। अन्य तु क्रिमिषु याः क्रिया उक्तास्ताश्च सर्वा मूत्रपिष्टा योजयेदित्याह। क्रिमिघ्नानि भेषजानीति सुरसादिगणप्रभृतीनि। शेषाणान्तु विकाराणामिति नासार्बुदनासार्शःप्रभृतीनाम्। यथास्वमिति यत् यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः॥ १९॥

रक्तकरवीरेत्यादौ।—जाती मालती तस्या अपि पुष्पम्, अश्मनमल्लिका छाफरमल्लिका। जात्यश्मनेति सहिताऽनिर्देशोऽसिद्धविधेरनित्यत्वात्। एतैः समभागैः कल्करूपैः। पाकार्थन्तु जलं चतुर्गुणमिति ज्ञेयम्॥ २०॥

गृहधूमेत्यादौ।—क्षारो यवक्षारः नक्ताह्वः करञ्जबीजं शिखरिबीजमपामार्गबीजतण्डुलम्। अत्रापि जलं चतुर्गुणं देयम्॥ २१॥

चित्रकेत्यादौ।—दीप्यकं यमानी; लवणं सैन्धवम्; अर्कमर्कक्षीरम्॥ २२॥

चित्रकहरीतक्यां चित्रकस्य पञ्चाशत पलानि जलशरावाः पञ्चाशत् स्याप्यास्तु

हन्त्यर्य्येऽम्ले: क्षयं कासं पीनसं दुस्तरं क्रिमीन्।
गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम् ॥ २३ ॥

इति नासारोग-चिकित्सा ॥

---

## अथ नेत्ररोग-चिकित्सा।

लङ्घनालेपनस्वेद-शिराव्यधविरेचनैः।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ १ ॥
श्रीवासातिविषालोध्रैश्चूर्णितैरल्पसैन्धवैः।
अव्यक्तोऽक्षिगदे कार्य्यं प्रोतस्थैर्गुण्ठनं बहिः ॥ २ ॥

---

सार्द्धद्वादश शरावाः एवं चित्रकस्य क्वाथस्य पलशतं भवति। आमलकीस्वरसस्यापि पलशतं स्वरसाभावे स्वयमेव स्वरसविधिः। एवं गुडूच्याः मिलितदशमूलस्य च क्वाथविधिः। व्योषत्रिजातयोर्मिलित्वा पलद्वादश। पलार्द्धमिति चारादित्यनेन सम्बध्यते। अपरेऽहनीति परेण सम्बध्यते ॥ २३ ॥

इति नासारोगचिकित्साविवृतिः।

---

उक्तसंवादादेव नेत्ररोगचिकित्सामाह--अत्राभिष्यन्दस्य निखिलनेत्ररोगमूलत्वेन प्राधान्यात् प्रथमतोऽभिष्यन्दप्रतिकारमाह लङ्घनेत्यादि। लङ्घनमत्र लघ्वशनमुपवासो वा उक्तं हि "प्रागेवाद्यामये भुक्तं विरावमगुरुस्थितम्। उपवासस्तथा वा स्यात्" इति। किन्तु उपवासो वातजादन्यत्र विधेयः वाग्भटसंवादात् स्वेदोऽपि पित्तजं विना नयनोपान्ते मृदुर्बोध्यः। यदुक्तं "हृदय वृषणौ दृष्टि स्वेदयेत मृदु वा नवा" इति। शिराव्यधो रक्तदुष्टौ सत्यां शिराव्यधनम्। विरेचनं शिरसः कायस्य च। शिरोविरेचनन्तु नवे, कायविरेचनञ्च जीर्णे श्रेयः आदिशब्देन तर्पणपुटपाकक्वाथादिपरिग्रहः ॥ १ ॥

श्रीवासेत्यादि।—श्रीवासो देवदारु। अल्पसैन्धवैरिति एकभागापेक्षया चतु

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ३ ॥
स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।
लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट् ।
अञ्जनं पूरणं क्वाथपानमामे न शस्यते ॥ ४ ॥
धात्रीफलनिर्य्यासो नवटक्कोपं निहन्ति पूरणेन ।
सक्षौद्रसैन्धवो वा शिग्रुद्भवपत्ररससेकः ॥ ५ ॥
दार्वीरसाञ्जनञ्चापि स्तन्यदुग्धं प्रपूरणम् ।
निहन्ति शीघ्रं दाहाश्रुवेदनाः स्यन्दसम्भवाः ॥ ६ ॥
करवीरतरुणकिशलयच्छेदोद्भवबहुलसलिलसम्पूर्णम् ।
नयनयुगं भवति दृढं सहसैव तत्क्षणात् कुपितम् ॥ ७ ॥

---

भागल सैन्धवस्येत्याह.। अव्यक्त इति पूर्वरूपे। शीतस्यैरिति कर्पटबन्धै गण्डन‌म् अवचूर्णनम् एतच्च मुकुलिते चक्षुःपत्र न तु विस्तारित ॥ २ ॥

अक्षिकुक्षिभवा इत्यादि।—कुक्षिभवा अतीसारविलम्बिकादय । पञ्चरात्रमत्युपलक्षण तेन त्र्यहमपि बोध्यम। यदाह विदेह "उपवासस्त्र्यह वा स्यात" इति। अयञ्च मतभेदो दोषप्रकोपतारतम्यान्न विरोधमावहति ॥ ३ ॥

स्वेद इत्यादौ।—सेको वासकादिक्वाथादिना चक्षुःसेचनमाश्च्योतनशब्दवाच्य न तु पूरण तस्यामे निषेधात्। आश्च्योतन पुनरामे क्रियत एव यदुक्त सर्वषामक्षिरोगाणामादावाश्च्योतन हितम" इति। दिनचतुष्टयमिति दिनचतुष्टयस्वरूपत एव ज्वराष्टाहवदिति। आमे नेत्ररोगे अञ्जनादिक न कार्य्यमित्याह अञ्जनमित्यादि।—पूरणमाश्च्योतनम् ॥ ४ ॥

धात्रीत्यादौ।—पूरणशब्देनाश्च्योतन वाच्यम। सक्षौद्रसैन्धवो वेति शोभाञ्जनपत्ररसमाषकचतुष्टयम्। मधु माषैकम सैन्धव रक्तिद्वयम ॥ ५ ॥

दार्वीत्यादि।—दार्वीरसाञ्जन दारुहरिद्राक्वाथकृत रसाञ्जनम्। स्यन्दसम्भवा इत्यभिष्यन्दसम्भवा ॥ ६ ॥

करवीरेत्यादौ।—तरुणमभिनव यत् किशलयम्, तस्य छेदात् यो रसो निर्गच्छति, तत्र पूरणमित्यर्थः ॥ ७ ॥

शिखरिमूलं ताम्रभाजने स्तोकसैन्धवोन्मिश्रम्।
मस्तुनिघृष्टं भरणाद्धरति नवं लोचनोत्कोपम्॥ ८॥
सैन्धवदारुहरिद्रा-गैरिकपथ्यारसाञ्जनैः पिष्टैः।
दत्तो वहिः प्रलेपो भवत्यशेषाक्षिरोगहरः॥
तथा शावरकं लोध्रं घृतभृष्टं विड़ालकः।
कार्य्यो हरीतकी तद्वद्घृतभृष्टं विड़ालकः॥
शालाक्येऽक्ष्णोर्वहिर्लेपो विड़ालक उदाहृतः॥ ९॥
गिरिमृच्चन्दननागर-खटिकांशयोजितो वहिर्लेपः।
कुरुते वचया मिश्रो लोचनमगदं न सन्देहः॥ १०॥
भूम्यामलकी घृष्टा ससैन्धवगृहवारियोजिता ताम्रे।
याता घनत्वमक्ष्णोर्जयति वहिर्लेपतः पीड़ाम्॥ ११॥
आश्चोतनं मारुतजे क्वाथो विल्वादिभिर्हितः।
कोष्णः सैरण्डबृहतो तर्कारीमधुशिग्रुभिः॥ १२॥

---

शिखरीत्यादौ।—शिखरि अपामार्गः। स्तोक सैन्धवं रक्तिद्वयं वयं वा सैन्धवमित्यर्थः॥ ८॥

सैन्धवेत्यादि।—एतैः स्तोकसैन्धवसहितैः समभागपिष्टैः श्लक्ष्णवस्त्रोपरि निमीलितचक्षुषि लेपो देयः। शावरकं लोध्रमिति श्वेतलोध्रम्। विडालकशब्दार्थमाह शालाक्य इत्यादि।—शालाक्ये शालाक्यग्रन्थे, सुश्रुत इति यावत॥ ९॥

गिरिमृदित्यादौ।—अंशो भागः। एतैः समभागपिष्टैश्चक्षुःसमीपे लेप कार्य्य इत्याह॥ १०॥

भूम्यामलकीत्यादौ—गृहवारि काञ्जिकम्॥ ११॥

आश्चोतनमित्यादि।—आश्चोतनमक्षिसेकः। विल्वादि महत् पञ्चमूलम् तर्कारी जयन्ती। मधुशिग्रु रक्तशोभाञ्जनम्। विल्वादिभिरित्यस्य सैरण्डेत्यादि विशेषणम्, तेन एक एवायं योगः, यदाह जतूकर्णः—"महत्पञ्चमूलबृहतीरुबुकशिग्रुतर्कारीसिंहीक्वाथः" इति। किन्तु तन्त्रान्तरे केवलविल्वादिक्वाथेनाप्ययं योगो दृश्यते, यथा—"पूरणं तीव्रशूलघ्नं तथा विल्वादिजाम्भसा" इति। किन्तु योग

एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम्।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम्॥ १३॥
सम्यक्के ऽक्षिगदे कार्य्यस्त्वाञ्जनादिकमिष्यते।
प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता।
मन्दवेदनता कण्डूः पक्वाक्षिगदलक्षणम्॥
अञ्जनादिविधिश्चाग्रे निखिलेनाभिधास्यते।
बृहत्येरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम्।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत्॥ १४॥
हरिद्रे मधुकं द्राक्षां देवदारु च पेषयेत्॥
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम्॥ १५॥

---

इयमपि सैन्धवेति, बृहतीविशेषणम्, न तु बिल्वादिविशेषणम् एकयोगत्वाप्रसङ्गात्॥ १२॥

एरण्डेत्यादि।—सुश्रुतस्य। एरण्डपल्लवादिकण्टकार्य्यन्त एक एवायं योगः, विदेहमतवादात्। यथा—'कण्टकारीशिफैरण्डमूलत्वक्पत्रसाधितम्। क्षीरमाजं हितं सेके चक्षुःस्यन्दाधिमन्थयोः' इति। आजं पयोऽत्र क्षीरपरिभाषयैव साध्यम्। अन्ये त्वाहुः—एतद्योगानन्तरं सुश्रुते 'मध्वौदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः। हितमह्नौदकं सेके" इति पठ्यते, एतद्वचनान् सर्वमाश्च्योतनक्षीरसाधनार्थं परिभाषाख्यानीयम्, तेनात्रापि षडुदकं क्षीरं साध्यमिति। किन्त्वत्र शेषानुक्त्या क्षीरपरिभाषयैव साधनमिति युक्तिमुत्पश्याम। व्यवहारोऽपि क्षीरपरिभाषयैवेति॥ १३॥

अञ्जनादिविधानस्य समयमाह सम्यक्क इत्यादि।—पक्वाक्षिरोगलक्षणमाह प्रशस्तेत्यादि।—प्रशस्तवर्त्मता दोषाणामनभिभूतवर्त्मता, संरम्भः शोथः। एतच्च लक्षणं प्रायस्त्र्यहादुपरि ज्ञेयम्, यदाह चरकः—"सम्यक् चाञ्जनं त्र्यहात्" इति। अञ्जनादिविधिश्च कथं ज्ञातव्य इत्यपेक्षया आह अञ्जनादिविधिरित्यादि।—अग्र इति आश्च्योतनाद्यधिकारे॥ १४॥

हरिद्रे इत्यादि।—सुश्रुतस्य। अत्र द्राक्षास्थाने पथ्येति केचित् पठन्ति॥१५॥

गैरिकं सैन्धवं कृष्णानागरञ्च यथोत्तरम्।
पिष्टं द्विरंशतोऽद्भिर्वा गुड़िकाञ्जनमिष्यते ॥ १६ ॥
प्रपौण्डरीकयष्ट्याह्व-निशामलकपद्मकैः।
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत् ॥ १७ ॥
द्राक्षामधुकमञ्जिष्ठा-जीवनीयैः शृतं पयः।
प्रातराश्च्योतनं पथ्यं शोथशूलाक्षिरोगिणाम् ॥ १८ ॥
निम्बस्य पत्रैः परिलिप्य लोध्रम्
स्वेदाग्निना चूर्णमथापि कल्कम् ॥
आश्च्योतनं मानुषदुग्धमिश्रम्
पित्तास्रवातापहमग्र्यमुक्तम् ॥ १९ ॥
कफजे लङ्घनं स्वेदो नस्यं तिक्तान्नभोजनम्।
तीक्ष्णैः प्रधमनं कुर्य्यात् तीक्ष्णैश्चैवोपनाहनम् ॥ २० ॥
फणिज्झकास्फोतकपोतविल्व-पत्तूरपीलसुरसार्जभङ्गैः।
स्वेदं विदध्यादथवा प्रलेपं वर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥ २१ ॥

---

गैरिकमित्यादि। सुश्रुतस्य। तत्र तगरस्थाने नागरमिति मिश्रलः पठ… यथोत्तरं द्विरंशत इति यथोत्तरभागतो द्विगुणमित्यर्थः। तेन गैरिकमाषा १, सै… माषा २, पिप्पलीमाषा ४, तगरमाषा ८। अद्भिर्वेति वाशब्दाच्छागीक्षीर… बोध्यम ॥ १६ ॥

प्रपौण्डरीकमित्यादौ।—शीतैरिति प्रपौण्डरीकादीनां कषायैः शीतलैरित… समायुक्तैरित्यत्र सितायुक्तैरिति केचित् पठन्ति। सितायुक्तैरिति पाठे म… सिता प्रक्षेप्येत्यर्थः ॥ १७ ॥

द्राक्षेत्यादौ।—जीवनीयशब्देन जीवनीयाष्टवर्गं गृह्णन्ति ॥ १८ ॥

निम्बस्येत्यादि।—निम्बपत्रं पिष्ट्वा तत्पिण्डमध्ये लोध्रकल्कं चूर्णं वा … पत्रेण वेष्टयित्वा अङ्गारैरुत्स्विद्य नारीक्षीरेण संमिश्य वस्त्रेण गालयित्वा … सेको विधेय इति ॥ १९ । २० ॥

फणिज्झकः पर्णासभेदः, गिर्ग्गीत्यन्ये। आस्फोता हाफरमालिका, …

शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः स्वल्पसैन्धवैः।
धार्य्यश्चक्षुषि सङ्क्षेपाच्छोथकण्डूव्यथापहः॥ २२॥
वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम्।
कफोद्भूताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा॥ २३॥
सैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम्।
आश्चोतनं तन्नयनस्य कुर्य्यात् कण्डूञ्च दाहञ्च रुजाञ्च हन्यात्
॥ २४॥
स्निग्धैरुष्णैश्च वातोत्थः पित्तजो मृदुशीतलैः।
तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यन्ति कफात्मकाः।
तीक्ष्णोष्णमृदुशीतानां व्यत्यासात् सान्निपातिकः॥ २५॥

---

स्वल्पम्। पत्तूरः शालिञ्चशाकः। पीलुः श्रौत्तरपथिकतरुः, अतएव निर्देशात् ... दीर्घीकारान्तोऽपि ज्ञेयः। सुरसार्जावपि पर्णासभेदौ। एषां भङ्गैः ... व्यत्ययमस्तैरङ्गारतापितैश्चक्षुषोः स्वेदः कार्य्यः। वहिष्ठं बाल्कम्। अत्रैव ... दर्शनात् अर्जस्थाने अर्कः इति केचित् पठन्ति। तन्त्रान्तरे यथा—"कपित्थ ... स्फोतपीलुपत्तूररूपिका। फणिज्झविल्वक्कदनैः स्वेदः स्यन्दाधिमन्थयोः॥" ... का अर्क॥ २१॥

शुण्ठ्यादौ।—निम्बपत्रापेक्षया शुण्ठी स्वल्पा देया; सैन्धवमपि चतुःपञ्च ...कमपि वदन्ति। एषा पिण्डः कटुष्ण एव चक्षुषोरुपरि सूक्ष्मवस्त्रं दत्त्वा देय ...दिश.। सक्षेपादित्यादौ प्रक्रियात्॥ २२॥

वल्कलमित्यादि।—पारिजातः पारिभद्रः। पारिभद्रवल्कलस्वरसस्य माषक ... सैन्धवस्य रक्तिद्वयं त्रय वा, काञ्जिकन्तु निकुञ्चमात्रम्। निकुञ्चस्तु आभया ... चतुष्टयपरिमितः। एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीय ... घन भवति। तदनु चक्षुष्यञ्जन देयमिति वृद्धा व्यवहरन्ति॥ २३॥

सैन्धवमित्यादि।—सैन्धवस्य रक्तिद्वय, लोध्रस्य माषकचतुष्टयं, काञ्जिकेन ... गव्यघृतेन भृष्टा निर्मलसूक्ष्मवस्त्रेण बद्धा अङ्गुलीद्वयेन सम्पीड्य चक्षुषि तद्रसो ... ॥ २४॥

... वातजादीनां चिकित्सामाह स्निग्धैरित्यादि।—विशदैरपिच्छिलैः।

तिरीटत्रिफलायष्टीशर्कराभद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः॥ २६॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंयुतम्।
न्यस्तमप्स्वान्तरीक्षासु हितमाश्च्योतनं भवेत्॥ २७॥
दार्व्वीपटोलमधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीकञ्चैतानि पचेत्तोये चतुर्गुणे॥
विपाच्य पादशेषन्तु तत् पुनः कुड़वं पचेत्।
शीतीभूते तत्र मधु दद्यात् पादांशिकं ततः।
रसक्रियेषा दाहाश्रुरागरक्तरुजापहा॥ २८॥
तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः।

---

तीक्ष्णमृदुशीतलानां व्यत्यासोऽत्र परस्परविपर्य्ययेणोपयोगः, तेन तीक्ष्णमुपयुज्य तद्विपरीतस्य मृदुन उपयोगः, एवं मृदद्रव्यमुपयुज्य तीक्ष्णस्योपयोगः, एवमुष्णशीतयोरपि व्यत्यासो ज्ञेयः। किंवा परस्परविरुद्धानां भावानां सम्मिश्रणेन उपयोगो व्यत्यासोपयोगः। तीक्ष्णोष्णमृदुशीतलानामित्युपलक्षणं, तेन स्निग्धरूक्षादीनामपि ग्रहणं बोध्यम्॥ २५॥

तिरीटेत्यादि। तिरीटः पट्टिकालोध्रम्। एषां प्रत्येकं माषकमेकं गृहीत्वा सूक्ष्मं पिष्ट्वा शीतलजलेन पलैकेन सम्मिश्र्य परिषेकः कार्य्यः॥ २६॥

कशेर्व्वित्यादि।—सुश्रुतस्य। कशेरुयष्टिमधुनोः प्रत्येकं माषकचतुष्टयं गृहीत्वा सूक्ष्मवस्त्रेण पोट्टलीं बद्ध्वा आकाशोदके पलैके निक्षिप्य तेन जलेन सेकः, आकाशोदकाभावे हंसोदकेन॥ २७॥

दार्व्व्यादौ।—पटोलनिम्बयोः पत्रं, पद्मकं पद्मकाष्ठम्, उत्पलं नीलोत्पलम्। एषां मिलित्वा कुडवचतुष्पलो ग्राह्यः। पाकार्थञ्च जलस्य द्वात्रिंशत् पलानि। "ततस्तु कुडवं यावत् तोयमष्टगुणं भवेत्" इति वचनात् ततः कुडवोऽष्टपलः स्थाप्यः। तद्वस्त्रपूतं कृत्वा पुनः पक्तव्यमाघनीभावात्। ततः शीते मधुपलद्वयं प्रक्षिप्य, ततोऽञ्जनं कार्य्यमिति॥ २८॥

पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ २९ ॥
शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसम्पुटे।
घृतेन धूपितो हन्ति शोथघर्षाश्रुवेदनाः ॥ ३० ॥
पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रा
अन्तर्गर्भं दधाना पटुतरगुड़िका पिष्टलोध्रेण भृष्टा।
तूलैः सौवीरमार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात्
चक्षुःकोपप्रशान्तिं चिरमुपरि दृशोर्भ्राम्यमाणा करोति ॥३१

विल्वाञ्जनम्—विल्वपत्ररसः पूतः सैन्धवाज्येन चान्वितः।
शुल्वे वराटिका घृष्टो धूपितो गोमयाग्निना ॥
पयसालोडितश्चाक्ष्णोः पूरणाच्छोथशूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते ॥ ३२ ॥
सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ।

---

तिक्तस्येति।—तिक्तं सर्पिर्वक्ष्यमाणपटोलादिघृतम्। विरेचनञ्च वक्ष्यमाणषडङ्गादिना ॥ २९ ॥

शिग्रुपल्लवेत्यादौ।—निर्यासः स्वरसः, घृतेन सह ताम्रपात्रे घृष्ट इत्यन्वयः। धूपित इति करीषाग्निना। अन्ये तु करीषाग्नौ घृतं दत्त्वा तस्य धूमेन धूपित इति व्याचक्षते। घर्षः करकरिकाख्यवेदनाविशेषः ॥ ३० ॥

पिष्टैरित्यादि।—जातिसिन्धूत्थं सारसैन्धवं, जातिजातीकलिकेत्यन्ये। अन्तर्गर्भं दधानेति पिष्टनिम्बपत्रपिण्डाभ्यन्तरे लोध्रकल्कपिण्डं निक्षिप्य कृता गुडिकेत्यर्थः। भृष्टा इति खर्परे मनाग्भृष्टेत्यर्थः। तदनु सौवीरेण काञ्जिकेन मार्द्रैरिति ईषदार्द्रैः तूलकैर्वेष्टिता चक्षुषोरुपरि भ्राम्यमाणेत्यर्थः ॥ ३१ ॥

विल्वपत्रेत्यादौ।—शुल्वे इति ताम्रपात्रे। पयसेति नारीस्तन्येन। वस्त्रपूतविल्वपत्ररसस्य माषकचतुष्टयं, सैन्धवस्य रक्तिद्वयं, घृतस्य विन्दुचतुष्टयम्। एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीयं यावद्घनं भवति। तदनु न्युब्जीकृतताम्रपात्रे शुष्कगोमयाग्निना धूपयित्वा नारीक्षीरेण तरलीकृत्य चक्षुःपूरणम् ॥ ३२ ॥

सपवनकफकोपं छागदुग्धावसिक्तम्
जयति नयनशूलं स्रावशोथं सरागम् ॥ ३३ ॥
तरुणविल्वामलकरसः सर्वाक्षिरोगनुत् ॥ ३४ ॥
पुराणं सर्वथा सर्पिः सर्वनेत्रामयापहम् ॥ ३५ ॥
अयमेव विधिः सर्वो मन्यादिष्वपि शस्यते।
अशान्तौ सर्वथा मन्ये भ्रु वोरुपरि दाहयेत् ॥ ३६ ॥
जलौकःपातनं शस्तं नेत्रपाके विरेचनम्।
शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत् ॥ ३७ ॥

षड़ङ्गगुग्गुलुः—

विभीतकशिवाधात्रीपटोलारिष्टवासकैः।
क्वाथो गुग्गुलुना पेयः शोथपाकाक्षिशूलनुत् ॥
पिल्लञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत्।
एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ ३८ ॥

---

सलवणेत्यादौ।—सैन्धवस्य रक्तिद्वयं, कटुतैलस्य विन्दुचतुष्टयं, काञ्जिकस्य माषकचतुष्टयम्। उपल प्रस्तरखण्डस्तेन घृष्टं, किंवा उपलशब्देन पवचतुष्टयात् रसाञ्जनादिशिलैव ग्राह्या। वृद्धास्तु वराटिकयैव व्यवहरन्ति ॥ ३३ ॥

तरुणेत्यादि।—तरुणस्य वामलकीफलस्य सूच्यादिभिर्विद्धस्य यो रसो निर्गच्छतीत्यर्थः ॥ ३४ ॥

पुराणसर्पिर्दशवर्षस्थितं, तदभावे संवत्सरातीतमपि पुराणं ग्राह्यमित्याह। उक्तं हि—"अल्पाभिष्यन्दि मधुरं यच्च संवत्सरोषितम्। अनुत्क्लेदञ्च दोषाणां पुराणं तत् प्रकीर्त्तितम्" इति। सर्वथेति पानमस्याञ्जनैरित्यर्थः ॥ ३५ ॥

अयमेव विधिरित्यादि।—वाग्भटस्य। अयमभिष्यन्दोक्तः। आदिशब्दात् अध्यती वातादयः ॥ ३६ ॥

नेत्रपाकञ्चिकित्सामाह जलौक इत्यादि।—स्पष्टम् ॥ ३७ ॥

विभीतकेत्यादौ।—पिल्लं पञ्चोजिका, किंवा "प्रक्षालिते यथा सृष्टे जायते पुनः पुनः। अपरिक्लिन्नवर्त्मानं तं पिल्लमिति निर्दिशेत्" इत्युक्तलक्षणे। अत्र

वासकादि—अटरूषाभयानिम्बधात्रीमुस्ताक्षकुल्लकैः।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम्॥ ३८॥
पथ्यास्तिस्रो विभीतक्यः षड् धात्री द्वादशैव तु।
प्रस्थार्द्धे सलिले क्वाथमष्टभागावशेषितम्॥
पीत्वाभिष्यन्दमास्रावं रागञ्च तिमिरं जयेत्।
संरम्भरागशूलाश्रुनाशनं दृक्प्रसादनम्॥ ४०॥
नेत्रे त्वभिहते कुर्य्याच्छीतमाश्च्योतनादिकम्।
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत्॥ ४१॥
आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वस्त्रोष्मणा स्वेदितमादितस्तु।
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात्॥
सूर्य्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य।

---

शृतपाकपक्षे तु विभीतकादीनां क्वाथो गुग्गुलुं गृहीत्वा घृतेन पिष्टा वटिकां कुर्य्यादित्युपदिशन्ति वृद्धाः॥ ३८॥

अटरूषेत्यादि।—अटरूषकं वासकम्। एतैः कृतक्वाथेन चक्षुःसेचनं, तथा गुग्गुलुं प्रक्षिप्य विरेचनमप्युपदिशन्ति वृद्धाः॥ ३९॥

पथ्या इत्यादौ।—प्रस्थार्द्धे इति द्रवद्वैगुण्यात् शरावद्वये। पीत्वेति सायमित्याहुः॥ ४०॥

आगन्तुनेत्ररोगचिकित्सामाह नेत्र इत्यादि।—आदिशब्दादस्य लेपादीनां ग्रहणम्। दृष्टीत्यादि।—सुश्रुतस्य। दृष्टिप्रसादजननं नयनावरकदोषनाशनम्। कैर्दृष्टिप्रसादनं कार्य्यमित्याह स्निग्धैरित्यादि। स्वेदादिकृता रुजा एव उपतापो रोगो रोगजनकत्वादुच्यते। अभ्याहतामित्यनन्तरं दृष्टिमिति शेषः। तथैवेत्यनन्तरोक्तस्निग्धहिमादिविधिना॥ ४१॥

आगन्त्वित्यादि।—आगन्तुदोषं धूलाद्यभिघातम्। वस्त्रोष्मा च वस्त्रपुटी ग्राह्यः।

सन्तर्पणं स्निग्धहिमादि कार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः ॥ ४२ ॥

निशाब्दत्रिफलादार्वीसितामधुकसंयुतम्।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम्।
दुत्कटाङ्कुरजस्तद्वत् स्वरसो नेत्रपूरणम् ॥ ४३ ॥
आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च।
जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥ ४४ ॥
सैन्धवं दारु शुण्ठी च मातुलुङ्गोरसो घृतम्।
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥ ४५ ॥

---

यत्रापि पित्तक्षतजापहं स्यादिति पित्ताभिष्यन्दे रक्ताभिष्यन्दे च यदुक्तं तदत्र हितम्। त्रिफलाप्रयोगा इति त्रिफलाक्वाथेन चक्षुःसेकादयः ॥ ४२ ॥

निशेत्यादि।—एषां चूर्णं नारीक्षीरे प्रक्षिप्य पूरणम्। तद्वदिति अभिघाताक्षिशूलघ्न इत्यर्थः ॥ ४३ ॥

आजमित्यादि।—आजं घृतमिह प्रस्थमानम्। क्षीरपात्रमिति पात्रशब्देन द्रवद्वैगुण्यात् षोडशशरावाः। क्षीरञ्चेह गव्यमेव, विशेषाभावात्। अन्ये तु घृतसाहचर्य्यात् क्षीरमप्याजमाहुः। सर्पिषोद्विरुच्चारणमिह नस्ये तर्पणे च हितत्वप्रतिपादनार्थमिति वदन्ति। जेज्जडस्तु आजघृतस्य कल्कत्वमेवाह, तेन तन्मते द्वितीय सर्पिःपदस्य गव्यघृतमेवार्थं इति ॥ ४४ ॥

शुष्काक्षिपाकरोगचिकित्सामाह सैन्धवमित्यादि।—सुश्रुतस्य। स्तन्योदकाभ्यामिति उपलक्षणे सहार्थे वा तृतीया। सैन्धवदारुशुण्ठीनां मिलित्वा पादिकः कल्कः कार्य्यः। पादिकत्वञ्च मिलितमातुलुङ्गरसादिद्रवचतुष्टयमपेक्ष्य। सैन्धव माषकद्वयम्, देवदारुशुण्ठ्योस्तु प्रत्येकं माषकचतुष्टयम्, मातुलुङ्गरसादीनां चतुर्णां प्रत्येकं द्वादशमाषकाः। सर्वमेकीकृत्य मृद्वग्निना पक्तव्यं यावत् घनीभवति। ततोऽञ्जनं कार्य्यम्। रसक्रियेयम्। अन्ये तु स्तन्योदकामिति पठित्वा स्त्रीक्षीरजलयोर्मिलितयोः समुदयार्द्धमानम्। सैन्धवदारुशुण्ठीमातुलुङ्गरसघृतानां समभागः। सैन्धव

वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये।
पूर्वभक्तं हितं सर्पिः क्षीरञ्चाप्यथ भोजने ॥ ४६ ॥
वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि।
सक्षीरं कर्कटरसे सिद्धञ्चापि पिबेद्घृतम् ॥ ४७ ॥
अभिष्यन्दमधीमन्थं रक्तोत्थमथवार्जुनम्।
शिरोत्पातं शिराहर्षमन्यांश्चाक्षिभवान् गदान् ॥
स्निग्धस्याज्येन कौम्भेन शिराव्यधैः शमं नयेत्।
अस्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम्।
शिराव्यधं विना कार्य्यः पित्तस्यन्दहरो विधिः ॥
सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत् सैन्धवकाशीशं स्तन्यपिष्टञ्च पूजितम् ॥
शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा काशीशं वा समाक्षिकम् ॥ ४८ ॥

~ ~~ ~ ~~~

[illegible]कानां कल्कम्। मातुलुङ्गरसादिद्रवचतुष्टयेनाम्लाव्याञ्जनं कार्य्यम्। [illegible] [illegible]र्य्यामिति। अन्ये तु दन्त्यादिकार्द्रमिति व्याचचते ॥ ४५ ॥

वातादिचिकित्सामाह, वातेत्यादि।—पूर्वभक्तमिति भक्तात् पूर्वमिति। अन्यतो [illegible] वातपर्य्यये च क्षीरपानम्, अनयोः पित्तरक्तावद्धत्वात् ॥ ४६ ॥

वृक्षादन्यामित्यादि।—वृक्षादनी वन्दा। वृक्षादन्यादिभिः कल्कः, क्षीरं [illegible] [illegible] कर्कटरसश्च त्रिगुणः, एवं घृतं साध्यमिति श्रीकण्ठः। गयदासस्तु [illegible] [illegible]दीनां पञ्चमूलान्तानां मिलित्वा द्विगुणः क्वाथः, क्षीरकर्कटरसयोस्तु प्रत्येकं [illegible]समत्वमित्याह। अन्ये तु विभिन्नविभक्तिकत्वात् वृक्षादन्यादीनां प्रत्येकं [illegible] [illegible] क्वाथ, एवं क्षीरकर्कटरसावपि, इति पञ्चगुणः पाक इत्याह ॥ ४७ ॥

अभिष्यन्दमित्यादौ।—अन्यांश्चेति शुक्रादीन्। कौम्भं सर्पिर्दशवर्षस्थितम्। [illegible]स्लाध्युषितमित्यादौ।—तैन्दुकं सर्पिश्चतत्याधौ सुश्रुतेनोक्तम्। त्रफलं त्रिफला-[illegible]कल्काभ्यां सिद्धम्। केवलमित्यसंस्कृतम्। सर्पिरित्यादि। सुश्रुतस्य।

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत्।
कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च॥
कांस्ये निघृष्टं स्तन्येन क्षतशुक्रार्त्तिरागजित्॥ ४९॥
चन्दनं गैरिकं लाक्षा मालतीकलिका समा।
व्रणशुक्रहरा वर्त्तिः शोणितस्य प्रसादनी॥
शिरया वा हरेद्रक्तं जलौकोभिश्च लोचनात्।
अक्षमज्जाञ्जनं मायं स्तन्येन शुक्रनाशनम्॥ ५०॥
एकं वा पुण्डरीकञ्च छागीक्षीरावसेचितम्।
रागाश्रुवेदनां हन्यात् क्षतपाकात्ययाजकाः॥ ५१॥
तुत्थकं वारिणा युक्तं शुक्रं हन्त्यक्षिपूरणात्।
समुद्रफेनदक्षाण्डत्वक्सिन्धूत्थैः समांशिकैः।

---

अञ्जन सौवीराञ्जनम। घृतमधुभ्यां सौवीराञ्जनं पिष्ट्वा वर्त्तिः कार्य्या। भद्र मित्यञ्जनरूपम्। तद्वदिति शिरोत्पातभेषजमित्यर्थः। काशीशं पुष्पकाशीशं धातुकाशीशमित्यन्ये, व्यवहारस्तु पूर्व्वेण। फाणितं द्रवगुडः। तार्क्ष्यशैलं रसाञ्जनम॥ ४८॥

कतकस्येत्यादि।—कतकं तोयप्रसादफलं प्रायो मगधे भवति। शङ्खं नाभिशङ्खम्, तिन्दुकं तिन्दुकफलास्थि, रूप्यं रूप्यचूर्णम्। एषां समभागं गृहीत्वा कांस्यपात्रे स्तन्येन सह घर्षणीयम। क्षतशुक्रं व्रणशुक्रम॥ ४९॥

चन्दनमित्यादौ।—गैरिकं स्वर्णगैरिकम्, तच्चात्यन्तरक्तं मृदु च यद्गैरिकमिति पेषणन्तु जलेन, वृद्धा गगनजलेन व्यवहरन्ति, तदभावे तद्गुणेन वा। एवमन्यत्रापि द्रवानुक्तस्थाने बोध्यम्। तथा क्वापि शीतेन मधुना घृष्ट्वा चाञ्जनमित्यादि विशेषाभावस्थाने व्यवहारो वृद्धानाम। अक्षेत्यादौ।—स्तन्येनेत्यत्र मध्वपि बोध्यं सुश्रुतसंवादात्॥ ५०॥

एकमित्यादि।—एकं श्रेष्ठमिति वा तत्र उत्तरापथजं पुण्डरीकं पुण्डरीकाष्ठं पिष्ट्वा वस्त्रेण पोट्टलीं बद्ध्वा छागीक्षीरे स्थाप्यम्, यदा पीतवर्णं दुग्धं भवति, तदा चक्षुषि दुग्धं देयम्। प्रबलरक्तदुष्टौ योगोऽयम॥ ५१॥

तुत्थकमित्यादि।—अत्र मध्वपि बोध्यं सुश्रुतसंवादात्। समुद्रेत्यादौ।—

शिग्रुवीजयुतैर्वर्त्तिः शुक्रघ्नी शिग्रुवारिणा ॥ ५२ ॥

धात्रीफलं निम्बकपित्थपत्रम्
यष्ट्याह्वलोध्रं खदिरं तिलाश्च ।
क्वाथो सुशीतो नयने निषिक्तः
सर्वप्रकारं विनिहन्ति शुक्रम् ॥

क्षुण्णपुन्नागपत्रेण परिभावितवारिणा ।
श्यामाक्वाथाम्बुना वाथ सेचनं कुसुमापहम् ॥ ५३ ॥
दक्षाण्डत्वक्शिलाशङ्ख-काचचन्दनगैरिकैः ।
तुल्यै रञ्जनयोगोऽयं पुष्पार्मादिविलेखनः ॥ ५४ ॥
शिरीषवीजमरिच-पिप्पलीसैन्धवैरपि ।
शुक्रे प्रघर्षणं कार्य्यमथवा सैन्धवेन च ॥ ५५ ॥
बहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात् ।
नक्ताह्ववीजवर्त्तिः कुसुमचयं हन्तु चिरजमपि ॥ ५६ ॥

---

अण्डत्वक, कुक्कुटाण्डकपालम् । समाक्षिकैरिति स्वर्णमाक्षिकसहितैरिति ...चित । अन्ये तु मधु वदन्ति । समाक्षिकैरित्यत्र सशङ्खकैरिति पाठे शङ्खक ...हनाभ । शिग्रुवारिणेति शोभाञ्जनरसेन पिष्टा वर्त्ति कार्य्या ॥ ५२ ॥

धात्रीत्यादौ ।—निम्बस्य कपित्थस्य च पत्रम् । क्वाथ इत्यत्र एषामिति शेष । ...प्रकारमिति सव्रणमव्रणञ्च । क्षुण्णेत्यादि ।—क्षुण्ण शिलायां जर्ज्जरीकृत पुन्ना...स्य नागकेशरस्य यत पत्रम, तेन भावित यद्वारि, तेन । श्यामा श्यामालता, ...स्या क्वाथरूपमम्बु । कुसुमापहमिति शर्द्दन्दुकुन्दवर्णं शुक्रमेव कुसुम तन्ना...शनम ॥ ५३ ॥

दक्षेत्यादि ।—दक्ष कुक्कुट, गोष्ठकुक्कुट इत्यन्ये, शिला मनःशिला, शङ्ख ...शङ्खनाभ, एव सर्वत्र, काच स्वनामख्यात ॥ ५४ ॥

शिरीषेत्यादि ।—शिरीषादिचूर्णैर्मध्वाक्तशलाकया शुक्रे घर्षण कार्य्यम । सैन्धवे...ति केवलसैन्धवचूर्णेन, अन्ये तु स्फटिकसैन्धवखण्डेनेत्याहु ॥ ५५ ॥

बहुश इत्यादि ।—बहुश सप्ताहम् । नक्ताह्ववीजेति करञ्जवीजस्य चूर्णं कृत्वा ...पलाशकुसुमस्वरसेन वर्त्तिः कार्य्या ॥ ५६ ॥

सैन्धवत्रिफलाकृष्णा-कटुकाशङ्खनाभयः।
सताम्ररजसो वर्त्तिः पिष्टशुक्रविनाशिनी ॥ ५७॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम्।
क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलेखनम्॥ ५८॥

दन्तवर्त्तिः—

दन्तैर्हस्तिवराहोष्ट्र-गवाश्वाजखरोद्भवैः।
सशङ्खमौक्तिकाम्भोधि-फेनैर्मरिचपादिकैः।
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत्॥ ५९॥
शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम्।
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च॥ ६०॥
पिच्चिटे मधुना योज्यमर्वुदे मस्तुना तथा।
ताभ्यं मधूकसारो वा वीजञ्चाक्षस्य सैन्धवम्।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये॥ ६१॥

सैन्धवेत्यादौ।—कटुका कटरोहिणी, ताम्ररजम् मारिततास्रचूर्णम् पिष्ट
शुक्रविनाशिनीति पिष्टाख्यनेत्ररोग, विन्दुभि पिष्टधवलरुतश्चिन्न पिष्ट
वर्त्तत" इत्य क्तलक्षणे ॥ ५७॥

चन्दनमित्यादौ।—पलाशतरुशोणित किंशुकवृक्षवल्कम। रक्तचन्दनस्य
माषक, सैन्धवस्य द्वौ पथ्यायास्त्रय इति वृद्धिक्रम। एतच्चूर्णाञ्जन मध्वाक्तशलाकया चक्षुषि देयम एव सर्वत्र चूर्णाञ्जने॥ ५८॥

दन्तैरित्यादि।—वागभटस्य। मरिचपादिकैरिति समुदितचूर्णापेक्षया मरिचस्य चतुर्थो भाग। पेषणञ्चात्र जलेन वागभटसंवादात॥ ५९॥

शङ्खेत्यादि।—शङ्ख शङ्खनाभि। नाभिशङ्ख मा ८, मनःशिला मा २, मरिच
मा १, सैन्धव र ५। चूर्णाञ्जनमिति मध्वाक्तशलाकया सग्टह्य शुक्रदेश घर्षयेत। तत
त्रिफलाक्वाथेन प्रक्षालनं कार्य्यमिति। शुक्रयोरिति सव्रणाव्रणशुक्रयो॥ ६०॥

वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥ ६२ ॥
त्रिफलामज्जमङ्गल्यामधुकं रक्तचन्दनम्।
पूरणं मधुसम्मिश्रं क्षतशुक्राजकासुजित् ॥ ६३ ॥
तालस्य नारिकेलस्य तथैवारुष्करस्य च।
करीरस्य च वंशानां क्वत्वा क्षारं परिस्रुतम् ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम्।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत् ॥
एतच्छुक्लेष्वसाध्येषु कृष्णीकरणमुत्तमम्।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ६४ ॥

---

ताम्रमित्यादि।—ताम्रं स्वर्णमाक्षिकम्, अक्षस्य बीजं बिभीतकास्थिमज्जा ॥ ६२ ॥

त्रिफलेत्यादौ।—मङ्गल्या गोरोचना, मधुकं यष्टिमधु। एतैः समभागेन पूरणं कार्यम् ॥ ६३ ॥

तालस्येत्यादि।—तालस्य जटा; नारिकेलस्य फलास्थि, अरुष्करो भल्लातकफलं, वंशकरीरस्य तु पाखरी। एतत् सर्वं तिलनालाग्निना दग्ध्वा भस्म कृत्वा तत्र भाव्यद्रव्यसमं गृहीत्वा अष्टगुणोदके षोडशगुणोदके वा निःक्वाथ्य अष्टांशं पादशेषं वैकविंशतिवारान् स्रावयेत्। अन्ये तु क्वाथमकृत्वा चतुर्गुणेन षोडशगुणेन वा जलमात्रेण स्रावणमाहुः वाग्भटसंवादात्। अपरे तु भाव्यद्रव्यसमं भस्म चतुर्गुणेन षोडशगुणेन वा अम्भसा निःक्वाथ्य अष्टांशशेषेण विस्रावणं वदन्ति। क्षारन्तु पूर्ववत्। परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वारान् करभास्थिचूर्णं भाव्यम्। करभ उष्ट्रः। एतच्च प्रतिभावनमेव चूर्णीकर्तव्यं, तच्च शलाकया सगृह्य शुक्रदेशे घर्षयेत्। ततश्च त्रिफलाक्वाथेनाक्षिप्रक्षालनमिति सम्प्रदायः। क्षारेणेति क्षारोदकेन। एतच्छुक्लेष्वसाध्येष्विति अनेन शुक्लस्यास्य वैवर्ण्यनाशनं परं क्रियते, न पुनः शुक्रनाशनमिति दर्शयति। यानि शुक्राणि साध्यानीत्यादिः पाठो युक्तः, न तु शुक्राण्यसाध्यानीति। "नारिकेलास्थिभल्लाततालवंशकरीरजम्। भस्माद्भिः स्रावयेत् ताभिर्भावयेत् करभास्थिजम्।

पटोलाद्यं घृतम्—

पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि ।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥ ६५ ॥

कृष्णाद्यं तैलम्—

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं कृगल्याः ।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥ ६६ ॥

अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
व्रणं गोमयचूर्णेन पूरयेत् सर्पिषा सह ॥ ६७ ॥

---

चूर्णं शुक्रेष्वसाध्येषु तद् वैवर्ण्यप्रमञ्जनम् । साध्येषु साधनीयमिदमेव । निम्नानि पुनरसाध्यानीति पठित्वा एतच्च न कदाचिदपि साध्यशुक्रगोचरतया प्रयोक्तव्यमिति यद्व्याख्यात तदपास्तम्, उक्तवाग्भटवचनविरोधादेव ॥ ६४ ॥

पटोलमित्यादि ।—पटोलं पटोलस्य फलम् । कुटज इन्द्रयवः, तन्त्रान्तरे "यष्टिकलिङ्गभूनिम्बपिप्पलीघनचन्दनैः । कल्कैर्मुस्ताभिकैराज्यं प्रस्थमात्रप्रसाधितम्" इत्युक्तत्वात् । अतएव वचनात् भूनिम्बादीनां पलमानता च बोध्या ॥६५॥

कृष्णेत्यादि ।—कृष्णा पिप्पली । अक्षिशब्दस्य शूलपाकात्ययाभ्यां सम्बन्धः ॥६६॥

अजकामित्यादि ।—सूच्या सूच्या । गोमयचूर्णेनेति पाठो लेखकदोषात्, सुश्रुते वाग्भटे च तत्तदाकारपुस्तकेषु बहुषु गोमांसचूर्णेनेत्येव हि पाठो दृश्यते, टीकाकारैश्च व्याख्यात इति ॥ ६७ ॥

सैन्धवं वाजिपादञ्च गोरोचनसमन्वितम्।
शेलुत्वग्रससंयुक्तं पूरणञ्चाजकापहम्॥ ६८॥
शशकघृतम्—शशकस्य शिरःकल्के शेषाङ्गक्कथिते जले।
घृतस्य कुड़वं पक्कं पूरणञ्चाजकापहम्॥ ६९॥

द्वितीयं शशकाद्यं घृतम्—

शशकस्य कषाये च सर्पिषः कुड़वं पचेत्।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम्॥
हन्त्यस्याः पूरणाच्छुक्रक्षतपाकात्ययाजकाः।
हन्ति भूशङ्खशूलञ्च दाहरागानशेषतः॥ ७०॥
त्रिफलाघृतं मधुयवाः पादाभ्यङ्गः शतावरी मुद्गाः।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम्॥ ७१॥
लिह्यात् सदा वा त्रिफलां सुचूर्णिताम्
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे।

---

सैन्धवमित्यादौ।—वाजिपादोऽश्वखुरः, अश्वगन्धामूलमिति केचित्, व्यवहारस्तु [illegible]व। शेलुर्बहुवार.॥ ६८॥

शशकस्येत्यादि।—शशकमस्तकमात्रं कल्कः, शेषाङ्गस्यान्त्रादिहीनस्य क्वाथः। क्वाथार्थञ्च जलस्य षोड़श शरावाः, स्थाप्याश्चत्वारः शरावा इति। घृतस्य [illegible]ऽष्टौ पलानि॥ ६९॥

शशकस्य कषाये चेत्यादि।—आकृतिमानात् शशकगुड़कमेकम्। अत्रापि [illegible]दिव क्वाथकरणं, पयसा समं तुल्यम्, अतः पञ्चगुणः पाकः; अन्ये तु चतुर्गुण-[illegible]। एतन्मते क्वाथार्थजलस्य द्वादश शरावाः, स्थाप्यास्तु त्रय इति। इति [illegible]षु॥ ७०॥

त्रिफलेत्यादौ।—त्रिफलेति छेदः, सापि क्वाथचूर्णादिविषयीप्रयोज्या। घृतञ्च [illegible]सामान्यत एव चक्षुष्यं तथापि पुराणमतिशयेन बोध्यम्, अतएव सुश्रुते—"घृतं त्रिफलां शतावरीं पटोलमुद्गामलकानि यवानपि। निषेव्यमाणस्य नरस्य भयं सुघोरात् तिमिरान्न विद्यते" इति॥ ७१॥

समीरजे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीत युक्तितः ॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम् ।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥
यस्त्रैफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम् ।
स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः ॥
सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी ।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन ॥
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥
जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य्य मुखरन्ध्रम् ।
निर्दयमुक्षन्नक्षि क्षपयति तिमिराणि ना सद्यः ॥ ७२ ॥
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ ७३ ॥

सुखावती वर्त्तिः—

कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता ।
फेनो रसाञ्जनं क्षौद्रं विड़ङ्गानि मनःशिला ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।
तिमिरं पटलं काचमर्म्म शुक्रं तथैव च ।
कण्डूक्लेदार्वुदं हन्ति मलञ्चाशु सुखावती ॥ ७४ ॥

---

लिह्यादित्यादि ।—सुश्रुतस्य । युक्तित इति मात्रया । अत्र यस्त्रैफलं च-
मित्यादेरनन्तरं सघृतं वा वराक्वाथं शीलयेत् तिमिरामयीति पाठो न युक्तः, क्व-
क्वाथोऽथवा चूर्णमित्यादिनैवोक्तार्थत्वात् । जाता इत्यादौ ।—धावनादिति प्रक्षा-
लनात् । निर्दयमुक्षन्निति अवगाढ़ं सिञ्चन् ; ना इति पुरुषः ॥ ७२ ॥
भुक्त्वेत्यादौ ।—पाणितलमित्यनन्तरमाचान्तवारिपरिप्लुतमिति शेषः ॥ ७३ ॥
कतकस्येत्यादि ।—कतकस्य फलं जलप्रसादनफलं ; शङ्खः शङ्खनाभिः, कि-

चन्द्रोदया वर्त्तिः—

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला॥
सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत्।
नाशयेत् तिमिरं कण्डूं पटलान्यर्बुदानि च॥
अधिकानि च मांसानि येन रात्रौ न दृश्यते।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी॥ ७५॥
हरीतकी हरिद्रा च पिप्पल्यो लवणानि च।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते॥ ७६॥

कुमारिका वर्त्तिः—

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः।
जातीकुसुमपञ्चाशन्मरिचानि च षोड़श।
एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत्॥ ७७॥

त्रिफलाद्यवर्त्तिः—

त्रिफलाकुक्कुटाण्डत्वक् कासीसमयसो रजः।
नीलोत्पलं विड़ङ्गानि फेनश्च सरितां पतेः॥

---

[illegible]रा, फेन. समुद्रफेन। चौद्रमत्राञ्जनार्थं, पेषणञ्च जलेन। इयञ्च वर्त्ति[illegible]
[illegible]शित तिमिरे भद्रा॥ ७४॥

चन्द्रोदयवर्त्तिस्तु कफतिमिरे प्रशस्ता। जलेन चाञ्जनमिति श्रीकण्ठः. तत्-
[illegible]लाजुष्यत्वाच्च मधुनापि व्यवहरन्ति वृद्धा.॥ ७५॥

हरीतकीत्यादौ।—लवणशब्दः सैन्धववचनः बहुत्वं [illegible]त्, तत्र प्रथमभागापेक्षया
[illegible]शमित्याहुः। इयमपि कफे हिता। न क्वचित् प्रतिहन्यत इति पित्तज
[illegible] न बाध्यत इत्यर्थः॥ ७६॥

एषा कुमारिका वर्त्तिरित्यत्र कुसुमिका वर्त्तिरिति वृन्दे पठ्यते॥ ७७॥

त्रिफलेत्यादौ।—कासीसं धातुकासीसम्; अयसो मारितपुटितस्य रजः।

आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत्॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः॥ ७८॥

चन्दनाद्यवर्त्तिः—

चन्दनत्रिफलापूगपलाशतरुशोणितैः।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा॥ ७९॥

निशाद्यमञ्जनम्—

निशाद्वयाभयामांसीकुष्ठकृष्णा विचूर्णिताः।
सर्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम्॥ ८०॥
व्योषोत्पलाभयाकुष्ठ-तार्क्ष्यैर्वर्त्तिः कृता हरेत्।
अर्बुदं पटलं काचं तिमिरार्माश्रुनिःस्रुतिम्॥ ८१॥

तूषणाद्यवर्त्तिः—

तूषणं त्रिफला वक्रं सैन्धवालमनःशिलाः।
कण्डूपदेहकण्डूघ्नी वर्त्तिः शस्ता कफापहा॥ ८२॥

नयनसुखावर्त्तिः—

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा।
वर्त्तिरियं नयनसुखा तिमिरार्मपटलकाचाश्रुहरी॥ ८३॥

भावयेदिति स्थापयेत् लेपयेदिति वा। क्षीरेणेति आजेनैवेत्याहुः। वर्त्तयेदिति वर्त्तिं कुर्य्यात्। अभिन्नचक्षुष इति अनष्टतारकस्य॥ ७८॥

चन्दनेत्यादौ।—पूग गुवाकफलम्, पलाशतरुशोणित किंशुकवेष्टकम् पलाश-पुष्पस्वरस इत्यन्ये॥ ७९॥

निशेत्यादौ।—सुगतो बुद्धस्तन्निर्मितत्वात् सौगतम्॥ ८०॥

व्योषेत्यादौ।—तार्क्ष्य रसाञ्जनम्॥ ८१॥

तूषणेत्यादौ।—वक्र तगरपादुका, आलं हरितालम॥ ८२।

एकगुणेत्यादौ।—अत्र अर्मतिमिरपटलाश्रुकाचहरीति पठनीयम्, अन्यथा छन्दोभङ्ग. स्यात्॥ ८३॥

चन्द्रप्रभा वर्त्तिः—

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला॥
एतानि समभागानि अजाक्षीरेण पेषयेत्।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत्॥
अर्वुदं पटलं काचं तिमिरं रक्तराजिकाम्।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति॥
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत्॥ ८४॥

श्रीनागार्जुनावर्त्तिः—

त्रिफलाव्योषसिन्धूत्थ-यष्टीतुत्थरसाञ्जनम्।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके॥
नाशिनी तिमिराणाञ्च पटलानां तथैव च।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम्॥
किंशुकस्वरसेनाथ विल्वपुष्पकरक्कताः।
अञ्जनाल्लोध्रतोयेन चासन्नतिमिरं जयेत्।
चिरमाच्छादिते नेत्रे वस्तमूत्रेण संयुता।
उन्मीलयत्यकृच्छ्रेण प्रसादञ्चाधिगच्छति॥ ८५॥

पिप्पल्याद्यवर्त्तिः—

पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत् समधुकां सहरिद्राम्।

---

अञ्जनमित्यादि।—अञ्जन रसाञ्जनम्; श्वेतमरिचं शोभाञ्जनवीजम्, एवं सर्वत्र॥ ८४॥

त्रिफलेत्यादौ।—जन्तुघ्नं विडङ्गम्; ताम्रञ्च मारितं ग्राह्यम्। चतुर्दशेति सङ्ख्याकथनेन अस्या वर्त्तेश्चतुर्दशाङ्गीति नामान्तरमपि सूचितम्, वाग्भटवचनात्। स्तम्भे शिलास्तम्भे। किंशुकस्वरसेनेति किंशुकपुष्पस्वरसेन॥ ८५॥

एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः॥ ८६ ॥

कोकिला वर्त्तिका—

व्योषायश्चूर्णसिन्धूत्थ-त्रिफलाञ्जनसंयुता ।
गुडिका जलपिष्टेयं कोकिला तिमिरापहा ॥ ८७ ॥

त्रीणि कटूनि करञ्जफलानि द्वे रजनी सहसैन्धवकञ्च ।
विल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं प्रवदन्ति ॥
हन्ति तमस्तिमिरं पटलञ्च पिच्चिटशुक्रमथार्जुनकञ्च ।
अञ्जनकं जनरञ्जनकञ्च दृक् च न नश्यति वर्षशतञ्च ॥ ८८ ॥

नीलोत्पलं विड़ङ्गानि पिप्पली रक्तचन्दनम् ।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम्॥ ८९ ॥
पत्रगैरिककर्पूर-यष्टीनीलोत्पलाञ्जनम् ।
नागकेशरसंयुक्तमशेषतिमिरापहम् ॥ ९० ॥
शङ्खस्य चतुरो भागास्तदर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन पिप्पली ॥
वारिणा तिमिरं हन्ति अर्वुदं हन्ति मस्तुना ।

---

पिप्पलीमित्यादौ ।—उत्पलपत्रम् उत्पलपुष्पस्य पत्रम् । वर्त्तयेदिति वर्त्तिं कारयेत् ॥ ८६ ॥

व्योषेत्यादौ । —अञ्जन सौवीराञ्जनम् । कोकिलवत् कृष्णवर्णत्वात् कोकिलेति वर्त्तेः संज्ञा ॥ ८७ ॥

त्रीणीत्यादौ ।—द्वे रजनीति स्त्रीलिङ्गनिर्देशात स्त्रीलिङ्गे कृत्वेकारान्तोऽपि रजनीशब्दोऽस्तीति ज्ञेयम् । वारिचरः शङ्खनाभिः ; वारिधर इति पाठे वारिधरो मुस्तकम् । हन्ति तमस्तिमिरमिति अन्धकारत्वसाधर्म्यात् तमःसदृशं तिमिरं हन्तीति । अञ्जनकमिति संज्ञायां स्वार्थे कः । जनरञ्जक जनानुरागकारीत्यर्थ दीपकाख्यच्छन्दः ॥ ८८ ॥

नीलोत्पलमित्यादौ ।—अञ्जनं रसाञ्जनम्, एवं वक्ष्यमाणेऽपि ॥ ८९ ॥

पत्रेत्यादि ।—पत्रं तेजपत्रम् , गैरिकं स्वर्णगैरिकम् ॥ ९० ॥

पिच्चिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम्॥ ९१॥
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च।
भद्रमुस्तं विड़ङ्गानि सप्तमं विश्वभेषजम्।
गोमूत्रेण गुड़ी कार्य्या छागमूत्रेण चाञ्जनम्।
ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा।
नक्तान्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम्॥
शिशिरेण परिस्रावमर्मं पिच्चिटं तथा॥ ९२॥
संगृह्योपरतानलक्तकरसेनामृज्य गण्डूपदान्
लाक्षारञ्जिततूलवर्त्तिनिहितान् यष्टीमधून्मिश्रितान्।
प्रज्वाल्योत्तमसर्पिषानलशिखासन्तापजं कज्जलम्
दूरामन्ननिशान्ध्यसर्वतिमिरप्रध्वंसकृच्चोदितम्॥
भूमौ निघृष्टयाङ्गुल्या अञ्जनं शमनं तयोः।
तिमिरकाचार्म्महरं धूमिकायाश्च नाशनम्॥ ९३॥

शङ्खेत्यादौ।—चतुरो भागा इति कान्दसत्वात्। एतैर्जलपिष्टै वर्त्ति कार्य्या। स्त्रीक्षीरेण तदुत्तममिति उत्कृष्टशक्तिकमित्यर्थः॥ ९१॥

हरिद्रेत्यादौ।—भद्रमुस्तं कान्तक्रामकं। भृङ्गराजेनेति भृङ्गराजस्वरसेन। शिशिरेणत्यवश्यायजलेन। अर्म्मुषं मुखरोगविशेषं, प्रभावादेव हन्ति ज्वरांश्च निखिलान् हन्ति इति। निश्चलस्तु आयुर्वेदे पठति॥ ९२॥

संगृह्येत्यादौ।—उपरतानिति मृतान्, आमृज्यालक्तकरसेन भावयित्वा इत्यर्थः। लाक्षारञ्जितं तूलमलक्तकम्। उत्तमसर्पिषा गव्यघृतेन। मृतगण्डूपदान् अलक्तक रसं दत्वा आतपे शोषयेत्, तदनु चूर्णीकर्त्तव्यं तदनु तत गण्डूपदचूर्णं यष्टिमधुचूर्णेन सह अलक्तपत्रमध्ये कृत्वा सूत्रेण संवेष्ट्य वर्त्तिः कार्य्या, तया वर्त्या गव्य-घृतमिश्रितया दीपं प्रज्वाल्य तद्दीपशिखोपरि निर्म्मलकाचादिपात्रं धृत्वा कज्जलं पातनं कर्त्तव्यं, तेन कज्जलेन कदुष्णेनाञ्जनं कर्त्तव्यमिति क्रियामार्गः। आन्ध्यशब्दो नक्तादिभिः सम्बध्यते। प्रत्येकं तयोरिति दूरासन्नान्ध्ययोर्निशान्ध्यदिवान्ध्ययोरिति वा। धूमिका धूमिकावलोकनम्॥ ९३॥

त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे ।
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षुः ॥ ९४ ॥

त्रिफलसलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूग्रे ।
प्रतिदिनमथ तप्तं सप्तवा सीसमेकम् ।
प्रणिहितमथ पश्चात् कारयेत् तच्छलाकाम् ॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेतानर्मपैच्छिल्यरोगान् ।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥ ९५ ॥

चिञ्चापत्ररसं निधाय विमले चौडुम्बरे भाजने
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं विशोष्यातपे ।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जनं शस्यते
काचार्मार्जुनपिच्चिटे सतिमिरे स्रावञ्च निर्वापयेत् ॥ ९६ ॥

त्रिफलेत्यादि ।—त्रिफलाया क्वाथः, भृङ्गराजस्य स्वरसः, महौषधं शुण्ठी तस्याः क्वाथः; नागं सीसकम् । एतत्सप्तावावर्त्त्य त्रिफलाक्वाथादावेकैकस्मिन् तेन सीसकं सप्तधा निर्वाप्य तेन सीसकेन शलाका कर्त्तव्या, तया तिमिराञ्जनलिप्तया केवलया वा प्रस्तरादिघृष्टया अञ्जनं कार्य्यमिति पारम्पर्य्यो भाविप्रयोगदर्शनात् ॥ ९४ ॥

त्रिफलेत्यादौ ।—हविषि च विषकल्के इति विषमात्रकद्रव्यं कल्करूपं तत्र तादृशि हविषि । अतएव वृन्दाटे "हविषि च विषमिश्रे" इत्युक्तम् । वाग्भटेऽपि "सविषाज्यमजापयः" इत्युक्तम् । मधुग्रे इति प्रचुरे मधुनि, अन्ये तु मधुशब्देन यष्टिमधु वदन्ति । उक्तं हि वाग्भटे—"वराजलं भृङ्गजलं सविषाज्यमजापयः । यष्टीरसश्च यत् सीसं सप्तकृत्वः पृथक् पृथक्" इति । साञ्जना तिमिराञ्जनेन सहिता, व्यञ्जना तद्रहिता । करकरिका वालुकाभिभृतनेत्रवेदनावत् वेदना ॥ ९५ ॥

चिञ्चेत्यादौ ।—औडुम्बरे भाजने ताम्रादिपात्रे । गौञ्जं मूलं काकचिञ्चिकामूलम् । विमलाञ्जनं सौवीराञ्जनम् ॥ ९६ ॥

चित्राषष्ठीयोगे सैन्धवममलं विचूर्ण्य तेनाक्षि।
सममञ्जनेन तिमिरं गच्छति वर्षादसाध्यमपि ॥ ९७ ॥
दद्यादुशीरनिर्य्यूहे चूर्णितं कणसैन्धवम्।
तत् स्रुतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने ॥
शीते तस्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥ ९८ ॥
धात्रीरसाञ्जनक्षौद्र-सर्पिर्भिस्तु रसक्रिया।
पित्तानिलाक्षिरोगघ्नो तैमिर्य्यपटलापहा ॥ ९९ ॥
शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम् ॥ १०० ॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम्।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत् ॥
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः।

---

चित्रेत्यादि।— चित्राषष्ठीयोग इति चित्रानक्षत्रयुक्तषष्ठ्याम् ॥ ९७ ॥

दद्यादित्यादि।—वाग्भटस्य। कणेति पिप्पली, छान्दसत्वात ह्रस्वत्वम्। [illegible] इति वस्त्रपरिस्रुते. एतच्चोशीरनिर्य्यूहविशेषणम्। उशीरमूलस्य क्वाथ, कणा [illegible]सैन्धवघृतानि मिलित्वा पादिकानि अष्टमाशानि वा दत्त्वा, पाकात् घनः कार्य्यः। [illegible]ते चास्मिन् पादिक मधु प्रक्षेप्यम्। वैद्यप्रसारके त्वस्या विवरणं यथा—"उशी[illegible] पलद्वय, जलस्य चत्वारः शरावाः, स्थाप्यन्तु शराव एक, पूत तस्मिन् प्रक्षेपाय [illegible]सैन्धवयो. प्रत्येकमष्टमाषक, घृतस्य च कर्ष., पुन पाकेन घनीभूते शीते च [illegible]न कर्ष ॥ ९८ ॥

धात्रीत्यादि।—धात्रीक्वाथे रसाञ्जनचूर्णं घृतञ्च प्रक्षिप्य पुनः पाकात रसक्रिया [illegible]र्य्या। रसक्रियेति घनीभूतक्वाथस्य सञ्ज्ञा। शीते च मधु प्रक्षेप्यम। मानमेषा[illegible]षा पूर्ववदिति ॥ ९९ ॥

शृङ्गवेरमित्यादि।—यष्टिमधुसाधितेन तैलेन मिश्रित शृङ्गवेरभृङ्गराजचूर्णं [illegible] किंवा भृङ्गराजस्वरसे तैलमिश्रिते शृङ्गवेरयष्टिमधुचूर्णं प्रक्षिप्य नस्यं [illegible]यम् ॥ १०० ॥

नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत्॥
ततो गृहे निराबाधे शयितोत्तान एव च।
उद्गारकासक्षवथु-ष्ठीवनोत्कम्पनानि च॥
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणा स्नेहपीतवत्।
त्र्याहात् त्र्याहाद्धावयेत्तु कषायैरनिलापहैः॥
वायोर्भयात् त्र्याहादूर्द्ध्वं स्वेदयेदक्षि पूर्ववत्।
दशरात्रन्तु संयम्य हितं दृष्टिप्रसादनम्॥
पश्चात् कर्म च सेवेत लघ्वन्नञ्चापि मात्रया।
रागस्रावोऽर्बुदं शोथो बुद्बुदं केकराक्षिता॥
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः।
अहिताचारतो वापि यथास्वं तानुपाचरेत्॥
रुजायामक्षिरोगे वा भूयो योगान् निबोध मे॥ १०१॥

---

लिङ्गनाश इत्यादि।—लिङ्गाते ज्ञायतेऽनेनेति लिङ्गं दृष्टिस्तस्य नाशो लिङ्गनाशः। कफोद्भूत इत्यनेन वातजः पित्तजश्च विद्धो न सिध्यतीति दर्शयति। यथावद्विधिपूर्वकमिति विधिश्च विद्धे सुश्रुताद्युक्तः तत्रानुसन्धेयः, स च विस्तारभयान्न लिखित.। दैवकृते छिद्र इति अपाङ्गभागवर्त्तिनः शुक्लभागस्य मध्ये यद्दैवकृतं छिद्रमस्ति, तस्मिन्। तदुक्तं सुश्रुते—"मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा अपाङ्गतः। उन्मील्य नयने सम्यक् छिद्रे दैवकृते ततः। शलाकया तासमध्या व्यधयेत्" इत्यादि। कृष्णात् कृष्णमण्डलात प्रभृति द्वौ शुक्लभागौ त्यक्त्वा मध्ये दैवकृतं छिद्रं यदस्ति, तस्मिन् विध्येदिति। व्यधश्च तथा कर्त्तव्यो यथा एकैव परं त्वग्भिद्यते। सम्यग्व्यधलिङ्गञ्च सुश्रुतेनोक्तं, यथा—"वारिगमे सम्यक्शब्दश्च व्यधने भवेत्। असम्यग्विद्धे तु शोणितागमात्" इति। पट्टवस्त्रेण वेष्टयेदिति। सद्यः सतरोपणलोध्ररक्तचन्दनं त्रिफलाचूर्णं दत्त्वा वस्त्रेण वेष्टनम्, अन्ये तु धत्तूरपिण्डं दत्त्वा वस्त्रेण वेष्टयन्ति। निराबाध इति धूमातपादिरहितस्थाने। शयितोत्तान एवेति एतच्च चक्षुर्द्वयोर्व्यधे ज्ञेयम्; एकतरस्य व्यधे तु विद्धचक्षुर्षोऽन्येन पार्श्वेन शयनं ज्ञेयम्। वाग्भटेऽप्येवमेवोक्तम्। उद्गारेत्यादौ।—उत्कम्पनं कम्पनमेव। तत्कालमिति सप्ताहम्। उक्तं हि वाग्भटे—"क्षवथुका-

कल्किता: सघृता दूर्वा-यवगैरिकशारिवा:।
सुखालेपा: प्रयोक्तव्या रुजारागोपशान्तये ॥ १०२ ॥
पयस्याशारिवापत्र-मञ्जिष्ठामधुकैरपि।
अजाक्षीरान्वितैर्लेप: सुखोष्ण: पथ्य उच्यते ॥ १०३ ॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।
काकोल्यादिप्रतीवापं प्रयुञ्ज्यात् सर्वकर्मसु ॥
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्।
तत: सिरां दहेच्चापि मतिमान् कीर्त्तितां यथा।
दृष्टेरत: प्रसादार्थमञ्जने शृणु मे शुभे ॥ १०४ ॥

---

समुद्गार समाह नाचरेत" इति। ऊर्द्ध्वमिति उत्तानशयनात परम उद्गारादीनि समाह परिहरेदित्यर्थ। यस्तथा संहपीतवदिति संहपीतस्येव आहारा चारादिनियम पूर्ववत इति वर्त्तं वाच्छ्वाद्य। कियन्तं कालमथ विधि काम्य इत्याह ऽशाहमेवमित्यादि।–सयस्येति एवमुत्तानशयनादिना आत्मान नियम्य अनन्तर दृष्टिप्रसादनादि हित पश्चाल्लघुन्नञ्चापि कर्म सेवेतत्यथ। दृष्टिप्रसादनमञ्जनादि लघुन्नञ्चापीति चकाराद्बाह्याभ्यन्तरेऽपि लघून्नविधि समुच्चिनोति। राग इत्यादि।–सुश्रुतस्य। चोष उपताप', चोषवत पीडा वा, अर्बुदम अर्बुदाकारशोथ, बुद्बुद बुद्बुदाकारशोथ। केकराक्षिता वक्रदृष्टिता, टेरनेत्रमिति यावत। शूकराक्षितेति पाठान्तरे शूकरस्येवाधोदृष्टितेत्यर्थ। रोग इत्यादि सुश्रुतस्य यथास्वमिति वातादिप्रत्यनीकादिभि। रुजायामिति चोषादिरूपपीडायाम ॥ १०१ ॥

कल्किता इत्यादि।–वाग्भटस्य। सुखालेपा इति एते समभागेनत्तु समीपे प्रलप इति। रागोऽक्षिलौहित्यम् ॥ १०२ ॥

पयस्येत्यादि।–वागभटस्य। पयस्या क्षीरकाकोली, पत्रं तेजपत्रम। वाग्भटे सुखोष्ण: पथ्य उच्यत इत्यत्र सुखोष्ण: शर्मकृत् पर इति पाठ. ॥ १०३ ॥

वातघ्नेत्यादि।—सुश्रुतस्य। वातघ्नो भद्रदार्वादि:, तेन क्षीरसाधनपरिभाषया सिद्धे पयसि चतुर्गुणे। सर्वकर्मस्विति नस्यपानादिषु। शाम्यतीत्यादि।—सुश्रुतस्य। सिरामिति ललाटस्थां सिरां मोक्षयेत् दहेच्चापीत्यन्वय.। दृष्टे-

मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ।
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च ।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ।
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥ १०५ ॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्ववद्भिषक् ॥ १०६ ॥
रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥ १०७ ॥
नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ।
गुड़िकाञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम् ॥ १०८ ॥

नदीजशङ्खत्रिकटून्यथाञ्जनम्
मनःशिला द्वे च निशे गवां यकृत् ।
सचन्दनेयं गुड़िकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥ १०९ ॥

---

रित्यादि ।—सुश्रुतस्य । क्षत इति शिराव्यधदाहानन्तरम् । व्यधदाहाभ्यां दो-
षेण वा कलुषितायां दृष्टेः प्रसादनाय अञ्जनम् । अञ्जने इति अञ्जनद्वयम् ॥१०४॥

मेषशृङ्गी मेषशृङ्गी, पुत्रञ्जीवकश्च इत्यन्ये । आवपेदिति आलिप्य स्थाप-
येत् ॥ १०५ ॥

स्रोतोजमित्यादि ।—सुश्रुतस्य । स्रोतोजं रसाञ्जनम् । पूर्ववदिति छागी-
क्षीरेण पिष्ट्वा ताम्रपात्रे सप्ताहं स्थापयेदित्यर्थः ॥ १०६ ॥

रसाञ्जनमित्यादौ ।—गोशकृद्रसेन वर्त्तिः कार्य्या ॥ १०७ ॥

नलिनेत्यादि । नलिनं पद्मम्, उत्पलं नीलोत्पलम्, तयोः किञ्जल्कः । गोशकृ-
द्रसेति गोशकृद्रसेन गुड़िकाः कार्य्या इत्याहुः ॥ १०८ ॥

नदीजेत्यादि ।—सुश्रुतस्य । नदीजं सैन्धवम्; शङ्खं शङ्खनाभिः, शङ्खस्थाने
शिम्बीति पाठे शिम्बी हरितमुद्गः; अञ्जनं रसाञ्जनम् । गवां यकृत् शुक्लं शकृ-
दित्यपि पाठान्तरम् ॥ १०९ ॥

कणाच्छागयकृन्मध्ये पक्वा तद्रसपेषिता।
अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम् ॥ ११० ॥

पचेत्तु गौधं हि यकृत् प्रकल्पितम्
प्रपूरितं मागधिकाभिरग्निना।
निषेवितं तद् यकृदञ्जनेन च
निहन्ति नक्तान्ध्यमसंशयं खलु ॥ १११ ॥

दध्ना निघृष्टं मरिचं रात्र्यन्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योतभक्षणञ्च तदर्थकृत् ॥ ११२ ॥

शफरीमत्स्यचारो नक्तान्ध्यमञ्जनतो निहन्ति।
तद्वद्रामठटङ्कणकर्णमलश्चैकशोऽञ्जनान्मधुना ॥ ११३ ॥
कंशराजान्वितं सिद्धं मत्स्याण्डं हन्ति भक्षितम्।

---

कणेत्यादि।—छागयकृत् विदार्य्य तन्मध्ये पिप्पलीं स्थापयित्वा उत्स्वेदयेत्। पक्वा उत्स्विन्ना। तद्रसपेषितेति उत्स्वेदाम्बुना पिष्टा वर्त्तिः कार्य्येत्यर्थः। तद्वत् सक्षौद्रमूषणमिति। ऊषणं मरिचम्। पूर्ववत् छागयकृत्खण्डं विदार्य्य तन्मध्ये मरिचं स्थापयित्वा उत्स्वेदयेत्, तत आकृष्य उत्स्वेदावशिष्टजलेन तन्मरिचं सम्पेष्य वर्त्तिः कार्य्येत्यर्थः ॥ ११० ॥

पचेदित्यादि।—पचेदुत्स्वेदयेत्। गौधं गोधाभवं यकृत्; पिप्पलीपूरणार्थं प्रकल्पितमिति पठितम्। अग्निनेत्यत्र अम्बुनेति पाठान्तरं अम्बुना स्वेदनं बोध्यम्। अत्र गोधायकृदर्द्धपाचितमित्यपि पाठः। निषेवितं यकृदिति, तथाभूतं यकृत् खादितमित्यर्थः। पिप्पली त्वञ्जनविधिना देयेति कश्चित्। अन्ये तु उत्स्विन्नकणासहितं यकृत् भक्षणविधिना अञ्जनविधया च विहितं नक्तान्ध्यं हन्तीत्याहुः। अपरे तु उत्स्विन्नकणासहितं यकृत् अञ्जनविधया निषेवितं सन्नक्तान्ध्यं हन्तीति व्याचक्षते। खलुशब्द एवार्थे, असंशयमेवेत्यर्थः ॥ १११ ॥

दध्नेत्यादि योगः स्पष्टः ॥ ११२ ॥

शफरीत्यादि।—शफरीमत्स्यमन्तर्धूमं दग्ध्वा मधुना सन्ध्यायामञ्जनं देयम्। ११३ ॥

नक्तान्ध्यं नियतं नृणां सप्ताहात् पथ्यसेविनाम् ॥ ११४ ॥

त्रिफलाघृतम्—

त्रिफलाकाथकल्काभ्यां सपयस्कं शृतं घृतम्।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ ११५ ॥

महात्रिफलाद्यं घृतम्—

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥
अजाक्षीरं गुडूच्याश्च आमलक्या रसं तथा।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम्।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥
तत् साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत्।
ऊर्द्ध्वपानमधःपानं मध्ये पानञ्च शस्यते।
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति।
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्वुदे ॥
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे।
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ॥
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम्।
स्रवतो वातपित्ताभ्यां सकण्डूासन्नदूरदृक् ॥

केशराजेत्यादि।—रोहितमत्स्यादीनामङ्गं केशराज दत्त्वा उपदेशात् काञ्जिकेन पक्का भक्ष्यम्। इतः परं घृतान्युच्यन्ते ॥ ११४ ॥

त्रिफलेत्यादौ—चतुर्गुणेन त्रिफलाक्वाथेन व्यवहरन्ति। सपयस्कमिति क्षीरं घृतसमम् ॥ ११५ ॥

महात्रिफलाद्यते।—वृषस्येति वासकस्य पत्ररसः प्रस्थः। मधुपर्णी गुडूची। ऊर्द्ध्वपानादिविधिर्भोजनापेक्षया ज्ञेयः। वातपित्तकफेष्विति वातपित्तकफोद्भूतेषु

सुप्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम्।
सर्वनेत्रामयं हन्यात् त्रिफलाद्यं महद् घृतम् ॥ ११६ ॥

त्रैफलं घृतम्—

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम्।
कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम्।
तिमिरं दोषमास्रावं कामलां काचमर्वुदम् ॥
विसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च।
खालित्यं पलितञ्चैव केशानां पतनं तथा।
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ॥
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा।
न चैवास्मात् परं किञ्चिद्दृषिभिः काश्यपादिभिः।
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥ ११७ ॥

फलत्रिकाभीरुकषायसिद्धम्
कल्केन यष्टीमधुकस्य युक्तम्।

---

मवरोगेषु तथा कफवातप्रदूषणात् जातामदृष्टिं मन्ददृष्टिमापकर्षतीत्यर्थः। तथा वातपित्ताभ्यां सवतश्चक्षुः पर्य्यामिति शेषः। तथा सकचडूासद्रूग्हक्‌य, तस्यापि ग्रतुल्यदृष्टिकारकमिति सोपस्कारं व्याख्येयम्। पुनः सर्वनेत्रामयं हरत्येव कथनं सर्वनेत्रामयहरणस्यावश्यकत्वोपदर्शनार्थमिति ज्ञेयम्। ११६ ॥

त्रिफलेत्यादि।—त्रिगुणं त्रिफलारसमिति घृतप्रस्थविशेषणम्। विषमज्वरमर्माणीति विषमज्वरं तथा मर्माणीति विशेषः। ॥ ११७ ॥

फलत्रिकेत्यादौ।—अभीरुः शतमूली। तत्र फलत्रिकस्य क्काथः, शतमूल्याश्च

सर्पिः समं क्षौद्रचतुर्थभागम्
हन्यात् त्रिदोषं तिमिरं प्रवृद्धम् ॥ ११८ ॥

भृङ्गराजाद्यं तैलम्—

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुड़वं पक्वं सद्यो दृष्टिं प्रसादयेत्।
नस्याद्वलीपलितघ्नं मासेनैतन्न संशयः ॥ ११९ ॥

गवां शकृत्क्वाथविपक्वमुत्तमम्
हितञ्च तैलं तिमिरेषु नस्ततः।
घृतं हितं केवलमेव पैत्तिके
तथाक्षतैलं पवनासृगुत्थयोः ॥ १२० ॥

नृपवल्लभं तैलं घृतञ्च—

जीवकर्षभकौ मेदे द्राक्षांशुमती निदिग्धिका बृहती।
मधुकं बला विड़ङ्गं मञ्जिष्ठा शर्करा रास्ना ॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम्।
पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः ॥

---

स्वरस इत्यर्थः। सममिति साम्यत्वर्थः। उक्तं हि मेदिनीकरकोषे—"सवमः समानेषु समं स्यादभिधेयवत्" इति। अन्ये तु सममिति सहार्थे, यथोक्तकषायादिना सह सिद्धमित्यर्थं इत्याहुः ॥ ११८ ॥

गवामित्यादि।—सुश्रुतस्य। गवां शकृत् क्वाथविपक्वमिति गोशकृतः क्वाथोऽष्टगुणाम्बुना कार्यः; स्नेहाच्चतुर्गुणं देयमिति परिभाषा व्यवहारबाधिता। घृतं हि केवलमिति केवल्यमित्यसंस्कृतम्। नस्तत इति इहापि सम्बध्यते। अत्र तैलञ्च सुश्रुते वातव्याधावुक्तम्। कस्मिंश्चित् सुश्रुतपुस्तके "घृतं हितं केवलमेव पैत्तिके" इत्यस्यानन्तरम् "अजाविकं यन्मधुरैर्विपाचितं तैलं स्थिरादौ मधुरैश्च यद्गणैः" इति पाठो दृश्यते, स च पाठस्तथाविधाकारपुस्तकेषु न दृश्यते, टीकाकृद्भिश्च न प्रामाणिकैर्लिखित इति कृत्वा अनार्ष इति ज्ञेयम् ॥ ११९ ॥ १२० ॥

जीवकेत्यादौ।—अंशुमती शालपर्णी। अक्षांशिकैरिति अक्षः कर्षस्तस्यांशस्तै

तैलं यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम्।
आत्रेयनिर्मितमिदं तैलं नृपवल्लभं सिद्धम्॥
तिमिरं पटलं काचं नक्ताख्यमर्वुदं तथाख्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति च नीलिकां व्यङ्गम्॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम्।
कासं श्वासं शोषं हिक्कां स्तम्भं तथात्ययं नेत्रे।
मुखजैह्म्यमर्द्धभेदं रोगं बाहुग्रहञ्च शिरःस्तम्भम्।
रोगानथोर्द्ध्वजत्रोः सर्वानचिरेणैतद्विनाशयति॥
पक्तव्यं कुड़वं तैलं नस्यार्थं नृपवल्लभे।
अत्रांशैः शाणिकैः कल्कैरन्ये भृङ्गादितैलवत्॥ १२१॥

अभिजितं तैलम् -

तैलस्य पचेत् कुड़वं मधुकस्य पलेन कल्कपिष्टेन।
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुक्तम्॥
कृत्वाभिजितं नाम्ना तैलं तिमिरं हन्यान्मुनिप्रोक्तम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेत्तथा॥ १२२॥
अर्म तु छेदनीयं स्यात् कृष्णप्राप्तं भवेद्यदा।
वड़िशविद्धमुन्नम्य त्रिभागञ्चात्र वर्जयेत्॥ १२३॥

---

भाग माषकचतुष्टयं, तेन शाणिकैरित्यर्थः। तेन सर्वं मिलित्वा द्वादशमाषिका-धिक पलं भवति; अनेन तैलकुडवः साध्यः; नस्यार्थं तैलकुडवः पच्यत इति सम्प्रदायः। कुडवश्चाष्टौ पलानि। न च कल्कस्तु स्नेहपादिक इत्यनेन विरोधः, कल्कपलेनापि तैलकुडवपाकदर्शनात्, तथा पूर्वोक्तभृङ्गराजतैले, तथा वक्ष्यमाणेऽभिजितनाम्नि तैले च। किंवा अत्राशिकैरिति, कार्षिकैः, अस्मिन् पक्षे कल्कस्य बहुत्वात् तैलप्रस्थः साध्यः। व्यवहारस्तु पूर्वेणैव। यदि वा सर्पिरिति पैत्तिके तिमिरे सर्पिः पक्तव्यम्। दृष्टिजेष्विति दृष्टिमण्डलरोगेषु॥ १२१॥ १२२॥

अर्मेत्यादि।—अर्म नामा इति ख्यातोऽक्षिरोगविशेषः। अर्म छेदनीय-

पिप्पलीत्रिफलालाक्षालोहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुडिकाञ्जनमिष्यते॥
अर्म सतिमिरं काचं कण्डूं शुक्रं तदर्जुनम्।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः॥ १२४॥

पुष्पाख्यतार्क्ष्यजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः।
पिष्टैश्च माक्षिकरसेन रसक्रियेयम्
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान्॥ १२५॥

कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनैः।
स्वादुशीतैः प्रशमयेच्छुक्तिकामञ्जनैस्ततः॥ १२६॥

प्रवालमुक्तावैदूर्य्य-शङ्खस्फटिकचन्दनम्।
सुवर्णरजतं क्षौद्रमञ्जनं शुक्तिकापहम्॥ १२७॥

शङ्खः क्षौद्रेण संयुक्तः कतकः सैन्धवेन वा।
सितयार्णवफेनो वा पृथगञ्जनमर्जुने॥ १२८॥

---

मिति मण्डलाग्रेणेति शेषः। समुन्नम्येति सूच्याग्रेणेति शेषः। सूच्यग्रेण समुन्नम्य उत्तोल्य अनन्तरं वड़िशेन विद्ध्वा मण्डलाग्रेण छेदयेदित्यर्थः। त्रिभागमिति तृतीय भागं कनीनिकां वर्जयेदित्यर्थः। उक्तं हि "रक्षन् कनीनिकां छिन्द्याच्चतुर्भागाव शेषितम्" इति॥ १२३॥

पिप्पलीत्यादि। भृङ्गराजरसेनैव पेषणमञ्जनञ्चेत्याहुः। गुड़िकाञ्जनं वर्त्ति-रित्यर्थः। अजका अक्षिरोगभेदः॥ १२४॥

पुष्पाख्येत्यादि।— पुष्पाख्यं पुष्पकाशीशं; तार्क्ष्यजं रसाञ्जनं; सिता शर्करा शङ्खः शङ्खनाभिः; गैरिकशिला गैरिकमेवेति श्रीकण्ठः। माक्षिकरसेनेति मधुरूप-द्रवेण। रसक्रियेयमिति एतत् सर्वं चूर्णं प्रचुरतरमधुना समालोड्य वंशनलिकायां स्थाप्यमेतत् रसक्रियाविधानं वदन्ति। अतएव पिष्टं क्षौद्रेण चालोड्य इत्यादि वचनमपि पठन्ति॥ १२५॥

कौम्भस्येत्यादि।—कौम्भं सर्पिर्दशवर्षस्थितं घृतम्॥ १२६॥

प्रवालेत्यादि।—क्षौद्रेण पेषणमञ्जनञ्च॥ १२७। १२८॥

पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये ।
वैदेहीसितमरिचं सैन्धवं नागरं समम् ॥
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥ १२९ ॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ १३० ॥

पथ्याक्षधात्रीफलमध्यबीजै-
स्त्रिद्व्येकभागैर्विदधीत वर्त्तिम् ॥
तयाञ्जयेदश्रुमतिप्रगाढ़-
मक्ष्णोर्हरेत् कष्टमपि प्रकोपम् ॥ १३१ ॥

स्रावेषु त्रिफलाक्काथं यथादोषं प्रयोजयेत् ।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥ १३२ ॥

---

पैत्त विधिमिति पित्ताभिष्यन्दोक्तविधिम । उक्त हि "पित्ताभिष्यन्दशमनो विधश्चार्जुनशान्तिकृत" इति । वैदेहीत्यादि ।—वैदेही पिप्पली, सितमरिच शोभाञ्जनबीजम् । इति शुक्लजषु ॥ १२९ ॥

भित्त्वेत्यादि ।—सुश्रुतस्य । भित्त्वेति व्रीहिमुखेणेति शेष । यद्यप्युपनाहः केवल कफज एव, तथापि कफजमिति स्वरूपपर ज्ञेयम । पिप्पलीमधुसैन्धवैरित्यनन्तर प्रतिसारणमिति शेष । अत्र लेखनानन्तर प्रतिसारण ज्ञेयम् । उक्त हि वाग्भटे —' उपनाह भिषक स्विन्न भिन्न व्रीहिमुखेन तु । लेखयेत मण्डलाग्रेण ततश्च प्रतिसारयेत" इति । अन्ये तु भेदनप्रतिसारणाभ्यामप्रशमे लेखन प्रच्छनञ्च कुर्य्यादित्याहु ॥ १३० ॥

पथ्येत्यादौ ।—फलमध्यबीजपद पथ्यादिभि प्रत्येक सम्बध्यते । त्रिद्व्येकभागैरित्य पथ्याबीजादिषु यथाक्रम योज्यम्, अत्र पानीयेन पेषणम । मधुना त्वञ्जनमिति व्यवहरन्ति ॥ १३१ ॥

स्रावेष्वित्यादौ ।—प्रयोजयेदिति पिबेत । यथादोषमिति क्षौद्रेण पित्तरक्ते, आज्येन वाते पित्ते रक्ते च, पिप्पल्या तु कफे । एभिरप्रशमे शिराव्यध इति ॥ १३२ ॥

त्रिफलेत्यादि ।—सुश्रुतस्य । त्रिफलाक्काथगोमूत्रे मिलित्वा पलचतुष्टये

त्रिफलामूत्रकाशीश-सैन्धवैः सरसाञ्जनैः।
रसक्रियाक्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम्॥ १३३॥
स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम्।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्॥
रसाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्मवित्।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः॥
स्वेदयेद् घृष्टयाङ्गुल्या हरेद्रक्तं जलौकसा।
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च।
प्रतिसारणमेकैकं भिन्नेन गणे इष्यते॥ १३४॥
निमिषे नासया पेयं सर्पिस्तेन च पूरणम्।
स्वेदयित्वा विषग्रन्थिं छिद्राण्यस्य निराश्रयम्।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्॥ १३५॥

---

काशीशसैन्धवरसाञ्जनं पलमानं प्रक्षिप्य पुन. पाकेन घनतामापाद्य रसक्रिया विधेय किन्तु काशीशरसाञ्जनापेक्षया सैन्धवमल्पमानं व्यवहरन्ति वृद्धाः। मूत्रस्थाने तुत्थं ति निश्चलः पठति। तन्मते त्रिफलाक्वाथस्यैव पलचतुष्टयम्। किन्तु सुश्रुते बहुपुस्तकेषु च मूत्रपाठ एव दृश्यते। भिन्ने स्यात प्रतिसारणमिति रसाञ्जनचूर्णमधुभ्यामेव प्रतिसारणं ज्ञेयम। इति सन्धिजेषु॥ १३३॥

प्रतिसार्य्याञ्जनैरिति अञ्जनैः कज्जलैः। रोचनेत्यादि।—सुश्रुतस्य। क्षारं यवक्षारः। रोचनादिषु प्रत्येकं क्षौद्रयोगः। प्रतिसारणमिह व्रणमुर्खे दानम न तु घर्षणम्॥ १३४॥

निमिष इत्यादौ।—सर्पिस्त्रिफलासिद्धमिति केचित्। अन्ये त्वपक्वमित्याहुः पूरणमिति तेन सर्पिषा चक्षुःपूरणमित्यर्थः। स्वेदयित्वेत्यादौ।—विषग्रन्थिमिति विषवत्मोव्याधिरोगम्। निराश्रयमिति आश्रयं स्फोटकः निरवशिष्टं यथा स्यात् तथा भिन्त्वत्यर्थः। अल्पेऽप्याश्रये सति व्याधेरस्य पुनः सम्भवात्। उक्तं हि— 'विषग्रन्थिं तथा भिन्द्याद यथा स्यान्नाश्रयः क्वचित्। पुनः प्रवर्द्धते यस्मादल्पोऽप्यस्याश्रयं स्थितः' इति॥ १३५॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।
पुनः पुनर्विरेकञ्च पिल्लरोगातुरो भजेत् ॥
पिल्ली स्निग्धो वमेत् पूर्वं शिराव्यधं स्रुतेऽसृजि ।
शिलारसाञ्जनव्योषगोपित्तैश्चक्षुरञ्जयेत् ॥ १३६ ॥
हरितालवचादारुसुरसारसपेषितम् ।
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥ १३७ ॥
भावितं वस्तमूत्रेण सस्नेहं देवदारु च ।
काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान् ।
धूपयेत् पिल्लरोगार्त्तं पतन्ति क्रिमयोऽचिरात् ॥ १३८ ॥
रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥
एतत् समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ १३९ ॥
मस्तकास्थि चुलुक्यास्तु तुषोदलवणान्वितम् ।
ताम्रपात्रेऽञ्जनं घृष्टं पिल्ले प्रक्लिन्नवर्त्मनि ॥ १४० ॥

---

वर्त्मेत्यादिना पिल्लरोगचिकित्सामाह, वर्त्मावलेखमिति ।—कर्कशशाखा... दपत्रेण वर्त्मघर्षणम् । पिल्ललक्षणञ्च पूर्वमेवोक्तम् । वाग्भटेन तु कृतग्रका... मष्टादशानां पिल्लाख्या कृता । यथा—"एतेऽष्टादश पिल्लाख्या दीर्घकालानु... न" इति । पिल्लीत्यादौ ।—स्नेहोऽपि बोध्यो वमनाङ्गत्वात् । शिरा... नाड़ी । शिलेत्यादौ ।—गोपित्तस्याप्राप्तौ गोरोचनया सर्वत्र व्यवहारः ॥ १३६ ॥

हरितालेत्यादौ ।—सुरसारसपेषितमिति सुरसा पर्णाशभेद सुरभिमञ्जरि... । प्रतिसारणमेतत् । अभयेत्यादौ ।—तगर तगरपादुका ॥ १३७ ॥

भावितमित्यादौ ।—स्नेहो घृत चक्षुष्यत्वात् । एतदपि प्रतिसारणम् । काक... चीत्यादौ । फलमेकमेव घृतलिप्तं धूपार्थम् । धूपनं चक्षुर्वासमाच्छाद्य कार्य्यम् । ...न्ये तु एकेन केवलेन भावनादिरहितेन धूपनमित्याहुः ॥ १३८ ॥

रसाञ्जनमित्यादौ ।—सर्जरसो यक्षधूपः । अत्र पेषणं मधुनैव ॥ १३९ ॥

ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम् ।
आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् ॥ १४१ ॥
हरिद्रे त्रिफलां लोध्रं मधुकं रक्तचन्दनम् ।
भृङ्गराजरसे पिष्ट्वा घर्षयेल्लौहभाजने ॥
तथा ताम्रे च सप्ताहं कृत्वा वर्त्तिं रजोऽथवा ।
पिच्चिटी धूमदर्शी च तिमिरोपहतेक्षणः ।
प्रतिनिश्यञ्जयेन्नित्यं सर्वनेत्रामयापहम् ॥ १४२ ॥

चूर्णाञ्जनम्—

मञ्जिष्ठामधुकोत्पलोदधिकफत्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरिमृत्तालीशपुष्पाञ्जनैः ।
सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषोः
कण्डूक्लेदमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥१४३॥
तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।

---

मस्तकास्थीत्यादौ ।—चुलुकी शिशुमारः, तस्य मस्तकास्थि, तुषोदकं काञ्जिकम् ॥ १४० ॥

ताम्रेत्यादौ ।—गुहा पृश्निपर्णी, तस्या मूलं ताम्रपात्रे सप्ताहं घर्षयेदिति शेषः। अन्ये तु गुहास्थाने स्नुहीति पठित्वा स्नुहामूलमाहुः। तत्र प्रक्षालनेन क्षीररहितं कृत्वा अञ्जनविधौ प्रयोज्यमिति वदन्ति। व्यवहारस्तु पूर्वेणैव ॥ १४१ ॥

हरिद्रेत्यादौ।—तथेत्यनेन ताम्रपात्रे सप्ताहं घर्षयेदिति योज्यम्। अन्ये तु तथा ताम्रे चेति विकल्पार्थमेतद्वचनम्, न समुच्चयार्थः; तेन लौहभाजने ताम्रभाजने वा घर्षयेदित्याहुः। रजोऽथवेति एतेन चूर्णाञ्जनमप्युपदिशन्ति ॥ १४२ ॥

मञ्जिष्ठेत्यादौ।—उदधिकफः समुद्रफेनः; सेव्यमुशीरम्; पत्रं तमालपत्रम् तेजपत्रमित्यन्ये; पुष्पं पुष्पकाशीशम्; अञ्जनं रसाञ्जनम्। तालीशपत्राञ्जनैरित्यपि पाठः। वर्त्तिरियं चूर्णाञ्जनं वा ॥ १४३ ॥

तत्तेकेनोपदेहाश्रुकण्डूशोथांश्च नाशयेत् ॥ १४४ ॥
याप्यः पक्ष्मोपरोधश्च रोमोद्धरणलक्षणैः।
वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥
प्रवृद्धान्तर्मुखं रोम सच्छिद्रेणोद्धरेच्छनैः।
सन्दंशेनोद्धरेद् दृष्ट्वां पक्ष्मरोमाणि बुद्धिमान्।
रक्तवर्त्मनि दहेत् पक्ष्मा तप्तहेमशलाकया।
पक्ष्मरोगे पुनर्नैवं कदाचिद्रोमसम्भवः ॥ १४५ ॥

उत्क्लिष्टिनो बहुलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठित न्त्विह बद्धवर्त्म।
क्लिन्नञ्च पोथकियुतन्त्विह वर्त्म यच्च
कुम्भीकिनी च सह शर्करयावलेख्याः ॥
श्लेष्मोपनाहनगणौ च विषञ्च भेद्यो
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥ १४६ ॥

घृतसैन्धवचूर्णेन कफानाहं पुनः पुनः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ १४७ ॥

---

तत्तकस्येत्यादि।—वाग्भटस्य। श्वेतमरिचानि शोभाञ्जनवीजानि विंशति त्याकृतिमानात्। उपदेहः पिच्चोडिका ॥ १४४ ॥

याप्य इत्यादौ।—रोमोद्धरणलक्षणैरित्यनन्तरं कर्मभिरिति शेषः। पक्ष्मापरोधः रोमोद्धरणलक्षणैः कर्मभिर्याप्यः यापनीयः। लक्षणैरित्यत्र लेखनैरित्यपि पाठान्तरम्। वर्त्मन्युपचितमिति पक्ष्मलोमेति शेषः। केन प्रकारेणोद्धरेदित्याह सन्दंशेनेत्यादि।—दृष्ट्वा पक्ष्मरोमाणीत्यत्र दृष्टा पक्ष्मरोमाणीत्यपि पाठान्तरम्। रक्तवर्त्मनीत्यादौ।—पक्ष्मेति पक्ष्मस्थानम्। उक्तं हि "पक्ष्मरोगे हृते लोम्नि दाहं तत्स्थानके भिषक्। तप्तया हेमसूच्या तु युञ्ज्याद्वाप्यथवाष्टकम्" इति ॥ १४५ ॥

इदानीं नेत्ररोगेषु मध्ये ये च लेख्या ये च भेद्यास्तानाह उत्क्लिष्टिनीत्यादि।—उत्क्लिष्टं तत्त्व। बहुलकर्दमवर्त्मनी चेति बहुलवर्त्म कर्दमवर्त्म चेत्यर्थः। श्यावञ्चेति श्याववर्त्म, तथा क्लिन्नञ्च क्लिन्नवर्त्म। विषमिति विषग्रन्थिः ॥ १४६ ॥

पटोलामलकक्काथैराश्चोतनविधिर्हितः।
फणिज्झकरसोनस्य रसैः पोथकिनाशनः॥ १४८ ॥
आनाहपिडकां स्विन्नां तिर्य्यग्भिस्वाग्निना दहेत्।
अर्शस्तथा वर्त्म नाम्ना शुष्कार्शोऽर्बुदमेव च।
मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषक् शनैः॥ १४९॥
सिन्धूत्थपिप्पलीकुष्ठपर्णिनीत्रिफलारसैः।
सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी।
पोथकीवर्त्मोपरोधक्रिमिग्रन्थिकतूणके॥ १५० ॥

इति नेत्ररोगचिकित्सा।

---

## अथ शिरोरोगचिकित्सा।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान्।
पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान्॥ १ ॥

---

घृतेत्यादि। घृतमिश्रसैन्धवचूर्णेन विलिखेत प्रतिसारयेत। मण्डलाग्रेण शस्त्रविशेषेणेत्यर्थः॥ १४७॥

पोथकीचिकित्सामाह पटोलेत्यादि।—फणिज्झक पर्णाश। रसरित्यनेन पिष्ट इति शेष। फणिज्झकपत्र रसोनस्य रसं पिष्टमाश्चोतनमित्यर्थः। १४८

आनाहपिडकामित्यादौ।—दहेदिति छेद। अर्श प्रभृतीनान्तु छिन्द्यादित्यन्वय॥ १४९॥

सिन्धूत्थादीनां प्रत्येक सम चूर्णं गृहीत्वा त्रिफलारसेन भावयित्वा सुरामण्डेन वर्त्तिं कार्य्येत्यर्थ॥ १५०॥

इति नेत्ररोग चिकित्साविवृति।

---

शिर सश्रितकर्णनासानयनगतरोगाणां चिकित्सितमुक्ता सम्प्रति तदाश्रय शिरसो रोगाणां चिकित्सामाह वातिक इत्यादि। स्नेहोऽत्र वातहरद्रव्यक

कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ २ ॥
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ।
आशिरो व्यायतं चर्म कृत्वाष्टाङ्गुलमुच्छ्रितम् ॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ।
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ॥
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा ।
शिरोवस्तिर्जयत्येषा शिरोरोगं मरुद्भवम् ॥
हनुमन्याक्षिकर्णार्त्तिमर्दितं मस्तकम्पनम् ।
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च ॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ।
एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे ॥ ३ ॥
पैत्ते घृतं पयःसेकाः शीता लेपाः सनावनाः ।

---

...दभ । उपनाह स्वेदविशेष । अन्ये तूपनाह शिरोवस्तिभेदमाहु यत्र ...क उच्यते । तन्त्रान्तरे हि मस्तिष्क उपनाह शिरोवस्तिविशेषत्वेनोक्त, । ... 'मस्तिष्के ऽष्टाङ्गुल पट्ट वस्तौ तु द्वादशाङ्गुलम' इति ॥ १ ।

मुचुकुन्द सं हसिड इति निश्चल, किन्तु पश्चिमे स्वनामख्यात एव । २ ॥

...वमन्तो वातपैत्तिके स्वल्पा, वातकफे तु महती । आशिरोव्यायतमिति ।-...वमणा शिरोवेष्टन भवति तावन्मात्र चर्म ग्राह्यमित्यर्थ । तैलैरिति यथा-...दोषितैः पूरयेदित्यङ्गुलोच्छ्रया । घृतमिति तन्त्रान्तरदर्शनात् । आरुज ...धारयेदिति वाते यामं, पैत्तिके यामार्द्धम । कफे वक्ष्यमाणपञ्चमात्राशतानी... वचन भिन्नकर्तृकत्वान्मतभेदाविरुद्धं बोध्यम । मन्त्राव निमर्दोन्म षादि, । ...ह—"निमेषोन्मेषणं पुंसा स्फोटन वापि चाङ्गुलेः । अन्तरस्य लघोर्वापि ...स्वरोच्चारण भवेत्" इति । व्यवहारस्तु कुटिकयेति । कफजे तु शिरोवस्ति ...र्दिभिरजिते कफे वातस्य चानुबन्धे सति ज्ञेय, । केवलकफे वस्त्यानौचित्यात् । ...र्धेति मात्राक्रम: ॥ ३ ॥

जीवनीयानि सर्पींषि पानाभ्यङ्गेऽपि पित्तनुत् ॥
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥ ४ ॥
शतधौतघृताभ्यङ्गः शीतवातादिसेवनम् ।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये ॥ ५ ॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम् ॥ ६ ॥
मृणालबिसशालूकचन्दनोत्पलकेशरैः ।
स्निग्धशीतैः शिरो दद्यात् तद्वदामलकोत्पलैः ॥ ७ ॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम् ।
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे ॥ ८ ॥
त्वक्पत्रशर्करारास्ना नावनं तण्डुलाम्बुना ।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥

पंत्त इत्यादौ ।—शीता इति सेकलेपयोर्विशेषणम् । जीवनीयानि सर्पींषि जीवनीयदशककाथकल्कसाधितानि । मृद्वीकेत्यादि मृद्वीकेक्षुरसौ त्रिवृच्चूर्णप्रक्षेपात् विरेककारकौ त्रैयौ त्रिफलाक्वाथस्तु स्वत एवेत्याहुः । क्षीरघृते चापि त्रिवृदादिसिद्धे विरेके ॥ ४ ॥

शतधौतघृताभ्यङ्ग इति ।—शतधौतेन घृतेन शिरसोऽभ्यङ्गो ज्ञेयः । यतो हि—"सर्पिषः शतधौतस्य शिरसि धारणं हितम्" इति । शीतस्पर्शा इत्यादि शीतस्पर्शाः कुमुदोत्पलादयः ॥ ५ ॥

चन्दनेत्यादौ ।—व्याघ्रनखो नखीभेदः । शृतैरिति चन्दनादिक्वाथे, न तु चन्दनादिशृतैः क्षीरैरित्याहुः ॥ ६ ॥

मृणालेत्यादौ ।—बिसं बालमृणालम्; उत्पलकेशरं किञ्जल्कः । स्निग्धशीतैः स्निग्धत्वञ्च घृतयोगात् । तद्वदित्यनेन घृतयोगात् स्निग्धत्वमतिदिशन्ति ॥ ७ ॥

यष्ट्याह्वेत्यादौ ।—अनन्ता अनन्तमूलम्; एषां कल्केन चतुर्गुणक्षीरेण पक्तव्यम् । एवं शर्करा-द्राक्षा यष्टिमधुकल्केन चतुर्गुणक्षीरेण घृतान्तरं पक्तव्यमित्यर्थः ॥ ८ ॥

रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम्।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम्॥ ९॥
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीड़ा धूमाश्च तीक्ष्णोष्णकवड़ा हिताः॥
क्षयजे पाययेत् सर्पिः पुराणं स्वेदयेत्ततः।
मधूकसारेण शिरः स्निग्धस्यास्य विरेचयेत्॥ १०॥
कृष्णाब्दशुण्ठीमधुकशताह्वोत्पलपाकलैः।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः॥ ११॥
देवदारु नतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत्॥
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया।
सर्पिःपानं विशेषेण पुराणन्त्वादिशन्ति हि॥ १२॥
त्रिकटुकपुष्कररजनीजीवकतुरङ्गगन्धानाम्।

---

रक्तपित्तेत्यादि।—त्वक् तत्र तेजपत्रम्। क्षीरसर्पिरित्यादि।—सुश्रुतस्य। क्षीरोत्थं सर्पिः क्षीरसर्पिः। शुभा इति सप्तम्याः। जाङ्गलाः शुभा इत्यत्र जाङ्गलाजा इति पाठान्तरं तन्त्रान्तरे, तथाविधाकारसुश्रुतादिपुस्तकेष्वदर्शनात् अप्रमाणीयमिति। शीतोष्णयोश्च व्यत्यास इति।—शीता क्रियां कृत्वा उष्णां, उष्णाञ्च कृत्वा शीतेत्यर्थः। रक्तजेऽप्येतदुष्णक्रियाविधानं यद्यपि हेतुप्रत्यनीकं न भवति, तथापि व्याधिप्रभावात् व्याधिप्रत्यनीकत्वमस्य बोध्यम्॥ ९॥

कफज इत्यादौ।—पाचनात्मकैरिति आमकफपाचनस्वभावैर्भेषजेरित्यर्थः। पाययेत् सर्पिः पुराणमिति पुराणस्य सर्पिषः कालप्रकर्षकृतसंस्कारात् कफहरत्वं बोध्यम्। किंवा कफजेऽपि पुराणं वातानुबन्धे विधेयम्। मधूकसारेण मधूककाष्ठसारचूर्णेन उष्णोदकेनालोडितेन अवपीड़ः कार्य्यः॥ १०॥

कृष्णेत्यादौ।—पाकलं कुष्ठम्॥ ११॥

देवदार्वित्यादौ।—नलदं मांसी। सर्पिःपानं पुरातनमिति पीयते इति पानं, सर्पिरूपमद् तदेव पुराणमिति विशेषणं गृह्यते॥ १२॥

काथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥ १३ ॥
नागरकल्कमिश्रं चीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥ १४ ॥

नतोत्पलं चन्दनकुष्ठयुक्तम्
शिरोरुजायां सघृतं प्रदेहः।
प्रपौण्डरीकं सुरदारु कुष्ठम्
यष्ट्याह्वमेला कमलोत्पले च ॥
शिरोरुजायां मघृतः प्रदेहो
लौहैरकापद्मकचोरकैश्च ॥ १५ ॥

शताह्वाद्यं तैलम्—

शताह्वैरण्डमूलोग्रावक्राव्याघ्रीफलैः शृतम्।
तैलं नस्यं मरुत्श्लेष्मतिमिरोर्द्ध्वगदापहम् ॥ १६ ॥

जीवकाद्यं तैलम्—

जीवकर्षभकौ द्राक्षासितायष्टीबलोत्पलैः।
तैलं नस्यं पयःपक्वं वातपित्तशिरोगदे ॥ १७ ॥

---

त्रिकट्वित्यादौ।—जीवक पीतशाम्लः। शिरोऽर्त्तिजालमिति नानादोषज शिरोरोगम। द्रव्याणां तीक्ष्णवीर्य्यत्वात् पित्तज विहाय योज्योऽयं योग इत्यर्कः ॥ १३ ॥

नागरेत्यादौ।—गव्यदुग्धं पलैकं, शुण्ठीचूर्णं माषकद्वय प्रक्षिप्य, नासया पय मिति वृद्धाः ॥ १४ ॥

नतेत्यादि।—नत तगरपादिका, तदभावे शियल्लीकोपर। प्रपौण्डरीकेत्यादौ।—लौहमगरुः ; एरका होगलः, चोरक चोरपुष्पी। प्रपौण्डरीकादि चोरकान्त एको योगः। निश्चलस्तु उत्पलान्त एको योगः, लौहेत्याद्यपर इत्याह तत्र, द्वाविंशतप्रदेहापेक्षया प्रदेहाधिकप्रसङ्गात ॥ १५ ॥

शताह्वेत्यादौ।—उग्रा वचा : वक्रा तगरपादिका, व्याघ्री कण्टकारी, तस्या फलम। फलमिति मदनफलमित्यन्ये ॥ १६ ॥

जीवकाद्यतैलं पयःपक्वमिति चतुर्गुणदुग्धे सिद्धम् ॥ १७ ॥

बृहज्जीवकाद्यं तैलम्—

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम्।
बाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम्॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति।
दन्तचालं शिरःशूलमर्दितञ्चापकर्षति॥ १८॥

षड्बिन्दुतैलम्—

एरण्डमूलं तगरं शताह्वा
जीवन्ति रास्ना सहसैन्धवञ्च।
भृङ्गं विडङ्गं मधुयष्टिका च।
विश्वौषधं कृष्णतिलस्य तैलम्॥
आजं पयस्तैलविमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्बिन्दवो नासिकया विधेयाः
शाघ्रं निहन्युः शिरसो विकारान्॥

---

बृहज्जीवकाद्यतैलं।—मधूकं मधूकस्य पुष्पं फलं वा। जाङ्गलमांस हरिणादि-मांसम्, तस्य तुलार्द्धस्य रसेनेति तुलाद्रव्ये जलद्रोण इति वचनात् तुलार्द्धे मांसे-ऽर्द्धद्रोणजलं दत्त्वा पादशेषो रसः प्रस्थद्वयमानो भवति। स्नेहोऽस्तु चतुर्गुणः देयमिति परिभाषया क्वाथविधिरित्यन्ये। व्यवहारस्तु पूर्वव्याख्यया॥ १८॥

षड्बिन्दुतैले तगरं पिण्डतगरमूलम्; भृङ्गं गुड़त्वक्। चक्रपाणिस्तु तैलसम-मिति, किन्तु सामान्यतस्तिलतैलगोक्षीरेणापि योगोऽयम्, तन्त्रान्तरसंवादात्॥१९॥

चयजे चयमासाद्येति।—यस्य रक्तादेः चयेन शिरोरोगो जातस्तस्य चयं बुद्धा तत्प्रत्यनीको ह्रासको विधिः कार्य्य इत्यर्थः। वातघ्नमधुरैः शृतमिति वातघ्नो भद्र-

च्युतांश्च केशान् पलितांश्च दन्तान्
दुर्बद्धमूलांश्च दृढ़ीकरोति ।
सुपर्णदृष्टिप्रतिमञ्च चक्षु-
र्बाह्वोर्बलस्याभ्यधिकं ददाति ॥ १८ ॥
क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः ।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ २० ॥
क्रिमिजे व्योषनक्ताह्व-शिग्रुबीजैश्च नावनम् ।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम् ॥ २१ ॥

अपामार्गतैलम्—

अपामार्गफलव्योष-निशाद्यवकरामठैः ।
सविड़ङ्गं शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत् ॥ २२ ॥
नावनं सगुड़ं विश्वं पिप्पली वा ससैन्धवा ।
भुजस्तम्भादिरोगेषु सर्वेषूर्द्ध्वगदेषु च ॥ २३ ॥

---

दार्वादिः, मधुरः काकोल्यादिः । तत्र वातघ्नस्य क्वाथः, मधुरगणस्य तु कल्क यदाह विदेहः—"सिद्धं वातहरक्वाथे कल्के मधुरके घृतम् । पाने नस्ये विधातव्यं शिरोरोगे क्षयोद्भवे" इति ॥ २० ॥

क्रिमिज इत्यादौ ।—नक्ताह्वशिग्रुबीजैरिति, नक्ताह्वः करञ्जः, बीजपदमुभयत्रापि सम्बध्यते । अजामूत्रयुतमित्यादि ।—क्रिमिजे शिरोरोगे यन्नस्यमुक्तं तदजामूत्रयुक्तं क्रिमिजित् स्यादित्यर्थः । उक्तं हि—"मूत्रपिष्टा समुद्दिष्टा क्रिया क्रिमिषु योजयेत्" इति । किंवा क्रिमिजिद्विडङ्गम् अजामूत्रयुक्तं नस्यं परम् उत्कृष्टं स्यादित्यर्थः ॥ २१ ॥

अपामार्गफलमिति षष्ठीसमासः । यवको हाथिया लोकनाथ इति लोके । रामठं हिङ्गु । मूत्रं चतुर्गुणम् ॥ २२ ॥

नावनमित्यादौ ।—गुड़माषकाण्यष्टौ, शुण्ठीचूर्णं माषकद्वयम्, उष्णोदकपलैकेन गोलयित्वा वस्त्रपूतं कृत्वा नस्यं कार्य्यम् । अयं योगो वातानुबन्धे । तथा पिप्पलीचूर्णं माषकद्वयम्, उष्णोदकं कर्षैकम्, पूर्ववन्नस्यं कफानुबन्धे ॥ २३ ॥

सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम्।
पाययेत् सगुड़ं सर्पिर्घृतपूरांश्च भक्षयेत्॥ २४॥
सूर्य्यावर्त्ते शिरावेधो नावनं क्षीरसर्पिषा।
हितः क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम्॥ २५॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते॥ २६॥
शर्करं कुङ्कममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
सूर्य्याङ्ककर्णाक्षिशिरोऽर्द्धशूले दिनाभिवृद्धिप्रभवे च रोगे॥ २७॥
कृतमालपल्लवरसे खरमञ्जरिकल्कसिद्धं नवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम्॥ २८॥
दशमूलीकषायन्तु सर्पिःसैन्धवसंयुतम्।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत्॥

---

सूर्य्यावर्त्त इत्यादि।—सुश्रुतस्य। नस्यकर्मादीति हेतुभूतदोषविपरीतं नस्यं शिरोविरेकादिकम्। पाययेदित्यादि। वातप्रबले घृतपलैके गुडमाषका पर्णेनस्य पाययेदिति। घृतपूरो भक्ष्यविशेषः। यथा—"मर्दिता समिता नारिकेल घृतादिभिः। अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते" इति॥ २४॥

सूर्य्यावर्त्त इत्यादि।—सूर्य्यावर्त्ते यथोक्तक्रियाभिः पुनरप्रशमे शिराव्यधः कार्य्यः। क्षीरसर्पिषेति क्षीरोत्थसर्पिषा। क्षीरघृताभ्यास इति क्षीरघृतयोः पानम्। ताभ्यामिति क्षीरघृताभ्यां विरेचकद्रव्यसहिताभ्यां विरेचनम्, किंवा क्षीरघृताभ्यां शिरोविरेचनम्॥ २५॥

जीवनीयैश्च क्षीरपिष्टैरित्यन्वयः॥ २६॥

सशर्करामित्यादि।—सशर्करं कुङ्कुमं घृते भृष्टा घृतेनैव पिष्ट्वा समालोड्य नस्यं देयम्। अस्य पर्वी—घृत तो ४, शर्करा मा ४, कुङ्कुम मा ४, आलोड्याग्नौ किञ्चित् तप्तीकृत्य नस्यं देयम्। दिनाभिवृद्धिप्रभवो रोगः सूर्य्यावर्त्त इत्यर्थः॥२७॥

कृतमालेत्यादि।—कृतमालः सोनालु, तस्य पल्लवस्वरसः प्रस्थ एकः; अपामार्गबीजस्य पलद्वय; नवनीतस्याष्टौ पलानीत्याहुः॥ २८॥

दशमूलीत्यादि। -दशमूलीक्वाथ पल १, प्रदीपघृत मा ७, सैन्धव मा १, नासया

शिरीषमूलकफलैरवपीड़स्य योजयेत् ।
अवपीड़ो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ २९ ॥
जाङ्गलानि च मांसानि कारयेदुपनाहनम् ।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥
एष एव विधिः कृत्स्नः कार्य्यश्चार्द्धावभेदके ।
शारिवोत्पलकुष्ठानि मधुकञ्चाम्लपेषितम् ।
सर्पिस्तैलयुतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः ॥ ३० ॥
पिबेत् सशर्करं क्षीरं नीरं वा नारिकेलजम् ।
सुशीतं वापि पानीयं सर्पिर्वा नस्ततस्तयोः ॥ ३१ ॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिरावेधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च विधातव्यो वातपित्तविनाशनः ।
मधुमस्तक-संयाव-हविःपूरैश्च यः क्रमः ॥
सूर्य्यावर्त्ते हितं यत् तच्छङ्खके स्वेदवर्जितम् ।

---

पेयम् । शिरीषेत्यादि ।—शिरीषवल्कलमूलकबीजयोः प्रत्येक मा ४, पिष्टा वस्त्रे निष्पीड्य नस्य विधेयम्, एवं वचापिप्पलीभ्यामिति । एतस्यावपीडद्वयमतितीक्ष्णत्वात् यद्यपि सूर्य्यावर्त्ते वातपित्तोत्तरे न युज्यते तथापि व्याधिप्रत्यनीकत्वात् स्थानिककफक्षयार्थं वा ज्ञेयमिदम् । अन्ये तु सूर्य्यावर्त्तविपर्य्यये योगद्वयमित्याहुः । सूर्य्यावर्त्त-विपरीतश्च प्रत्यूषे सायञ्च महान्, मध्ये तु मन्द इति ॥ २९ ॥

जाङ्गलानीति ।—अत्र वृद्धवैद्योपदेशात् वातहरद्रव्यैर्मांससमुत्स्विद्य सैन्धव-तैलञ्च दत्त्वा उष्णलेपः कार्य्यः । अम्लपेषितमिति काञ्जिकपेषितम् ॥ ३० ॥

पिबेदित्यादि ।—योगचतुष्टयं सशर्करमित्यनुवर्त्तयितुं युज्यत इति निश्चलः । तयोरिति सूर्य्यावर्त्तार्द्धभेदकयोः ॥ ३१ ॥

अनन्तवातेत्यादि ।—सुश्रुतस्य । मधुमस्तकेति मधुमस्तकादयो भक्ष्यविशेषाः सूदशास्त्रेऽनुसन्धेयाः । मधुमस्तः पानिकाकारो मधुगर्भः सितावेष्टितो भक्ष्यविशेष इति वकुलः, मधुन ऊर्द्धमिति चक्रः । संयावो यथा—"पचेद्घृतोत्तरे भाण्डे

क्षीरसर्पिः प्रशंसन्ति नस्तपानञ्च शङ्खके ॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
दूर्वां पुनर्नवाञ्चापि लेपं साध्ववचारयेत् ॥
शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान्।
कल्कैश्च क्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम् ॥
क्रौञ्चकादम्बहंसानां शरार्थ्याः कच्छपस्य च।
रसैः संविहितस्याथ तस्य शङ्खकसन्धिजाः।
ऊर्द्धं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताड़येत् ॥३२॥
शिरःकम्पेऽमृतारास्नाबलास्नेहसुगन्धिभिः।
स्नेहस्वेदादि वातघ्नं शिरोवस्तिश्च शस्यते ॥ ३३ ॥

यष्ट्याद्यं घृतम्—

यष्टीमधुबलारास्नादशमूलाम्बुसाधितम्।
मधुरैश्च घृतं सिद्धमूर्द्धजत्रुगदापहम् ॥ ३४ ॥

---

लिप्तभाण्डे न वै ततः। संयावोऽसौ सिताचूर्णैः खण्डैलामरिचार्द्रकैः" इति। घृतपूरो भक्ष्यविशेषः घृतपूरेति लोके। यथा—"मण्डितः ससितापिण्डः क्षीरेणैव विलोड़ितः। अवगाह्य घृते पक्वो घृतपूरोऽयमुत्तमः" इति। क्रम इत्याह क्रम इति। क्षीरोत्थं सर्पिः क्षीरसर्पिः; नस्तपानं नासिकया पानं, किंवा नस्यं पानञ्च। उक्तञ्च सुश्रुते—"क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके" इति। क्षीरिवृक्षेति क्षीरिवृक्षा वटादयः। संविहितस्येति प्राप्तमांसोपचयस्य। सन्धिजाः शिरा भिन्द्यादित्यत्र सूच्येति शेषः। न ताड़येदिति कुठारिकयेति शेषः, सन्धिभङ्गभयादिति च शेषः ॥ ३२ ॥

शिरःकम्प इत्यादौ।—स्नेहो घृतादिः; सुगन्धिरगुर्वादिः। सुगन्धिरित्यनन्तरं लेप इति शेषः। शिरोवस्तिविधिः पूर्वमुक्त एव ॥ ३३ ॥

यष्टिमध्वित्यादि।—घृतं प्रस्थैकं; क्वाथार्थं यष्ट्यादिदशमूलान्तानां मिलित्वा चतुःषष्टिपलं, जलद्रोणैकं शेषं शरावषोड़श; कल्कार्थं काकोलीयष्टिमधुकाकड़ाशृङ्गीमेदा जीवक-ऋषभकपुण्डरीकाकाष्ठ द्राक्षा-ऋद्धिवृद्धिवंशरोचनामुगानी माषाणी-क्षीरकाकोलीपद्मकाष्ठ गुडूची प्र क २ पक्तव्यम् ॥ ३४ ॥

मयूराद्यं घृतम्—

दशमूलबलारास्नामधुकैस्त्रिपलैः सह।
मयूरं पक्षपित्तान्त्रशकृत्पादास्यवर्जितम्॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम्।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम्॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्केनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम्॥
दशमूलादिना तुल्यो मयूर इह गृह्यते।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः॥ ३५॥

प्रपौण्डरीकाद्यं तैलम्—

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा।
सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम्॥ ३६॥

---

दशमूलेत्यादि।—दशमूलस्य प्रत्येक पलत्रयम् एव बलादीनां त्रयाणामपि तत मिलित्वा ऊनचत्वारिंशत्पलानि भवन्ति। तथा मयूरमांसमपि पक्षपादादि रहितम ऊनचत्वारिंशत्पल ग्राह्यम्। एव मिलित्वा यावत् क्वाथ्य भवति, तत "क्वाथ्याच्चतुर्गुण वारि" इत्यादि परिभाषया जलादिव्यवस्था, एतदेवाह दशमूल्यादिना तुल्यो मयूर इत्यादि।—अन्ये तु दशमूलादिभि प्रत्येक त्रिपलमान सह तरुणमयूरगुडकमेक पक्षादिवर्जित जलद्रोण एव पचेत, जलद्रोणोऽव पादशेषः, स च पचनीयघृतापेक्षया चतुर्गुणो भवतीत्याहुः। एतदेवाह 'अन्ये त्वाकृतिमानेन मयूरग्रहण विदुरिति।" व्यवहारस्त्वनेनैव। मधुरैरिति जीवनीय दशकै, जीवनीयानि च मधुरत्वमधुरविपाकत्वप्रकर्षान्मधुरशब्देनोच्यन्ते। एत न्मयूरघृतं तथा असमानस्य मधुरस्थाने मूषिकादीन् दत्त्वापि कार्य्यमित्याह। आधुना मयूरापेक्षया अल्पगुणेनापि तत्रैकेन स्नेहसाधन कर्त्तव्यमित्याहु.॥ ३५॥

मायूरं घृतम्—

शतं मयूरमांसस्य दशमूलबलातुलाम्।
द्रोणेऽम्भसः पचेत् क्षुत्त्वा तस्मिन् पादस्थिते ततः॥
निषिच्य पयसो द्रोणं पचेत्तत्र घृताढ़कम्।
प्रपौण्डरीकवर्गोक्तैर्जीवनीयैश्च भेषजैः॥
मेधाबुद्धिस्मृतिकरमूर्द्धजत्रुगदापहम्।
मायूरमेतन्निर्दिष्टं सर्वानिलहरं परम्॥
मन्याकर्णशिरोनेत्ररुजापस्मारनाशनम्।
विषवातामयश्वासविषमज्वरकासनुत्॥ ३७॥

इति शिरोरोगचिकित्सा।

---

## अथासृग्दरचिकित्सा।

दध्ना सौवर्चलाजाजीमधुकं नीलमुत्पलम्।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीडिता॥ १॥

---

प्रपौण्डरीकमित्यादि।—वाग्भटस्य। चन्दनोत्पलैरित्यत्र कल्कैरिति शेषः। [क्षी]रसमात्र तैलापेक्षया चतुर्गुणः॥ ३६॥

शतमित्यादौ।—दशमूलबलामलयोर्मिलित्वा तुला। द्रोण इति पदमावृत्त्या [उ]भयत्रापि योज्यं, तेन मयूरमांसशतपले एको जलद्रोणः, दशमूलबलातुलायामप[र] इति द्रोणद्वयमम्भसः। पयसो दुग्धस्य द्रोणं निषिच्य दत्त्वा पचेदिति। एतच्च [च]तुर्गुण पाकः। प्रपौण्डरीकवर्गोक्तैरिति प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पल-[क]ल्कैः। जीवनीयैरिति जीवनीयदशकैः। ततोऽत्र यष्टिमधुकस्य भागद्वयं [ग्रा]ह्यम्॥ ३७॥

इति शिरोरोगचिकित्साविवृतिः।

---

स्त्रीपुंसां साधारणव्याधीनां तथा *पुंप्रतिनियतानामप्युपदंशादीनां चिकित्[सि]ता, सम्प्रति स्त्रीनियतानां प्रदरादीनां चिकित्सितमभिधातुमुपक्रमते। दध्ना-

पिबेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पेये गुडूच्या रसमेव वा ॥ २ ॥
रोहीतकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
जलेनामलकाद्वीजकल्कं वा ससितामधु।
धातक्याश्चाक्षमात्रं वा आमलक्या मधुद्रवम् ॥
काकजानुकमूलं वा मूलं कार्पासमेव वा।
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा ॥ ३ ॥
अशोकवल्कलक्काथशृतं दुग्धं सुशीतलम्।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम् ॥ ४ ॥
दार्वीरसाञ्जनवृषाब्दकिरातबिल्व-
भल्लातकैरवकृतो मधुना कषायः।
पीतो जयत्यतिबलं प्रदरं सशूलम्
पीतासितारुणविलोहितनीलशुक्लम् ॥ ५ ॥

---

न्यादि।—दध्न. कर्षत्रयं, सौवर्चलस्य माषकमेकम्; अजाज्यादीनां प्रत्येकं माषकद्वयं, मधुनस्तु माषकचतुष्टयमित्याह ॥ १ ॥

अतिबहुस्तुतशोणितानां चिकित्सामाह पिबेदित्यादि।—एणस्य दम एणे... स्वार्थे कः। एणस्य रक्तं दशमूलयोगेन मर्दयित्वा पेयं, तेन स्थानता न स्यादित्याङ्क। शर्करामधुयोजितमिति पदं वासकस्वरसं गुडूचीस्वरसयोरपि योज्यं हारीतसंवादात् ॥ २ ॥

रोहीतकादित्यत्रापि ससितामध्विति योज्यम्। धातक्या इत्यादि।—धातक्याः कल्कमक्षमात्रं मधुद्रवं, तथामलक्या वा कल्कमक्षमात्रं मधुद्रवं पिबेत्। मधुद्रवं यत्र कल्कं तत् मधुद्रवम्। काकजानुकः काकजङ्घा ॥ ३ ॥

अशोकेत्यादौ।—षडङ्गपरिभाषयार्द्धशृतमशोकवल्कलक्काथं गृहीत्वा तेन चतुर्गुणेन क्षीरं साध्यमित्यर्थः। वृद्धास्तु क्काथमकृत्वैव क्षीरसाधनपरिभाषया कुर्वन्ति ॥ ४ ॥

दार्वीत्यादौ।—वृषो वासकः; बिल्वं शुष्कबिल्वशलाटु; कैरवं कुमुदं; "भल्लातकासहत्वे तु रक्तचन्दनमिष्यते" अनेन व्यवहरन्ति ॥ ५ ॥

शाल्ञनं तण्डुलीयस्य मूलं चौद्रान्वितं तण्डुलतोयपीतम्।
सृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण॥
कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना।
एतत् पीत्वा त्र्यहान्नारीप्रदरात् परिमुच्यते॥
चौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक्॥
प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम्॥ ६॥
शवात्यालकमूलं तण्डुलसलिलेन हरति रक्ताख्यम्।
मर्यात मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ॥ ६॥
गुडेन वदरीचूर्णं मोचमामं तथा पयः।
पीता लाक्षा च सघृता पृथक् प्रदरनाशना॥ ८॥
रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
असृग्दरं विशेषेण कुटजाष्टकमाचरेत्॥ ९॥

पुष्यानुग चूर्णम्—

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदरसाञ्जनम्।

---

रसाञ्जनमित्यादि।—तण्डुलीयस्य मूलं लोहिततण्डुलीयस्य मूलं गृह्यते। उड्यामद प्रत्येकं, मिलितञ्च बोध्यं, सिद्धसारसंहितासंवादात्। सर्वभवमिति एकदोषभवं सर्वं, न तु सान्निपातिकं तस्यासाध्यत्वात्। उक्तं हि—"दाहमधिर्हरितं नवर्णं मज्जप्रकाशं कुणपं त्रिदोषात्। तञ्चाप्यसाध्यं प्रवदान्ति न तत्र कुर्वीत भिषक् चिकित्साम्" इति। श्वासञ्च भार्गी सह नागरेणेति प्रकरणानुरोधाल्लिखितम्॥ ६॥

रक्ताख्यमिति रक्तप्रदरम्। मदिरापानमिति मदिरया पीयते कर्मणि ल्युट् मदिरापीतमित्यर्थः। तदुभयमिति कुशवात्यालकयोर्मूलम्॥ ७॥

गुडेनत्यादि—योगचतुष्टयम्। वदरीचूर्णमिति वातकफे। मोचमाममिति कदलीफलचूर्णस्य कर्षमेकं, एतच्च कफपित्ते॥ ८॥

रक्तपित्तविधानेनेति अधोगतरक्तपित्तविधानेन॥ ९॥

अम्बष्ठकीमोचरस-समङ्गापद्मकेशरान्॥
वाह्लीकातिविषामुस्तं बिल्वं लोध्रं सगैरिकम्।
त्रिफलां मरिचं शुण्ठी-मृद्वीका रक्तचन्दनम्॥
कट्वङ्गवत्सकानन्ता-धातकीमधुकार्जुनम्।
पुष्ये गोहृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत्॥
तानि क्षौद्रेण संयुज्य पाययेत् तण्डुलाम्बुना।
असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम्॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्।
अम्बष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये तु लक्षणाम्॥ १०॥

मुद्गाद्यं घृतम्—

मुद्गमाषस्य निर्य्यूहे रास्नाचित्रकनागरैः।
सिद्धं सपिप्पलीबिल्वैः सर्पिः श्रेष्ठमसृग्दरे॥ ११॥

शीतकल्याणकं घृतम्—

कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम्।
विदारी शतमूली च शालपर्णी सजीवका॥

---

पुष्यानुगचूर्णे जम्ब्वाम्रयोर्मध्यं जम्ब्वाम्रयोरस्थि। वाग्भटेऽपि जम्ब्वाम्रयोरस्थ्युक्तम्। अम्बष्ठकी दक्षिणापथे ख्याता, तदभावे पाठामेव द्विगुणां गृह्णन्ति लक्षणामित्यन्ये। पद्मकेशरं पद्मकिञ्जल्कम्, वाह्लीकं कुङ्कुमम्, बिल्वं बिल्वशलाटु पुष्यर्क्षेति पुष्यानक्षत्रेण॥ १०॥

मुद्गाद्ये।—मुद्गमाषाभ्यां निर्य्यूहः क्वाथः। रास्नादिपञ्चकस्य कल्कः। बिल्वमिति बिल्वशुण्ठकम्॥ ११॥

फलं त्रिपुषबीजानि प्रत्यग्रं कदलीफलम्।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम्॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम्॥ १२॥

बृहच्छतावरीघृतम्—

शतावरीरसप्रस्थं क्षोदयित्वावपीड़येत्।
घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं भिषक्॥
अत्र कल्कानिमान् दद्यात् स्थूलोडुम्बरसम्मितान्।
जीवनीयानि यान्यष्टौ यष्टीचन्दनपद्मकैः॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम्॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।
सम्यक् सिद्धन्तु विज्ञाय तद्घृतञ्चावतारयेत्॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च।
वातरक्तं क्षयं श्वासं हिक्कां कासञ्च दुस्तरम्॥

---

कुमुदमित्यादि।—कुमुद कह्लारपुष्पम, पद्मक पद्मकाष्ठम्; रक्तशालिस्तु
र पयस्या क्षीरकाकोली, काश्मरी गाम्भारी, तस्याः फलम्; अतिबला
तण्डुला, जीवक जीवनीयगणमध्ये पठित वणिग्द्रव्यम्, फल त्रिफला,
र मागाम्ब फलम्, बीजमित्यन्ये। प्रत्यग्रमित्यभिनवम्, अपक्वमित्यर्थः॥ १२॥
बृहच्छतावरीघृते शतावरीं क्षोदयित्वा रसप्रस्थमवपीड़येत् अवपीड्य गृह्णीया

अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम् ।
असृग्दरं सर्वभवं मूत्रकृच्छ्रं सुदारुणम् ।
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ १२ ॥

इत्यसृग्दर-चिकित्सा ॥

## अथ योनिव्यापच्चिकित्सा ।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
वस्त्यभ्यङ्गपरीषेक-प्रलेपाः पिचुधारणम् ॥ १ ॥
वचोपकुञ्चिकाजाजी-कृष्णावृषकसैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्कराम्वितम् ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद्‌घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शोविनिवृत्तये ॥ २ ॥
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ।
नतवार्त्ताकिनीकुष्ठ-सैन्धवामरदारुभिः ।

---

दित्यर्थः । स्थूलोडुम्बरसम्मितान् इति प्रत्येकं कर्षसम्मितामित्यर्थः । जीवनीया न्यष्टाविति अष्टवर्गः । जीवकर्षभकौ मेदामहामेदाकाकोलीक्षीरकाकोल्यौ ऋद्ध्युप-न्द्वति । असृग्दर सर्वभवमिति पूर्ववत् व्याख्येयम् ॥ १२ ॥

इत्यसृग्दररोगचिकित्सा-विवृतिः ।

---

प्रदरोऽपि योनिव्यापद्विशेष इति योनिव्यापत्त्वसामान्यादनन्तरं योनिव्याप चिकित्सितमुच्यते, योनिव्यापत्स्वित्यादि ।—कर्म वातजिदिति वस्तिरत्र वस्तिश्च ॥ १ ॥

वचेत्यादि ।—वाग्भटस्य । उपकुञ्चिका कृष्णजीरकम्, वृषकी वासकमूलम्, प्रसन्ना मदिराया उपरिस्थः फेनभागः । एभ्यो वचादिभ्यः समभागपिष्टेभ्यः तो २, प्रसन्ना पल २, आलोड्य घृतकर्षेण सन्तोल्य पेयम् ॥ २ ॥

तैलात् प्रसाधितात् धार्य्यः पिचुर्योनौ रुजापहः ॥
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ॥ ३ ॥
योन्यां बलासदुष्टायां सर्व्वं रूक्षोष्णमौषधम्।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ४ ॥
हिंस्राकल्कन्तु वातार्त्तां कोष्णामभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्त्तां श्यामादीनां कफोत्तरा ॥ ५ ॥
मूषिकमांससंयुक्तं तैलमातपभावितम्।
अभ्यङ्गाद्धन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥ ६ ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम्।
मधुना किण्वचूर्णं वा दद्यादचरणापहम्।
स्रोतसां शोधनं कण्डूक्लेदशोथहरञ्च तत् ॥ ७ ॥

---

वातेत्यादि।—वाग्भटस्य। वार्त्ताकिनी भूकण्टकारी, गोष्ठवार्त्ताकुरित्यन्ये। अमरदारु देवदारु। एभिर्वचादिभिः कल्कैः तैलं साध्यम्, अत्रच चतुर्गुणमिति। पिचुरिति भेषजसाधितस्नेहाप्लुतस्तूलः पिचुः ॥ ३ ॥

योन्यामित्यादौ।—तुल्येति परिणाहेन दैर्घ्येण च। वर्त्तिरिति वस्त्रेण वस्त्रं विना वा ॥ ४ ॥

हिंस्रेत्यादि।—हिंस्रा कालाकस्तामूलम्। पञ्चवल्कलस्य वटोडुम्बराश्वत्थप्लक्ष-वेतसस्य। श्यामादीनामिति कफरोगभिषग्जितीये श्यामा त्रिवृत् चतुरङ्गुलेत्यादिना उक्तानाम् ॥ ५ ॥

मूषिकेत्यादि।—मूषिकाया मांसं तैलात् पादिकम्, नात्र द्रवयोगः कार्य्यः। आतपभावितमिति सप्ताहम्, तन्मांसं मूषिकमांसं सैन्धवचूर्णावचूर्णितमेरण्डादिपत्रे कृत्वा योनिं स्वेदयेत् ॥ ६ ॥

गोपित्त इत्यादौ।—क्षौमं सूक्ष्ममसृणवस्त्रम्। किण्वं सुराबीजम्, मधुना किण्वचूर्णमिति तृतीयो योगः। अचरणा नाम योनिव्यापत् ॥ ७ ॥

वामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्नेदनो विधिः ।
क्रमः कार्य्यस्ततः स्नेहपिचुभिस्तर्पणं भवेत् ॥ ८ ॥
शल्लकीजिङ्गिनीजम्बूधवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्यादिप्लुतापहः ॥ ९ ॥
कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ।
वस्तमूत्रकृता धार्य्या सर्वञ्च स्नेहमनुष्ठितम् ॥
त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु ।
तदेव च महायोन्यां स्नस्तायाञ्च विधीयते ॥ १० ॥
आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीड़ाकरभगफलं नात्र सन्देहबुद्धिः ॥ ११ ॥
शतपुष्पातैललेपाद्दरीदलजात्तथा ।
पेटिकामूललेपाच्च योनिर्भिन्ना प्रशाम्यति ॥ १२ ॥

---

वामिन्यामित्यादौ ।—पूतियोनिशब्देन उपप्लुता परिप्लुता चोच्यते ॥ ८ ॥

शल्लकीत्यादि ।—शल्लकीजिङ्गिन्यौ स्वनामख्यात । त्वक्शब्दः शल्लकादिभिः प्रत्येकं सम्बध्यते । अत्र कषायश्चतुर्गुणः । अकल्क एवायं स्नेहः । पिचुरिति एतत्तैलाप्लुतः पिचुः ॥ ९ ॥

कर्णिन्यामित्यादौ ।—कुष्ठादिभिर्वर्त्तिः कार्य्या इति योज्यम् । अर्काग्रमर्कपल्लव त्रैवृत स्नेहनमिति सर्पिस्तैलवसारूपस्नेहः । उदावर्त्ता उदावर्त्ताख्या योनिव्यापत् अनिलार्त्तिः वातिकी योनिव्यापदित्यर्थः । तदेवेति त्रैवृतं स्नेहनम् । विधीयते इति अनुवासनोत्तरवस्तिविधयेत्यर्थः चरकसंवादात ॥ १० ॥

आखोरित्यादौ ।—सपदीति सद्यस्कमांसग्रहणार्थम् । एतन्मांस यावदिदं खरत्वमासाद्य न द्रवति द्रवतां न गच्छति तावदेव गालनीयमित्यर्थः । भगफलं कन्दरोगम् ॥ ११ ॥

शतपुष्पेत्यादि ।—योगत्रयम् । तैलपिष्टशतपुष्पया लेप इत्यर्थः । पेटिका भापीटुपरीति ख्याता । भिन्नेति विदीर्णा ॥ १२ ॥

सुषवीमूललेपेन प्रविष्टान्तर्वहिर्भवेत् ।
योनिर्मूषवसाभ्यङ्गान्निःसृता प्रविशेदपि ॥ १३ ॥
लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च ।
वेतसमूलनिःक्वाथ-क्षालनेन तथैव च ।
मूषिकावागुलिवसाभ्यञ्जनं योनिदार्ढ्यदम् ॥ १४ ॥
वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च ।
अश्वगन्धा हरिद्रा च गाढ़ीकरणमुत्तमम् ॥ १५ ॥
मदफलमधुककर्पूरपूरितं भवति कामिनीजनस्य ।
चिरगलितयौवनस्य वराङ्गमतिगाढ़ं सुकुमारम् ॥ १६
पञ्चपल्लवयष्ट्याह्व-मालतीकुसुमैर्घृतम् ।
रविपक्वमन्यथा वा योनिगन्धविनाशनम् ॥ १७ ॥
इक्ष्वाकुवीजदन्ती-चपलागुड़मदनकिण्वयष्ट्याह्वैः ।
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी ॥ १८ ॥

---

सुषव्यादि ।—सुषवीमूललेपेन कारवेल्लमूललेपेनेत्यर्थः । प्रविष्टेति अन्तःप्रविष्टा अन्तर्मुखा योनिर्वहिर्भवतीत्यर्थः । योनिरित्यादौ —मूषो मूषिकस्तस्य वसा मांसस्नेहः । निःसृतेति वहिर्निःसृता । इयमेव प्रस्रंसिनीत्युच्यते ॥ १३ ॥

लोध्रेत्यादौ ।—तुम्बी अलावुः, तस्याः फलम् । तथैव चेति दार्ढ्यकृदित्यर्थः । मूषिकेत्यादौ । वागुली वादुर इति ख्यातो दिवान्धः पक्षी ॥ १४ ॥

वचेत्यादि ।—वचादि-हरिद्रान्त एको योगः । वचादिर्हरिद्रान्तैर्लेपोऽवचूर्णनं वा १५

मदेत्यादि ।—मदः कस्तूरी, फलं जातीफलम्, किंवा मदफलं मदनफलमेव । एभिर्मधुना पिष्टैर्योनिप्रपूरणम् ॥ १६ ॥

पञ्चपल्लवेत्यादि ।—पञ्चानाम् आम्रजम्बूकपित्थवीजपूरकविल्वानां पल्लवाः । एषां कल्कः । रविपक्वमिति द्रवं विनैव ; अन्यथा वेत्यग्निपक्वम्, अस्मिन् पक्षे जलं चतुर्गुणम् ॥ १७ ॥

इदानीमार्त्तवनाशे सति आर्त्तवोत्पादनविधिमाह इक्ष्वाकुवीजेत्यादि ।—इक्ष्वाकु

सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम्।
दूर्वायाः पिष्टकं प्राश्य वनिता लार्त्तवं लभेत्॥ १९॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत्।
शैलुच्छदमिश्रपिष्टं भक्षणञ्च तदर्थकृत्॥ २०॥
पुष्योद्धृतं लक्ष्मणायाश्चक्राङ्कायास्तु कन्यया।
पिष्टं मूलं दुग्धघृतपीतमृतौ तु पुत्रदम्॥ २१॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः।
ऋतुस्नाता बला पीत्वा धत्ते गर्भं न संशयः॥ २२॥
पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा।
घृतेन सह पातव्यं बन्ध्यापि लभते सुतम्॥ २३॥

---

लिङ्गालाबुः; चपला पिप्पली। एषां प्र मा ८, गुडोचीर मा ८, अग्नौ पक्व वर्त्तिः कार्य्या। कुसुमं रक्तम्, तज्जननी कुसुमसञ्जननी॥ १८॥

सकाञ्जिकेत्यादि।—योगत्रयम्। ज्योतिष्मतीदलमपि भृष्टं बोध्यम्। दूर्वाया पिष्टकमिति दूर्वातण्डुलाभ्यां कृतं पिष्टकम्। योगत्रयमेतत्॥ १९॥

इदानीमार्त्तवहरयोगानाह धात्रीत्यादि।—धात्र्यादीनां मिलितचूर्णानां नैक्केक बोध्यम्। शैलुच्छदेति शैलुपत्रतण्डुलाभ्यां कृतं पिष्टकमित्यर्थः॥ २०॥

इदानीमार्त्तवे पुत्रप्रदयोगानाह पुष्येत्यादि।—चक्राङ्काया इति लक्ष्मणाया विशेषणम्, तत्पत्रस्य चक्राङ्कितत्वात्। दुग्धघृतपीतमिति दुग्धेन घृतेन वा ऋतुस्नानानन्तरं दिनत्रयं पिबेत्। अथवा नासापुटेन बिन्दुचतुष्टयं पिबेदित्यर्थः। अन्ये तु लक्ष्मणाया मूल मा २, दुग्ध तो २, घृत तो २, ऋतुस्नानानन्तरं दिनत्रयं पिबेदित्याहुः॥ २१॥

क्वाथेनेत्यादि।—हयगन्धा अश्वगन्धा, तस्या मूलम्, षडङ्गपरिभाषया जलाधिक्यं दत्त्वा अर्द्धशृतं क्षीराच्चतुर्गुणं दत्त्वा पक्त्वा घृतं प्रक्षिप्य पिबेत्। अथवा अश्वगन्धामूल मा ८, जल पल ४, शेष पल २, घृत मा ८. वृद्धास्तु क्षीरसाधनपरिभाषया व्यवहरन्ति॥ २२॥

पिप्पलीत्यादौ।—शृङ्गवेरं शुण्ठी॥ २३॥

सुवर्णस्य रूप्यकस्य च चूर्णं ताम्रस्य चाज्यसंमिश्रे।
पीते शुद्धे क्षेत्रे भेषजयोगाद्भवेद्गर्भः॥ २४॥
कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः।
स्नात्वा द्विजाय दत्त्वा भक्त्या सम्पूज्य लोकनाथेशम्।
श्वेतबलाह्विकयष्टिं कर्षं कर्षं पलन्तु शर्करायाः।
पिष्टैकवर्णजीववत्साया गोस्तु दुग्धेन॥
समधिकघृतेन पीतं नात्र दिने देयमन्नमन्यच्च।
क्षुधिते सदुग्धमन्नं दद्यादापुरुषसन्निधेस्तस्याः॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनी धीरा।
त्यक्तस्वान्तरसङ्ग-प्रहृष्टमनसोऽतिवृद्धधातोश्च।
पुरुषस्य सङ्गमात्राल्लभते पुत्रं ततो नियतम्॥ २५॥

गोष्ठजातवटस्य प्रागुत्तरशाखजे शुभे शुङ्गे।
माषौ द्वौ च तथा गौरसर्षपौ दधियोजितौ॥
पुष्यापीतौ द्रुतापन्नगर्भायाः पुत्रकारकौ।

---

सुवर्णस्येत्यादौ।—आज्यसंमिश्र इति सर्वत्र योज्यम्। मारितसुवर्णचूर्णस्य माषैक गव्यघृतस्य कर्षद्वयम् आलोड्य पेयम्। एवं रजतताम्रयोरपि। तद्भेषज योगात् शुद्धे चेत्र इति योज्यम्। केचित्तु सुवर्णादित्रय एकत्रावच्च्र्य ततो योनिमध्ये लेपयेदिति। तत्पानञ्चोपदिशन्ति। उक्तं हि,—"हेम रूप्यं वरं ताम्र-मकत्रावच्च्र्य सर्पिषा। घृष्ट्वाऽन्लेपयद्योनिं शोधनार्थं पिबेदपि" इति॥ २४॥

कृत्वेत्यादौ।—विलङ्घ्येति यस्मिन् दिने शुद्धिस्नानं तस्मिन् दिने उपोष्येत्यर्थः। श्वेतबलाया अहिः मूलम्। समधिकघृतेनेति दुग्धापेक्षया घृतभागोऽधिको देय इत्यर्थः। यस्मिन् दिने भेषजमिदमुपयुज्यते तस्मिन्नेव दिनेऽपरमन्नं नोपयोज्यम्। दिनान्तरे तु क्षुधायां सत्यां क्षीरसहितमन्नं दद्यात। समदिवस इति युग्म दिने॥ २५॥

गोष्ठेत्यादि।—गोष्ठः पर्वतः, उपवनं वेति केचित्। माषाविति माषकलायौ चरके धान्यमाषाभ्यामित्युक्तम्। तथा गौरसर्षपौ द्वाविति। दधियोजिता-

कानकान् राजतान् वापि लौहान् पुरुषकानणून् ॥
ध्मातानग्निवर्णान् पयसो दध्नो वाप्युदकस्य वा ।
क्षिप्ताञ्जलौ पिबेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥ २६ ॥

फलघृतं प्रथमम्—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥
सर्पिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥
या चैवास्थिरगर्भा स्याद् या वा जनयते मृतम् ।
अल्पायुषं वा जनयेद् या च कन्यां प्रसूयते ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥
जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते ।

---

विति दधिनक्षिप्ताविव्यर्थः । द्रुतापन्नगर्भाया इति यावत् स्त्रीत्वं पुंस्त्वं वा गर्भस्य न व्यक्तीभूतमस्ति तावदेव इदं कर्म कुर्य्यात् । अङ्गाभिव्यक्तिस्तु तृतीये मासे भवतीति मासद्वयं यावत् पुंसवनकर्म कुर्य्यादिति भावः । इदं कर्म लिङ्गपरावृत्तिकारकं भवतीति ज्ञापनार्थं द्रुतापन्नगर्भाया इत्युक्तम् । पुरुषकानणूनिति अणुपरिमाणान् पुरुषाकृतीन् । अञ्जलावित्यस्य पयस इत्यादिभिः सम्बन्धः । एतच्च दुग्धादिनिःशेषं पेयं चरकसंवादात् ॥ २६ ॥

मञ्जिष्ठेत्यादौ । पयस्या क्षीरविदारी । द्राक्षाकाकोल्याविति द्वन्द्वः, काकी-

आरण्यगोमयेनापि वह्निज्वाला प्रदीयते ॥ २७ ॥

फलघृतं द्वितीयम्—

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरं चतुर्गुणम्।
तत्सिद्धं प्रपिबेन्नारी योनिशूलनिपीड़िता ॥
पिण्डिता चलिता या च निःसृता विवृता च या।
पित्तयोनिश्च विस्रस्ता षण्ढयोनिश्च या स्मृता ॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ २८ ॥

नीलोत्पलाद्यं घृतम्—

नीलोत्पलोशीरमधूकयष्टि-
द्राक्षाविदारीकुशपञ्चमूलैः।
स्याज्जीवनीयैश्च घृतं विपक्वम्
शतावरीकारसदुग्धमिश्रम् ॥
तच्छर्करापादयुतं प्रशस्त-
मसृग्दरे मारुतरक्तपित्ते।
क्षीणे बले रेतसि सम्प्रनष्टे
कृच्छ्रे च पित्तप्रभवे च गुल्मे ॥ २९ ॥

---

न्यत्र क्षीरकाकोली, काकोलीत्युपात्तत्वात्। शतावरीरसक्षीरयोः प्रत्येक चातु-र्गुण्यम। अत्र वृद्धोपदेशं संग्रहकारो लिखति अनुक्तमित्यादि ॥ २७ ॥

सहचरे इत्यादि।—सहचरे द्वे इति सितपुष्पभेदेन झिण्टीद्वयम्। शुकनासा चमकारपुटकः। पिण्डितेत्यत्र योनिरिति शेषः ॥ २८ ॥

नीलोत्पलमित्यादौ।—मधुकस्य पुष्पं फलं वा। कुशपञ्चमूलं तृणपञ्चमूलम्। जीवनीयैरिति जीवनीयदशकैः। शतावरीरसस्य त्रय. प्रस्था., दुग्धस्य चैक।

बृहच्छतावरीघृतम्—

शतावरीमूलतुलाश्चतस्रः सम्प्रपीडयेत् ।
रसेन क्षीरतुल्येन पचेत्तेन घृताढकम् ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।
पिष्टैः प्रियालैश्चाक्षांशैर्द्वियष्टिमधुकैर्भिषक् ॥
सिद्धशीते च मधुनः पिप्पल्याश्च पलाष्टकम् ।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम् ॥
ब्राह्मणान् प्राशयेत् पूर्वं लिह्यात् पाणितलं ततः ।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत् ।
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम् ।
कामलां वातरक्तञ्च विसर्पं हृच्छिरोग्रहम् ।
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत् ॥ ३० ॥
दग्ध्वा शङ्खं क्षिपेद्रम्भास्वरसे तत्तु पेषितम् ।
तुल्यालं लेपतो हन्ति रोम गुह्यादिसम्भवम् ।
रक्ताञ्जनापुच्छचूर्णं युक्तं तैलन्तु सार्षपम् ।
सप्ताहं व्युषितं हन्ति मूलाद्रोमाण्यसंशयम् ॥
कुसुम्भतैलाभ्यङ्गो वा रोम्णामुत्पाटितेऽन्तकृत् ॥ ३१ ॥

---

अन्ये तु शतावरीरसस्य चत्वारः प्रस्था इत्याहुः । घृतप्रस्थापेक्षया शर्करायाः पादेऽष्टौ पलानि ॥ २९ ॥

शतावरीमूलेत्यादि ।—चरकस्य । जीवनीयैरिति जीवनीयदशकैः, न पुनरष्टवर्गैः, चरकोक्तत्वात् । द्वियष्टिमधुकैरिति एकश्च मधुकभागो जीवनीयगणपठितः अपरोऽपि मधुकस्यैको भागो देय इति द्वितीययष्टिमधुकेन । किंवा स्थलजलभेदान्मधुकद्वययुक्तैः । वाग्भटे तु द्वियष्टिमधुकैरित्यत्र द्विबलामधुकैरिति पठ्यते ॥ ३० ॥

योनौ लोमबाहुल्येन वैरस्याद्रतिर्न स्यादित्यतो लोमशातनमाह दग्ध्वेत्यादि ।—रम्भास्वरसे कदलीकाण्डस्वरसे । तुल्यालमिति समहरितालम् । रक्ताञ्जनेति रक्ताञ्जना लोहितवर्णाञ्जननामिका पारजिला इति लोके । तत्पुच्छं रौद्रे शोषयित्वा

आरग्वधाद्यं तैलम्—

आरग्वधमूलपलं कर्षद्वितयं शङ्खचूर्णस्य।
हरितालस्य च खरजे मूत्रप्रस्थे तु कटुतैलम्॥
पक्वं तैलं तदथ शङ्खहरितालचूर्णितं लेपात्।
निर्मूलयति च रोमाण्यन्येषां सम्भवो नैव॥ ३२॥

कर्पूरभल्लातकशङ्खचूर्णम्
क्षारो यवानाञ्च मनःशिला च।
तैलं विपक्वं हरितालमिश्रम्
रोमाणि निर्मूलयति क्षणेन॥ ३३॥

क्षारतैलम्—

शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् समुष्ककात्।
दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत्॥
क्षाराष्टभागं विपचेत् तैलस्य सार्षपं बुधः।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम्॥
विन्दुरेकः पतेद् यत्र तत्र रोमापुनर्भवः।

---

ण कुर्यात। तच्च सार्षपतैलेऽनुरूपे प्रक्षिप्य सप्ताहं स्थाप्यमित्यर्थः। कुसुम्भ-
ादौ।—उत्पाटित इत्यनन्तरं लोम्नीति शेषः। लोम्नि उत्पाटिते सति कुसुम्भवीज-
ाभ्यङ्गो लोम्नामनुत्पत्तिकरो भवतीत्यर्थः॥ २१॥

आरग्वधेत्यादौ।—कर्षद्वितयमिति हरितालस्य चेत्यनेनापि सम्बध्यते। कटु-
तैलस्याष्टौ पलानि। अथ इत्यानन्तर्ये; तैलपाकानन्तरं शङ्खचूर्णं हरिताल-
चूर्णे मिलित्वा तैलात् पादिकं प्रक्षिप्य लेपो देय इत्यर्थः। किंवा शङ्खचूर्णहरिताल-
चूर्णैरनियतमानेन तैलं सम्मिश्र्य लेपो देय इति॥ ३२॥

कर्पूरेत्यादि।—कर्पूरादीनां कल्कः। क्षारो यवक्षारः। तैलमिति कटुतैलम्।
हरितालमिश्रितमिति पूर्ववत् व्याख्येयम्॥ ३३॥

क्षारतैले।—शुक्तिः शुक्तिरेव मुक्तास्फोटो वा; दीर्घवृन्तः शोनाकः, मुष्कको
घण्टापारुली। एतानि समभागानि दग्ध्वा चतुर्विंशतिपलक्षारो ग्राह्यः, तस्य

मदनादिव्रणे देयमश्विभ्यामेव निर्मितम् ॥
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्चिनाम्।
क्षारतैलमिदं श्रेष्ठं सर्वक्लेदहरं परम् ॥ ३४ ॥
• इति योनिव्यापच्चिकित्सा।

---

## अथ स्त्रीरोगचिकित्सा।

मधुकं शाकबीजञ्च पयस्या सुरदारु च।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च तथैवोत्पलशारिवा।
अनन्तशारिवा रास्ना पद्मा मधुकमेव च ॥
बृहतीद्वयकाश्मर्य्यक्षीरिशुङ्गास्त्वचो विषम्।
पृथक्पर्णी बला शिग्रु श्वदंष्ट्रा मधुयष्टिका ॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता।
मासेषु सप्त योगाः स्युरर्द्धश्लोकास्तु सप्तसु।
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ १ ॥

---

भावणार्थं गर्द्दभमूत्रं षड्गुणम् अष्टादशशरावपरिमितं गृहीत्वा एकविंशतिवारान्
परिस्राव्य क्षारोदकस्य षोडश शरावा ग्राह्याः। कटुतैलन्तु शरावचतुष्टयम्
तैलापेक्षयाऽष्टभागः क्षारस्य कल्कत्वेन प्रदेय इत्यर्थः; तेन क्षारस्य पलचतुष्टयं
कल्क इत्यर्थे। अन्ये तु क्षारोदकं तैलापेक्षयाऽष्टगुणमित्याहुः। मदनादिव्रण
इत्युपदंशादौ ॥ ३४ ॥

इति योनिव्यापच्चिकित्सा।

---

अवशिष्टस्त्रीरोगचिकित्साभिधानार्थं स्त्रीरोगचिकित्सामाह मधुकमित्यादि —
सुश्रुतस्य। शाकी मरुजसम्भवस्य बीजं; पयस्या क्षीरकाकोली, अश्मन्तकी
ऽम्ललोटकः माळुया वा ताम्रवल्ली मञ्जिष्ठा; वृक्षादनी वन्दाकः। तथैवोत्पल

कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकाः।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ २ ॥
नवमे मधुकानन्तापयस्याशारिवाः पिबेत्।
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ॥
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च।
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥ ३ ॥
[illegible]रुशृङ्गाटकजीवनीयपद्मोत्पलैरण्डशतावरीभिः।

---

[illegible]रिवेत्यत्र तथातिलतशारिवे इति पाठः सुश्रुते वाग्भटे च; तट्टीकाकृतोऽतिल्वता [illegible]ता प्रियङ्गुर्वेति व्याख्यानयन्ति। उत्पलशारिवा अनन्तमूलम्। अनन्तः अनन्त-[illegible]. शारिवा श्यामालता; पद्मा ब्रह्मयष्टिः; काश्मर्य्यं गाम्भारीफलं; क्षीरिण्या [illegible]दीना यज्ञाङ्गत्वचश्चेति। विसं मृणालम्। एते च सप्त योगाः कल्कविधये [illegible]याः। अपरे तु क्षीरसाधनपरिभाषयेत्याहुः ॥ १ ॥

कपित्थेत्यादि।—सुश्रुतस्य। कपित्थादीनां सर्वेषां मूलम्। निश्चलस्तु कपि[illegible] फल पटोलस्य फलं पत्रं वा, अन्येषाञ्च मूलमित्याह; किन्तु सुश्रुतवाग्भट[illegible]कृद्भिर्न व्याख्यातोऽयमर्थः ॥ २ ॥

नवम इत्यादौ।—क्षीरसिद्धानीति पद लिङ्गपरिमाणेनापि सम्बध्यते, उल्व-[illegible] व्याख्यातोऽयमर्थः। अन्ये मधुकानन्तेति योगस्य क्वाथेन किंवा मधुकादीना[illegible] क्षीरेण पिबेदित्यर्थ इत्याहुः। पयस्त्वित्यादि।—सुश्रुतस्य। उल्वनस्तु [illegible]र शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम्" इति पठति, व्याचष्टे च—दशमे [illegible] शुण्ठ्या. क्षीरं विदार्य्या वा क्षीरपाककल्पनया सिद्धं क्षीरं दशमे हितमिति। [illegible]भट्टश्चोक्तं—"योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुक-[illegible]नागरदारुभिः" इति। एतद्वचनसंवादादेव सक्षीरा वा हिता शुण्ठीत्यादावपि [illegible]मधुकदेवदारुभिः सिद्धं क्षीरं दशमे मासि प्रशस्यत इत्यर्थो ज्ञेयः कुशेत्यादि [illegible] ॥ ३ ॥

वसुगुणाब्धेकबाणनवषट्सप्तयुगैः क्रमात्।
सर्वं पञ्चदशादिस्तु त्रिंशकं नवकोष्ठके ॥ १० ॥
कटुतुम्ब्यहिनिर्मोक-कृतवेधनसर्षपैः।
कटुतैलान्वितो धूमो योनेः पातयतेऽमराम् ॥
कचवेष्टितयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा ॥
"एरण्डस्य वने काको गङ्गातीरमुपागतः।
इतः पिबति पानीयं विशल्या गर्भिणी भवेत् ॥"
अनेन सप्तधामन्त्र्य जलं देयं विशल्यकम् ॥
मूलेन लाङ्गलिक्याः संलिप्ते पाणिपादे च।
अमरापातनं मर्त्यः पिप्पल्यादिरजः पिबेत् ॥
शालिमूलाक्षमात्रं वा मूत्रेणाम्लेन वान्वितम्।
उकुञ्चिकां पिप्पलीञ्च मदिरां लाभतः पिबेत्।
सौवर्चलेन संयुक्तां योनिशूलनिवारणीम् ॥ ११ ॥
सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञितम् ॥
यवक्षारं पिबेत्तत्र सर्पिषोष्णोदकेन वा।
पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥ १२ ॥

---

षाड वस्वित्यादि।—वसवोऽष्टौ, गुणास्त्रयः, अब्धयश्चत्वारः, बाणाः पञ्च इ
इयम्। एतद्वैगुण्यादुभयत्रिंशकं भवति। एते नव कोष्ठान् कृत्वा तदभ्यन्
न्तव्याः। वृन्दे तु उभयत्रिंशकमप्युक्तम्। एतद्द्वयं शरावमध्ये लिखित्वा सम्यक्
दर्शयितव्यम् ॥ १० ॥

कटुतुम्बीत्यादि।—कटुतुम्बी तिक्तालावुफलं, कृतवेधनं घोषकभेद ग
फलं; सर्षपः श्वेतसर्षपः। एतैर्धूमं कृत्वा योनिमुखे दद्यात्। उक्तं हि सुश्रु-
"योनिमुखं धूपयेत्" इति। अमरापातनमित्यादौ। —पिप्पल्यादिरज इ
सुश्रुतस्य पिप्पल्यादिगणचूर्णम्। अम्लेन काञ्जिकेन, मद्येनेत्यन्ये। उकुञ्चि
कृष्णजीरकम्। पिप्पलीमित्यनन्तरं प्रक्षिप्येति शेषः ॥ ११ ॥

पागावतशकृत् पीतं शालितण्डुलवारिणा।
गर्भपातान्तरोत्थे तु रक्तस्रावनिवारणम्॥ १३॥
जलपिष्टवरुणपत्रैः सघृतैरुद्वर्त्तनलेपौ तु।
किक्किशरोगं हरतो गोमयघर्षादथो विहितौ॥ १४॥
ह्रीवेरारलुरक्तचन्दनबलाधन्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गुर्विणी॥
नानादोषयुतातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये शस्यते॥ १५॥
अमृतानागरसहचरभद्रोत्कटपञ्चमूलं जलदजलशीतम्।
मधुसंयुक्तं निवारयति सज्वरं सूतिकातङ्कम्॥ १६॥
सहचरपुष्करवेतसमूलं विकङ्कतदारुकुलत्थसमम्।
जलमथ सैन्धवहिङ्गुयुतं सद्यो ज्वरसूतिकरोगहरम्।
दशमूलीकृतः क्वाथः सद्यः सूतिरुजापहः॥ १७॥

वज्रकाञ्जिकम्—

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका।

---

प्रागाया इत्यादि।—सुश्रुतेऽप्युक्तं—"प्रसूतायास्तु वस्त्युदरशिरोयोनिशूलं रक्तं मक्कल्लशूलं करोति स मक्कल्लसञ्ज्ञितः॥ १२। १३॥

जलपिष्टेत्यादौ।—किक्किशरोगो गर्भोत्पीडनेन वस्त्यादिदेशे मनाक् चर्मविदारणम्। अथो अनन्तरं गोमयघर्षणानन्तरं विहितावित्यर्थः॥ १४॥ १५॥

अमृतेत्यादौ।—भद्रोत्कटो भाटविड इति राढाया ख्यातस्तरुः। अन्ये तु भद्रं भद्रमुस्तकम्, उत्कटः इकर इति ख्यातस्तस्य मूलमित्याहुः। पञ्चमूलं स्वल्पपञ्चमूलं जलदं मुस्तकम्, जलं क्वाथः॥ १६॥

सहचरेत्यादौ।—विकङ्कतः वैंचर इति लोके, तस्य मूलम्। कुलत्थः समो यत्र तत् तथा कुलत्थसमम्। जलं क्वाथः। दशमूलीत्यादि।—आमशूलादिसंज्ञाया पुनर्धान्यशुण्ठ्या युक्तस्य धान्यपञ्चकयुक्तस्य वा दशमूलस्य क्वाथमुपदिशन्ति वृद्धाः॥ १७॥

जीरके द्वे हरिद्रे द्वे विड़सौवर्च्चलं तथा ॥
एतैरेवौषधैः पिष्टैरारणालं विपाचितम्।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम्।
मक्कल्लशूलशमनं परं क्षीराभिवर्द्धनम्।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १८ ॥

पञ्चजीरकगुड़ः—

जीरकं हवुषा धान्यं शताह्वा वदराणि च।
यमानी कुष्टिकी हिङ्गुपत्रिका कासमर्दकम् ॥
पिप्पली पिप्पलीमूलमजमोदाथ वाष्पिका।
चित्रकञ्च पलांशानि तथान्यच्च चतुःपलम् ॥
कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च।
गुड़स्य च शतं दद्याद्घृतप्रस्थं तथैव च ॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते ॥
गर्भार्थिनीनां नारीणां वृंहणीये समाहृते।
विंशतिव्यापदो योनेः कासं श्वासं ज्वरं क्षयम्।
हलीमकं पाण्डुरोगं दौर्गन्ध्यं मूत्रकृच्छ्रताम्।

---

वज्रकाञ्जिके पिप्पल्यादिद्रव्यस्य मिलित्वा कर्षत्वयं. काञ्जिकस्य शराव एक, पानीयमप्यल्पम्, एवमेव प्रायशो व्यवहरन्ति वृद्धाः, सकल्ककाञ्जिकपानमुपदिशन्ति च। चक्रस्त्वाह क्षीरपाकविधानेन काञ्जिकस्यापि साधनमिति ॥ १८ ॥

पञ्चजीरकगुडे—जीरकं सूक्ष्मसुखकृष्णजीरकं गुर्जरप्रसिद्धं ; कुष्टिकी राजिका, हिङ्गुपत्रिका वंशपत्रिका ; अजमोदा वनयमानी. अन्तःपरिमार्जनत्वात् यमान्या एव भागद्वयम्। वाष्पिका क्षुद्रराजिका। तथा चान्यच्चतुःपलमिति वक्ष्यमाणकशेरु कादिचतुष्टयं प्रत्येकं चतुःपलमित्यर्थः। दीप्यकं स्थूलजीरकम्। आदौ गुडद्वय

भन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः।
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः॥ १९॥
वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा।
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्द्धनम्॥
दुग्धेन शालितण्डुलचूर्णपानं विवर्द्धयेत्।
स्तन्यं समाहृतः क्षीरसेविन्यास्तु न संशयः॥ २०॥
हरिद्रादिं वचादिं वा पिबेत् स्तन्यस्य शुद्धये।
तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत्॥
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम्।
धात्रीकुमार्य्य पिबेत् क्वाथयित्वा सशारिवम्॥
कफे वा त्रिफलां मुस्तं भूनिम्बं कटुरोहिणीम्।
धात्रीस्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी।
भार्गीदारुवचापाठाः पिबेत् सातिविषाः शृताः॥ २१॥
कुक्कुरमेत्तुकमूलं चर्वितमास्ये विधारितं जयति।
समाहात् स्तनकीलं स्तन्यञ्चैकान्ततः कुरुते॥

---

...ण पक्वा सिद्धे सति जीरकादिचूर्णप्रक्षेपः। पञ्चपलजीरकयोगात् पञ्चजीरक...ति संज्ञा। समाहृत इत्यत्र गर्भ इति शेषः, कुपितमारुतयोगात् चीयमाण...म्य॥ १९॥

सम्प्रति स्तन्यवर्द्धनयोगानाह वनकार्पासिकेत्यादि।—सौवीरकेण काञ्जिकेन। ...रीकन्द भूमिकुष्माण्डम्॥ २०॥

हरिद्रादिमित्यादि।—हरिद्रादि वचादिगणौ सौश्रुतौ।—यथा—"हरिद्रा-...हरिद्राकलसीकुटजबीजानि मधुकञ्च" इति। कलसी पृश्निपर्णी। "वचा-...ातिविषाभद्रदारुनागरशतमूली अनन्तमूलञ्च' इति। भद्रदारु देवदारु। ...ि शतावरी, शारिवा अनन्तमूलम्। सशारिवमित्यत्र सशर्करमिति पाठा-न्तरम्। अमृतादिशारिवान्तस्य क्वाथः॥ २१॥

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितन्त्विह भेषजं तत्।
आमे विदह्यति तथैव गते च पाकम्,
तस्याः स्तनौ सततमेव च निर्दुहीत॥

विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिताम्।
निशाकनककफलाभ्यां लेपश्चापि स्तनार्त्तिहा॥ २२॥
मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया।
अभ्यङ्गमर्दनाभ्यां कठिनपीनस्तनौ भवतः॥ २३॥
महिषीभवनवनीतं व्याधिबलोग्रा तथैव नागबला।
पिष्ट्वा मर्दनयोगात् पीनं कठिनं स्तनं कुरुते॥ १४॥

श्रीपर्णीतैलम्—

श्रीपर्णीरसकल्काभ्यां सिद्धं तैलं तिलोद्भवम्।
तूलकेनैव तत्तैलं स्तनस्योपरि धारयेत्।
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ॥ २५॥

काशीशाद्यं तैलम्—

काशीशतुरगगन्धाशावरीगजपिप्पलीविपक्केन।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि॥ २६॥

---

स्तनविद्रधिचिकित्सामाह कुक्कुरेत्यादि।—कुक्कुरमेष्ठुको गोरचतण्डुला स्म कौलं स्तनविद्रधिः। निशेत्यादौ।—कनकफल धूस्तूरफलम्॥ २२॥

स्तनशोषचिकित्सामाह।—मूषिकवसायां शूकरादिमांसचूर्णं प्रचिप्य स्तनयो रभ्यङ्गमर्दनम् आद्यपुष्पोत्सवे॥ २३॥

महिषीत्यादौ।—व्याधिः कुष्ठम्, उग्रा वचा॥ २४॥

श्रीपर्णी गाम्भारी, तस्यास्त्वचो रसः स्वरसः। स्तनस्योपरि कुर्यात्॥ २५॥

काशीशेत्यादि।—काशीशं धातुकाशीशम्; शावरी लोध्रम्। एषां कल्कं जल चतुर्गुणम्। कर्णः कर्णपाली; वराङ्गं स्त्रीगुह्यम्॥ २६॥

प्रथमर्त्तौ तण्डुलाम्बो नस्यं कुर्य्यात् स्तनौ स्थिरौ ॥ २७ ॥
गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः।
सत्रिकटुनिशाभिः सिद्धं नस्यं स्तनोत्थापनं परम् ॥
सुतनूकरोति मध्यं पीतं मथितेन माधवीमूलम्।
स्याच्छिथिलापि च गाढ़ा सुरगोपाज्याभ्यङ्गतो योनिः ॥२८॥
शववहनस्थितबन्धनरज्ज्वा सन्ताड़नाद्धि दयितेन।
नश्यत्यचलाद्देषः पत्नौ सहजः कृतोऽथवा योगैः ॥
दत्त्वेव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम्।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये ॥ २९ ॥

इति स्त्रीरोगचिकित्सा।

---

# अथ बालरोगचिकित्सा।

कुष्ठवचाभयाब्राह्मीकनकं क्षौद्रसर्पिषा।
वर्णायुःकान्तिजननं लेहं बालस्य दापयेत् ॥ १ ॥

---

प्रथमर्त्तौ आद्यपुष्पोत्सवे ॥ २७ ॥

गोमहिषीत्यादौ।—गोमहिषीघृतयोर्मिलित्वा एको भागः, अपरश्च तैलस्य। श्यामा प्रियङ्गुः, कृताञ्जलिः सर्य्याभक्ता अञ्जलिकारिकेति ख्याता, लाजालुया इत्यन्ये। लज्जावतीति कुत्रचित्। कटुका कटुरोहिणी। एषां कल्कः। जलं चतुर्गुणम्। सुतनूकरोतीत्यादौ—मध्यं स्त्रिया मध्यदेशः, मथितेन घोलेन माधवीमूलं माधवीलतामूलम्। सुरगोप इति इन्द्रगोपाख्यः कीटः सिन्दुरियापोका इति लोके, आज्यं घृतम्, अनयोरभ्यङ्गात् ॥ २८ ॥

शववहनेत्यादि।—शवो मृतः, तद्वहनाय स्थिता या बन्धनरज्जुस्तया। दयितेन भर्त्रा। विप्राय दुग्धभक्तं दत्त्वेति पूर्वेण योज्यम्। भक्ष्ये भक्तादौ ॥ २९ ॥

इति स्त्रीरोगचिकित्सा-विवृतिः।

---

दुष्टस्तन्यपानादिना बालानां रोगसम्भवादनन्तरं बालरोगाधिकारः। तत्र

गव्यं पयश्चतुर्गुणमेवं दत्त्वा पचेत्तैलम्।
तैलाभ्यङ्गः सततं रोगमनामकाख्यमुपहरति॥ १२॥
आर्कं तूलकमाविकरोमाण्यादाय केशराजस्य।
स्वरसेनाक्तेऽवस्त्रे कृत्वा वर्त्तिञ्च तैलाक्ताम्॥
तज्जातकज्जलाञ्चितलोचनयुगलोऽप्यलङ्कृतो बालः।
कष्टमनामकरोगं क्षपयति भूतादिकञ्चापि॥ १३॥
चालनिकातलसंस्थितपोतं संस्नाप्य गव्यमूत्रेण।
क्षीरोदशालिकायां रजकक्षारोदकस्नानम्॥
दासक्रयणश्रावणवटिका रसेन्द्रपूरिता धृता कण्ठे।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम्॥ १४॥
भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु।
देयं तदेव बालानां मात्रा तस्य कनीयसी॥ १५॥
प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः।
एकैकां वर्द्धयेत्तावद्यावत् संवत्सरो भवेत्।
तदूर्द्धं माषवृद्धिः स्याद्यावदाषोड़शाब्दिकाः॥ १६॥

---

तैलस्येत्यादौ।—शिम्बीदल शिम्बीपत्रम्॥ १२॥

आर्कमित्यादि।—अर्कस्य तूलकम् आविकरोमाणि मेषरोमाणि चेति भागत्र केशराजस्वरसरञ्जितवस्त्रैरावेष्ट्य तैलाक्तं ज्वालयेत। तच्छिखोपरि पत्र धृता पतितकज्जलेन चक्षुषी रञ्जन कार्य्यम्॥ १३॥

चालनिकेत्यादि।—क्षीरोदशालिकायां चालनिकातले संस्थितबालक चाल निकारन्ध्रपतितगोमूत्रेण स्नापयित्वा रजकक्षारजलेन स्नापयेत्। दासेत्यादौ — श्रावणः पाषण्डविशेषः भिक्षुवेशधारी योगीति लोके, तस्य वटिका वराटिका कपर्दिकेति यावत्, दासेन दासद्वारा क्रयणं यस्याः सा तथा, तत. कर्मधारय रसेन्द्रेण पारदेन पूरिता सा कण्ठे धृतेत्यर्थः। नलिनीदल पद्मपत्रम्॥१४।१५॥

मात्रा चात्र कनीयसीति यदुक्तम् अतस्तामेव मात्रां प्रतिपादयितु परिभाषा

### हरिद्रादिः—

हरिद्राद्वययष्ट्याह्व-सिंहीशक्रयवैः कृतः।
शिशोर्ज्वरातिसारघ्नः कषायस्तन्यदोषजित्॥ १७॥

### बालचातुर्भद्रिका—*

घनकृष्णारुणाशृङ्गीचूर्णं चौद्रेण संयुतम्।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम्॥ १८॥

### धातक्यादिः—

धातकीविल्वधन्याक-लोध्रेन्द्रयववालकैः।
लेहः चौद्रेण बालानां ज्वरातीसारवान्तिनुत्॥ १९॥
रजनीदारुसरल-श्रेयसीवृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम्।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वशोथनुत्॥ २०॥

---

…प्रथम इत्यादि।—मध्विति मध्वादिविकल्पो दोषप्रकृत्यादिभेदात्। एकैका… …न मासि मासि एकैकां रक्तिकां कृत्वा वर्द्धयेदित्यर्थः। तदूर्द्धमिति वर्षादूर्द्ध… …र्षं माषेण माषेण वृद्धिर्माषवृद्धिः। एतत्परिभाषाशेषो यथा—"प्रतिमास… …त्या वृद्धिरेषा भिषग्वरैः। मानमेतत् प्रयोक्तव्यं सर्वमानविधावपि। षोड-… …शाद्वत्सरादूर्द्ध्वं यावदासप्ततेरिति। एष एव विभागोऽयं तदूर्द्ध्वं बालवत् क्रिया" …न॥ १६॥

…हरीत्यादौ।—सिंही पृश्निपर्णी। यत्र हरिद्रादिगण एवायं श्लोकेन निबद्धः, …चक्रपाणिना पठिता, निश्चलस्तु सिंही वासक इत्याह। यस्तु चीरपो बालः …पातुमसमर्थस्तस्य धात्रीम् पाययेत्। सुश्रुतेन कषायोक्तद्रव्यकल्केन लिप्तयोः …या पानमपि दर्शितम्॥ १७॥

…घनेत्यादि।—घनं मुस्तकम्, अरुणा अतिविषा॥ १८। १९॥

…रजनीत्यादि।—वाग्भटस्य। श्रेयसी गजपिप्पली। बालानां सर्वरोगनु-…त् बालानां सर्वशोथनुदित्यपि पाठो वाग्भटे चन्द्राटेऽपि दृश्यते॥ २०॥

अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतीसारं ग्रहणीरोगञ्च सुदुर्वारम् ॥ ३२ ॥
सितजीरकसर्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुड़सहितः श्वेतसर्जो वा ॥
मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुडतक्रयुक्तमेतद् ग्रहणीरोगं निहन्त्याशु ॥ ३३ ॥
विल्वशक्राम्बुमोचाब्दसिद्धमाजं पयः शिशोः ।
समांशं रक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रतः ।
तद्वदजाक्षीरसमो जम्बूत्वगुद्भवो रसः ॥ ३४ ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ३५ ॥
कणोषणसिताक्षौद्र सूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ ३६ ॥
घृतेन सिन्धुविश्वैला-हिङ्गुभार्गीरजो लिहन् ।
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः ॥ ३७ ॥
हरीतकीवचाकुष्ठं कल्कं माक्षिकसंयुतम् ।

अङ्कोठेत्यादि ।—अङ्कोठ अङ्कोड इति ख्यातस्तस्य । योगद्वये तण्डुलजलं सम्बध्यते । वटजमूलं वटजातमूलं, मूलाकारं ऋस्वप्रमाणं 'ब' इति ख्यातं अतएवोक्तं वटजमूलमिति, न तु वटमूलम् ॥ ३२ ॥

सितेत्यादौ ।—विल्वदलोत्थाम्बु विल्वपत्रस्वरसं । गुडेन मधुरीकृतं गडतक्रम् ॥ ३३ ॥

विल्वेत्यादौ ।—शक्रमिन्द्रयवम्, अम्बु बालकम्, मोचः शाल्मलीवेष्टः सिद्धमिति क्षीरपरिभाषापाक ॥ ३४—३६ ॥

घृतेनेत्यादौ ।—सिन्धु सैन्धवम् । एषां चूर्णं घृतेन लेह्यम् । तोयेन वा लिहन् पिबन्निति शेषः । तेन तोयेन कोष्णजलेन वा पिबेदित्यर्थः ॥ ३७ ॥

पीत्वा कुमारः स्तन्येन मुच्यति तालुपातनात् ॥ ३८ ॥
मुखपाके तु बालानां साम्रसारमयोरजः।
गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम् ॥
अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम्।
दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम् ॥ ३९ ॥
महजम्बीररसेन स्नुग्दलरसघर्षणं सद्यः।
कृतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥ ४० ॥
लावतित्तिरिवल्लूररजः पुष्परसान्वितम्।
द्रुतं करोति बालानां दन्तकेशरवन्मुखम् ॥ ४१ ॥
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत्।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदाः ॥ ४२ ॥
पञ्चमूलीकषायेण सघृतेन पयः शृतम्।
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥

...तकाद्यादि। वागभटस्य। तालुपातनं तालुप्रदेशस्य निम्नता। तालु...वादित्यपि पाठः ॥ ३८ ॥

...मुखपाक इत्यादौ।—आम्रसारः आम्रसदृशपत्रः स्वनामख्यातो गाढार्यामिति ...। अन्ये तु आम्रसारः आम्रफलास्थिमज्जेत्याहुः। आम्रसारादि रसाञ्जना...एक एव प्रलेपः। अश्वत्थस्य त्वक् पत्रञ्च। अपरमित्यत्र प्रलेपनमित्यन्वयः ॥ ३९ ॥

...इत्यादि।—जम्बीरः पणाशभेदः। स्नुग्दलं स्नुहीपत्रम् तस्य स्वरसः पुटपाकविधिनैव ग्रहीतुं शक्यते ॥ ४० ॥

लावेत्यादि।—वागभटस्य। लावतित्तिर्योर्विल्लूरं शुष्कमांसम्, पुष्परसो ...। एतन्मांसचूर्णं मधुना लेह्यमिति केचित्। अन्ये तु मधुनैतच्चर्वणं दन्तपालि...मार्गादित्याहुः। किन्त्वयं योगो वागभटे प्रतिसारणप्रकरणे पठितः। दन्त...केशरमिति दन्ता एव केशरं सुकुमारत्वात् ॥ ४१ ॥

दन्तोद्भेदेत्यादि।—वागभटस्य। दन्तोद्भेदो दन्तभेदः। "दन्तोद्भेदश्च रोगाणां ...मपि कारणम्। विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम्" इत्यादि। ...बालमतियन्त्रयेदिति आहाराचारनियमेनेत्यर्थः ॥ ४२ ॥

सुवर्ण-गैरिकस्यापि चूर्णानि मधुना सह ।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्दितः शिशुः ॥ ४३ ॥
चिवकं शृङ्गवेरञ्च तथा दन्ती गवाच्यपि ।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिबेत् ।
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत् ॥ ४४ ॥
द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ।
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा ॥ ४५ ॥
पुष्करातिविषाशृङ्गीमागधीधन्वयासकम् ।
चूर्णितं मधुना लीढं शिशूनां पञ्चकासनुत् ॥ ४६ ॥
दाड़िमस्य च वीजानि जीरकं नागकेशरम् ।
चूर्णितं शर्कराक्षौद्रलीढं तृष्णानिवारणम् ॥ ४७ ॥
मायूरपक्षभस्मव्युषितजलं तेन भावितं पेयम् ।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वक्त्रशोषजिद्वतं वक्त्रे ॥
पिष्टैस्क्षारेण पयसा दार्वीमुस्तकगैरिकैः ।
वहिर्गालेपनं शस्तं शिशोर्नेत्रामयापहम् ॥ ४८ ॥

---

पञ्चमूलीत्यादि । -पञ्चमूली महती वातकफप्रधानहिक्काहरत्वात् । अत्र क्वाथ-पादिकं घृतम् अष्टमांशं वा ; दुग्धात् तृतीयेन क्वाथ । एतत् सर्वमेकीकृत्य पक्वाथ शोषयित्वा सघृतं दुग्धं स्थाप्यम्, तत्र गुडूचीचूर्णं गुडञ्चानुरूपं प्रक्षिप्य यथा-पिबेदित्याहुः । अन्ये तु घृतस्यापि पानकाले प्रक्षेप्यत्वमिति वदन्ति । सुवर्णगैरिकस्य अत्यन्तलोहितगैरिकस्य ॥ ४३ ॥

चिवकमित्यादौ ।—गवाक्षी गौरक्षकर्कटी । सविबन्धे वाते कफ-योगः ॥ ४४ ॥

द्राक्षेत्यादि ।—कफपित्ते । यासो दुरालभा । तमकं श्वासमित्यर्थः ॥४५ । ४६ ।

दाडिमस्येत्यादौ ।—चूर्णितमित्यत्र कृष्णा चेति पाठान्तरम् ॥ ४७ ॥

मायूरेत्यादौ ।—मयूरपक्षभस्मभावितजलेन व्युषितेन भावितवटकाष्ठभस्म-भावितजलेन पेयमित्यर्थः । मयूरपक्षभस्म पल १, जल पल ६, एतदद्दुभा वस्त्र

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम्।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥ ४९ ॥
मातुः स्तन्यकटुस्नेह-काञ्जिकैर्भाविता जयेत्।
स्वेदाद्दीपशिखोत्तप्तो नेत्रामयमलक्तकः ॥ ५० ॥
शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः।
कुकूलकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥ ५१ ॥
क्रिमिघ्नालशिलादार्वी-लाक्षाकाञ्चनगैरिकैः।
चूर्णाञ्जनं कुकूले स्याच्छिशूनां पोथकीषु च ॥
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूलके।
गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः।
लेपस्तक्रेण हन्त्याशु मिध्मपामाविचर्चिकाः ॥ ५२ ॥

...मध्य गृहीतजलं क्षपितं पलाशेन वटकाष्ठभस्म प्रक्षिप्य बहुधा पाचनात् ... पचेत् ॥ ४८ ॥

मनःशिलेत्यादि।—क्षौद्रेण संयुक्ता संघृष्टा ज्ञेया ॥ ४९ ॥

मातुः स्तन्येत्यादि।—कटुस्नेहः कटुतैलम्। एतस्मात् स्तन्यादिभिः प्रत्येकशः ... भावितोऽलक्तकरसः अनन्तरं दीपशिखयोत्तप्तः सन् स्वेदविधानेन नेत्रामय... हन्ति ॥ ५० ॥

शुण्ठ्यादि।—भृङ्गो भृङ्गराजः। शुण्ठ्यादीनां पिष्टानां प्रत्येकं माषद्वयम्, ...ल्कपञ्चकम्। एतत् सर्वं पुटपाकविधिना पक्त्वा ततः आकृष्य वस्त्रे पीडयित्वा ...तापे आश्च्योतनं कार्य्यम्। कुकूलक इति पाठे कुकूलकम्लेष्वपि, एत-...न पुटपाक इत्यन्वयः। उक्तं हि वागभटे—"शृङ्गवेरं निशा भृङ्ग कल्कितं ...पन्नं। बद्धा गोशकृता लिप्तं कुकूले स्वेदयेत् ततः। रसेन लिम्पेत् ...न्वाल्य नेत्रं च परिषेचयेत्" इति ॥ ५१ ॥

क्रिमिघ्नेत्यादौ।—आलं हरितालम्, शिला मनःशिला; काञ्चनगैरिकं स्वर्ण-...रिकम्। चूर्णाञ्जनमिति मधुक्षिप्तशलाकया चूर्णाञ्जनं कार्य्यम्। सुदर्शनेति ...दर्शना त्रिपुरीति ख्याता जीवपत्रेति च ख्याता ॥ ५२ ॥

अश्वगन्धाघृतम्—

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ५३ ॥

बालचाङ्गेरीघृतम्—

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत् ।
कपित्थव्योषसिन्धूत्थसमङ्गोत्पलबालकैः ॥
सबिल्वधातकीमोचैः सिद्धं सर्वातिसारनुत् ।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥ ५४ ॥

कुमारकल्याणकं घृतम्—

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह ।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥
शटी दुरालभा बिल्वं दाडिमं सुरसः स्थिरा ।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यमग्निपुष्टिविवर्द्धनम् ॥
छायासर्वग्रहालक्ष्मी-क्रिमिदन्तगदापहम् ।
सर्वबालामयहरं दन्तोद्भेदं विशेषतः ॥ ५५ ॥

---

पादकल्क इत्यादौ ।—पेयं कुमाराणामिति कुमारैः पेयमित्यर्थः । वा कर्त्तरि कृत्यैरिति षष्ठी ॥ ५३ ॥

चाङ्गेरीत्यादौ ।—अजाक्षीरचाङ्गेरीस्वरसौ घृताद्द्विगुणौ, पाकसाधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात् ॥ ५४ ॥

शङ्खपुष्पीत्यादौ ।—जीवकं जीवनीयवर्गमध्ये पठितद्रव्यम् । सुरसः पर्णासः । कण्टकारीस्वरसः क्षीरञ्च प्रत्येकं घृताच्चतुर्गुणम् । भूतादिकृता मुखादिवैवर्ण्यकृत् छाया ॥ ५५ ॥

अष्टमङ्गलघृतम्—

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च।
शारिवा सैन्धवञ्चापि पिप्पली घृतमष्टमम्॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने।
दृढ़स्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत्॥
न पिशाचा न रक्षांसि न भूता न च मातरः।
प्रभवन्ति कुमाराणां पिवतामष्टमङ्गलम्॥ ५६॥

लाक्षादितैलम्—

लाक्षारससमं सिद्धं तैलं मस्तुचतुर्गुणम्।
रास्नाचन्दनकृष्णाब्द-वाजिगन्धानिशायुगैः॥
शताह्वादारुयष्ट्याह्व-मूर्वातिक्ताहरेणुभिः।
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत्॥ ५७॥
महामुण्डितिकोदीच्यक्वाथस्नानं ग्रहापहम्।
सप्तच्छदनिशाकुष्ठ-चन्दनैश्चानुलेपनम्॥ ५८॥
सर्पत्वक् लसुनं मूर्वासर्षपारिष्टपल्लवाः।
वैडालविड़जालोम मेषशृङ्गी वचा मधु।
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः॥ ५९
बलिशान्तीष्टकर्माणि कार्य्याणि ग्रहशान्तये।

वचेत्यादि।—वचादीनां कल्कः; जलं चतुर्गुणमिति॥ ५६॥

लाक्षातैले—कुष्ठाब्दचन्दनैरित्येव पाठो वाग्भटपुस्तकेषु दृश्यते, न तु कृष्णाब्द-चन्दनैरिति। तिक्ता कटुरोहिणी, न तु लताकस्तूरी, "समूर्वारोहिणीरास्ना-शताह्वामधुकैः समैः" इति सिद्धसारदर्शनात्॥ ५७॥

महत्यादि।—महा माषपर्णी। कार्य्योऽवाईशतः॥ ५८॥

सर्पत्यादि।—सर्पत्वक् निर्मोकः; अरिष्टो निम्बः; सर्षपः श्वेतसर्षपः, मेषशृङ्गा पत्रम्। मेषशृङ्गमिति पाठे मेषस्य गडरस्य शृङ्गम्॥ ५९॥

बलीत्यादौ।—तत्रादावित्यत्र मन्त्रादाविति पाठान्तरे कुमारस्य हस्तकण्ठादि

मन्त्रस्यार्थं प्रयोक्तव्यस्तत्रादौ सार्वकामिकः॥

ओं नमो भगवते गरुडाय त्र्यम्बकाय सद्यस्तव स्
स्वाहा। ओं कं पं टं शं वैनतेयाय नमः। ओं ह्रीं
चः॥ ६०॥

बालदेहप्रमाणेन पुष्पमालान्तु सर्वतः।
प्रगृह्य मुञ्चिकाभक्तबलिर्देयस्तु शान्तिकः।
"ओं कारी सुवर्णपक्षी बालकं रक्ष रक्ष स्वाहा"॥ ६१।

ओं नारायणाय: नमः। प्रथमे दिवसे मासे वर्षे
गृह्णाति नन्दा नाम मातृका। तया गृहीतमात्रेण प्रथ
भवति ज्वरः। अशुभं शब्दं मुञ्चति, आत्मानञ्च करोति स्तन
न गृह्णाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लौदन
शुक्लपुष्पं, शुक्लसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिका सप्त

न्तरेन्वयं इत्यर्थः। ओं इत्यादिस्वाहान्त एको मन्त्रः। ओं इत्यादिवीज
मन्त्रो द्वितीयः। एवं ओं इत्यादि चः इत्यन्तस्तृतीयः। किं वा मिलित्वा एक एव
दानमन्त्रः॥ ६०॥

बालदेहेत्यादि।—पुष्पमाला शुक्ला। सर्वत इति सर्वासु दिक्षु। भक्तं श
स्यापरस्यभक्तं चतुष्पात्रस्यभक्तं वा। मुञ्चिका स्वल्पशरावा। अत्र स्तत्र
सामन्यत्र नवपट्टीपदानमप्युपदिशन्ति वृद्धाः। अत्र गरुडबलिः सन्ध्यायां दिन
दौगत इति वदे। बालकरक्षामन्त्रमाह ओंकारीत्यादिस्वाहान्तः॥ ६१॥

इदानीं प्रसिद्धफलं रावणकृतकुमारतन्त्रमाह ओं नारायणाय नम इत्यादि
प्रथमे मासे वर्षे वेत्यादि कथम्, यतो वक्ष्यमाणद्वितीयदिवसादिना प्रथममासस्य
बाधितत्वात्, एवं प्रथमवर्षस्यापि द्वितीयतृतीयमासादिद्वादशमासान्तेः पारम्पर्या
दिति। अतोच्यते द्वादशदिनात् परतोऽस्य व प्रथममासस्यावकाश एवं वर्षस्यापि
तथाहि। यदि कुमारो माघे जातस्तदा माघादिगणनया पौषमासि द्वादशमास

टका सप्त शष्कुलिकाः, जम्बुलिका, सप्त मुस्तकाः गन्धं, ध्य ताम्बूलं मत्स्यं, मांसं, सुराग्रभक्तञ्च—पूर्वस्यां दिशि तुष्पथे मध्याह्ने बलिर्दातव्यः। ततः अश्वत्थपत्रं जलकुम्भे निक्षिप्य शान्त्युदकेन स्नापयेत्, रसोनसिद्धार्थकमेषशृङ्गनि-म्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत्। "ओँ नमो रावणाय अमु-ष्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा" एवं दिनत्रय बलिं दत्त्वा चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम॥ ६२॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। चक्षु-रुन्मीलयति, गात्रमुद्वेजयति, न शेते, क्रन्दति, स्तन्यं न गृह्णाति, आत्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

---

जन्म प्रथमात्तीयदिवसविधिरेव ततः ऊर्द्धं द्वादशमासि वर्षत्रिद्विदिन यावत् ...विधिरिति युक्तिमत्पश्याम। मासेन गणनया, न तु चन्द्र... उभय दिनविभाग ...या मासादिगणना कार्य्या, इह द्वादशमासवर्षयोर्विष-...भावप्रसङ्गात्। किंवा आदित्यगत्यादिगणनयापि जन्मदिन एव प्रथमवर्षनिष्ठ ...तादय मात। नन्दादिनामकीर्त्तनञ्च तदुद्देशेन बलिदानार्थम्, यथा अमु-...व्याधिं हन हन मुञ्च मुञ्च स्वाहा नन्दाय नमः इति बलिदानम्। अशुभगन्ध ...गाक्य मुञ्चति विशति। आत्कारः ...। स्वस्तिका वेदिका। जम्बु...का उत्ताम्रमाष। अश्वत्थपत्र जलकुम्भ प्राक्षिप्य गायत्रीं पठित्वा द्विजेन ...दक कर्त्तव्यम्, किंवा बलिदानमत्र यत्र भिषजा कार्य्यमित्याहुर्वृद्धा। मेषस्य ...स्य शृङ्ग। यत्र धूपो नोक्तस्तत्रायमेव धूपो विज्ञेय। यत्र शान्त्युदक नोक्त ...इदमेव शान्त्युदकमुपदिशन्ति। ओँ नम इत्यादि।— मन्त्रो भूत, येऽविशे...प्रतिमातृक वाच्या कुमारस्य नामोच्चारणपूर्वक पठनीया।, यथा—अमुकस्य ...हन हन मुञ्च मुञ्च इति॥ ६२॥

द्वितीय इत्यादि। उन्मीलयति उपरि भ्रमुत्क्षिपति ...हस्तपृष्ठेकमिति

तण्डुलं हस्तपृष्ठैकं गृहीत्वा दधि गुड़घृतञ्च मिश्रितं शराबकं, गन्धताम्बूलं, पीतपुष्पं पीतसप्तध्वजाः, चत्वारः प्रदीपाः, दश स्वस्तिकाः, मत्स्यमांससुराग्रभक्ततिलचूर्णानि—पश्चिमायां दिशि चतुष्पथे बलिर्दातव्यः दिनानि त्रीणि सन्ध्यायां, ततः शान्त्युदकेन स्नापयेत्; शिवनिर्माल्य-सिद्धार्थ मार्जाररोमशीर-बालक-घृतैः धूपं दद्यात्। "ओं नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम्॥ ६३॥

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिं बध्नाति, क्रन्दति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा रक्तचन्दन, गन्धताम्बूलं, रक्तसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिका पक्षिमांससुराग्रभक्तञ्च—दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः। शिवनिर्माल्यगुग्गुलुसर्षपनिम्बपत्रमेषशृङ्गैः दिनत्रयं धूपयेत्। "ओं नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रासय ह्रासय स्वाहा।" एवं दिनत्रयं कार्य्यम् चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥६४॥

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डिका नाम

---

एकवारपरिमितहस्तपृष्ठे तण्डुलान् गृहीत्वेत्यर्थः। अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते भक्तं तदग्रभक्तम्। शान्त्युदकेनेति शान्त्युदकामन्त्रणं कार्य्यम्; एवं सर्वत्र विशेषोक्तिं विना॥ ६३॥

तृतीय इत्यादौ।—अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते तत् अग्रभक्तम्॥ ६४॥

मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। ग्रीवां नामयति, चक्षुरुन्मीलयति, स्तन्यं न गृह्णाति, रोदिति, स्वपिति, मुष्टिं बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पलपुष्पं, गन्धं, ताम्बूलं, दश ध्वजाः दीपाश्चत्वारः, त्रयोदश स्वस्तिकाः, मत्स्यमांससुराग्रभक्तञ्च—उत्तरस्यां दिशि अपराह्णे बलिर्देयश्चतुष्पथे। "ओं नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६५॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति मुष्टिं बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां विधाय गन्धताम्बूलं, शुक्लपुष्पं, शुक्लौदनं, पञ्च ध्वजाः, पञ्च प्रदीपाः, पञ्च वटकाः, ऐशान्यां दिशि बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्य-सर्पनिर्मोकगुग्गुलुनिम्बपत्र-बालक-घृतैर्धूपं दद्यात्। "ओं नमो रावणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा।" चतुर्थदिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६६॥

षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रभेदश्च

---

चतुर्थ इत्यादौ।—दशध्वजा इति शुक्लाः, विशेषाभावात्॥ ६५॥

पञ्चम इत्यादौ।—कुम्भकारचक्रमृत्तिका कुम्भकारचक्रसंलग्नमृत्तिका॥ ६६॥

दर्शयति, मुष्टिं बध्नाति दिवारात्रावुत्थानं भवति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा शुक्लौदनं पीतपुष्पं रक्तपुष्पं, गन्ध-ताम्बूलं, दश दीपाः, दश पीतध्वजाः, दश स्वस्तिकाः, दश वटकाः, चीरजम्बूलिकाः, मत्स्यमांससुराः—आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोकनिम्बपत्रघृतैर्धूपं दद्यात्। "ओं नमो रावणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६७॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, मुष्टिं बध्नाति, रोदिति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

रक्तपुष्पं शुक्लपुष्पं, गन्धताम्बूलं, रक्तौदनं, कृशराः त्रयोदश स्वस्तिकाः त्रयोदश शष्कुलिकाः, जम्बूलिका, मत्स्यमांस-सुराः, त्रयोदश ध्वजाः, पञ्च प्रदीपाः—पश्चिमायां दिशि ग्राम-निष्क्रान्तेऽपराह्णे वृक्षमाश्रित्य बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; गुग्गुलुमेषशृङ्गसर्षपोशीरबालकघृतैर्धूपं दद्यात्। "ओं नमो रावणाय दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥६८॥

अष्टमे दिवसे मासे वर्षे वा गृह्णाति अर्य्यका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गृध्रगन्धः पूतिगन्धश्च

---

षष्ठ इत्यादौ।—चीरजम्बूलिकाः चीरसहितश्छिन्नमाषाः॥ ६७॥

जायते, आहारं न गृह्णाति, गात्राणि उद्वेजयति।

बलिं तस्य प्रवक्ष्यामि यतः सम्पद्यते शुभम्।

रक्तपीतध्वजाः, चन्दनं, पीतपुष्पं, शष्कुल्यः, पर्पटिकाः, मत्स्यमांससुराः, जम्बूलिकाः—प्रत्यूषे बलिं दद्यात्। "ओं नमो रावणाय त्रैलोक्यविद्रावणाय चतुर्दिशमोचणाय व्याधिं हन हन मुञ्च मुञ्च दह दह ओं क्रीं फट् स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६८॥

नवमे दिवसे मासे वर्षे वा गृह्णाति सूतिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। नित्यं छर्दयति, गात्रभेदं दर्शयति, मुष्टिं बध्नाति, निद्रातितरा स्यात्।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्लवस्त्रेण वेष्टयेत्। शुक्लपुष्पं, शुक्लौदनं गन्धताम्बूलं, शुक्लत्रयोदशध्वजाः, त्रयोदश प्रदीपाः, त्रयोदश स्वस्तिकाः, त्रयोदश पुत्तलिकाः, मत्स्यमांससुराः—उत्तरदिग्विभागे ग्रामनिष्क्रामे बलिं दापयेत्; शान्त्युदकेन स्नापयेत्; गुग्गुलुनिम्बपत्रगोधूमगोशृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। "ओं नमो रावणाय चतुर्भुजाय हन हन मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ७०॥

दशमे दिवसे मासे वर्षे वा गृह्णाति निर्ऋता नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, आत्कारं करोति, रोदिति, बध्नाति मूत्रं पुरीषञ्च भवति।

---

सप्तम इत्यादौ।—रक्तौदनं शाल्यादिभक्तम्, अलक्तकादेरञ्जितभक्तं वा। क्रमशः

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पारावारमृत्तिकां गृहीत्वा, पुत्तलिकां कृत्वा, गन्ध- ताम्बूलं रक्तपुष्पं, रक्तचन्दनं, पञ्चवर्णपञ्चध्वजाः, पञ्च प्रदीपा पञ्च स्वस्तिकाः, पञ्च पुत्तलिकाः, मत्स्यमांससुराः—वायव्या दिशि बलिं दद्यात्; काकविष्ठागोमांसगोशृङ्गरसोनमार्जार- रोमनिम्बपत्रघृतैर्धूपयेत्। "ओं नमो रावणाय चूर्णितहस्ताय हन हन मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते शुभम् ॥ ७१ ॥

एकादशे दिवसे मासे वर्षे वा यदा गृह्णाति पिलिपि- च्छिका नाम मातृका, तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति, ऊर्द्ध्वदृष्टिर्भवति, गात्रभङ्ग आत्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनं रक्तपुष्पञ्च तस्या मृत्त दुग्धेन सिञ्चेत्। पीतपुष्पं गन्धताम्बूलं, सप्त पीतध्वजाः, सप्त प्रदीपाः, अष्टौ वटकाः, अष्टौ शष्कुलिकाः, अष्टौ पूपिका मत्स्यमांससुराः—पूर्वस्यां दिशि बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्।

"ओं नमो रावणाय मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे विप्रान् भोजयेत्। ततः सुस्थो भवति बालकः। तेन सम्पद्यते शुभम् ॥ ७२ ॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कामुका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य वादयति, करेण तर्जयति, गृह्णति, क्रामति निश्वसिति, मुहुर्मुहुः स्कन्दयति, आहारं न करोति।

---

तिलवल्क वल्कशिम्बितयवागूः। ग्रामनिष्कामे ग्रामप्रान्ते ॥ ६८—७२ ॥

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।

चौरेण पुत्तलिकां कृत्वा शुक्लकुसुमं, गन्धताम्बूलं, शुक्ल-सप्तध्वजाः, सप्त शष्कुलिकाः, सप्त प्रदीपाः—करम्भकेण सर्वकर्मबलिं दद्यात्; शान्त्युदकेन स्नापयेत् । श्वेतसर्षपगुग्गुलुशिवनिर्माल्यघृतैर्धूपयेत् । "ओं नमो रावणाय मुञ्च मुञ्च हन हन स्वाहा ।" चतुर्थे दिवसे विप्रान् भोजयेत् ॥ ७२ ॥

इति रावणकृतं कुमारतन्त्रं समाप्तम् ॥

इति बालरोग-चिकित्सा ॥

---

## अथ विष-चिकित्सा ।

अरिष्टाबन्धनं मन्त्रप्रयोगश्च विषापहः ।
दंशनं दंशकस्याहेः फलस्य मृदुनोऽपिवा ॥ १ ॥

---

[illegible]मनवमदशमैकादशस्फुटाः । द्वादशं—वादयतीति सम्भाषते । रोदितीति [illegible]म । चौरेणेति पाकात् पिण्डीभूतेन चौरेणेत्यर्थः । करम्भकेण दधिमिश्रित-[illegible] ॥ ७२ ।

इति बालरोगचिकित्साविवृतिः ।

---

इदानीमातुरहितचिकित्सापारिशेष्यात् विषचिकित्सामाह अरिष्टेत्यादि ।—अरिष्टाबन्धनं धमनीबन्धः, स च दंशदेशादूर्द्ध्वं चतुरङ्गुले । यदाह वाग्भटः—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । क्षौमादिभिर्वल्कलैर्वा सिद्धमन्त्रैश्च मन्त्रि[illegible]ते इति । दंशकस्याहेरिति दंशकर्त्तुः सर्पस्य दंशनं दन्तपंक्तिद्वयेनातिपीडनम् । [illegible]व मृदुफलस्यापि । एतच्च सुकुमारद्रव्योपलक्षणं, तेन रम्भामृणालकाण्डाद्यपि [illegible]ध्यम । तत्र सर्वत्र विषसंक्रमणं भवतीति भावः । यदुक्तं वृन्दे—"धर्त्तुं दंशविधौ न भोगिनमसौ प्राप्नोति दष्टो यदा रम्भाखण्डमृणालकोमलफलं दन्तैर्दशत्याशु [illegible]न गच्छेत् ततक्षणमेव तस्य गरलं तद्दष्टवस्त्वन्तरं दंशी नीरसतां नयेच्च बहुधा [illegible]स्य दृष्टेन वै" इति ॥ १ ॥

मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवम्
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः।
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपम्
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात् ॥ २॥
मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ।
अब्दमेकं न भीतिः स्याद्विषात् तस्य न संशयः॥
धवलपुनर्नवजटया तण्डुलजलपीतया च पुष्यर्क्षे।
अपहरति विषधरविषोपद्रवमासंवत्सरं पुंसाम् ॥ ३॥
गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिबेद्दधिघृतान्वितम्।
कुलिकामूलनस्येन कालदष्टोऽपि जीवति ॥ ४॥
श्लेष्मणः कर्णगूथस्य वामानामिकया कृतः।
लेपो हन्याद्विषं घोरं नृमूत्रसेचनं तथा ॥ ५॥

---

मन्त्रमित्यादौ।—प्रत्यङ्गिरा कण्टकीभिन्नीष। शुचिराषाढमासस्य भद्रयोगादश शुभयोगनक्षत्रादियुक्तदिने पुष्यानक्षत्रादियुक्तदिने इत्यन्वय ॥ २॥

मसूरमित्यादि।—मसूरगण्डकमेक, निम्बस्य द्वे पत्रे, तृतीया सहाय। मेषगते रवौ वैशाखे। धवलेत्यादि—स्पष्टम ॥ ३॥

गृहधूम इत्यादौ।—तण्डुलीयकमिति केवलतण्डुलीयकमूलमपि बोध्यम तदुक्त विन्दुसारे—"तण्डुलीयकमूलन्तु पीत तण्डुलवारिणा। तक्षकेणापि मदष्ट निर्विष कुरुते नरम्" इति। कुलिकेत्यादि।—कुलिक, कालाकडभेद स्वल्पफल कुडकरावि इति ख्यात। उपदेशात तण्डुलोदकेन नस्य काय्य, केच पान वदन्ति ॥ ४॥

श्लेष्मण इत्यादि।—योगद्वयम्। मुखस्थितश्लेष्मण इत्येक, कर्णगूथस्य द्वितीय। वामानिकया कृत इति कनिष्ठाङ्गुलीसमीपे वा अङ्गुली, सा अनामिकेत्युच्यते। वामहस्तस्य अनामिकाङ्गुल्या कृत इत्यर्थ,। नृमूत्रसेचन द्वयं

शिरीषपुष्पस्वरसे भावितं श्वेतसर्षपम्।
सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम्॥ ६ ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुःपलम्।
अपि तक्षकदष्टानां पानमेतत् सुखावहम्॥ ७ ॥
वन्ध्याकर्कोटजं मूलं छागमूत्रेण भावितम्।
नस्यं काञ्जिकसंयुक्तं विषोपहतचेतसः॥ ८ ॥

विड्ङ्गविशल्या मधुकं हरिद्रे
मञ्जिष्ठवर्गो लवणञ्च सर्वम्।
कटुत्रिकञ्चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसंयुतानि॥
एषोऽगदो हन्त्युपयुज्यमानः
पानाञ्जनाभ्यञ्जननस्ययोगैः।
अवार्य्यवीर्य्यो विषवेगहन्ता
महागदो नाम महाप्रभावः॥ ९ ॥

---

...यमतमेक। उक्तं हि—"सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः। मूत्रयेत तत्क्षणादेव निर्विषत्वमवाप्नुयात्" इति। अयं तृतीयः योगः॥ ५ ॥

शिरीषेत्यादि।—वाग्भटस्य। श्वेतसर्षपमित्यत्र मरिचानतमिति पाठे मरिचं ...तमरिच शोभाञ्जनवीजम्। अयमेव पाठश्चन्द्राटादौ दृश्यते। अतः श्वेतसर्षप-...ति पाठान्तरमुक्तम्॥ ६ ॥

द्विपलमित्यादि।—वाग्भटस्य। षट्पलीयं मात्रा सर्पदष्टविषयं विशेषविहित...त् न दोषावहेति॥ ७ ॥

वन्ध्येत्यादि।—वन्ध्यः फलरहितः॥ ८ ॥

विड्ङ्गेत्यादि।—सुश्रुतस्य। विशल्या दन्ती, काष्ठपाटला वा, विशालेति ...ठे गोरक्षकर्कटी। मञ्जिष्ठावर्गो मञ्जिष्ठासहितोऽयमेव विड्ङ्गादिवर्ग इत्यर्थः। ...न्ये तु मञ्जिष्ठावर्गं पृथगेव पठन्ति। तच्च टीकाकारैर्न व्याख्यातम्। डल्लनस्तु "विड्ङ्गविशल्ये मधुकं हरिद्रे रक्ता नरेन्द्रो लवणश्च वर्गः" इति व्याचष्टे च—

पीते विषे स्याद्वमनञ्च त्वक्स्थे
प्रदेहसेकादि सुशीतलञ्च ॥
कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥ १० ॥
विषे पक्वाशयगते पिप्पली-रजनीद्वयम्।
मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन नरः पिबेत् ॥ ११ ॥
रजनीसैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम्।
पानं मूलविषार्त्तस्य दिग्धविद्धस्य चेष्यते ॥
सितामधुयुतं चूर्णं ताम्रस्य कनकस्य वा
लेहः प्रशमयत्युग्रं सर्वसंयोगजं विषम् ॥ १२ ॥
अङ्कोठमूलनिःक्वाथं फाणितं सघृतं लिहेत्।
तैलाक्तः स्विन्नसर्वाङ्गो गरदोषविषापहः ॥ १३ ॥

---

विशल्या दन्ती, काष्ठपाटला वा ; रक्तं मञ्जिष्ठा ; नरेन्द्रः स्वर्णालुः , लवण...
लवणपञ्चकमिति। शृङ्गे इति गोशृङ्गे निदध्यादिति पञ्चमेकं स्थापयेत। ...
गोशृङ्गे पञ्चैक स्थापनं सौश्रुतवक्ष्यमाणयोगे तथा दर्शनात्। यथा—"शृङ्गे ...
शृङ्गमयेण चैव प्रच्छादितं पञ्चमुपचितश्च" ॥ ९ ॥

पीत इत्यादौ।—वमनमिति गोमयस्वरसेन मधुयुक्तेन वान्तिः कार्या उक्तं
हि—"समधुर्विषपीतस्य वमनं गोमयाद्रसः" इति। त्वक्स्थे तु विषे शीतल
प्रदेहसेकादि कार्य्यम्। कपित्थेत्यादि।—कपित्थस्य मांसं त्वगस्थ्यादिरहित
मध्यम्। लिह्यादित्यादौ।—ताभ्यामिति सिताक्षौद्राभ्याम्, नतादिति तगरपादि
कातः ॥ १० ॥

विष इत्यादौ।—पिप्पलीद्वयं रजनीद्वयञ्च। सममिति समभागं जलेन देयं
पानञ्चेत्याहुः ॥ ११ ॥

रजनीत्यादौ।—उत्तमं घृतं गव्यघृतम्। दिग्धो विषाक्तशरः तेन विद्धस्य
ताम्रस्य कनकस्य वेति मारितस्य ताम्रस्य तथा मारितस्य सुवर्णस्येत्यर्थः ॥ १२ ॥

अङ्कोठेत्यादि।—अङ्कोठमूलक्वाथमेव पुनः पाकात् फाणिताकारं कुर्य्यात् ॥१३॥

कटभ्यर्जुनशैरीय-शेलुक्षीरिद्रुमत्वचः ।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ १४ ॥
आगारधूममञ्जिष्ठा-रजनीलवणोत्तमैः ।
लेपो जयत्याखुविषं कर्णिकायाश्च पातनम् ॥
यः कासमर्दनैवं वदने प्रक्षिप्य कर्णे फुत्कारम् ।
मनुजो दधाति शीघ्रं जयति विषं वृश्चिकानां सः ॥ १५ ॥
दंश भ्रामणविधिना वृश्चिकविषहृत् कुठेरपादगुड़िका ।
पुरधूपपूर्वमर्कच्छदमिव पिष्टा कृतो लेपः ॥ १६ ॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो वृश्चिकार्त्तानां सुलेपो वेदनापहः ॥ १७ ॥
कुङ्कुमकुनटीकर्कटपलहरितालैः कुसुम्भसम्मिलितैः ।
कृतगुड़िकाभ्रामणतो विदष्टगोधाशरटादिविषजित् ॥ १८ ॥
अङ्कोठपत्रधूमो मीनविषं झटिति विघट्टयेच्छृङ्गी ।
गोधावरटीविषमिवा लेपेन कूढ़कगणिजटा ॥ १९ ॥
कनकोडुम्बरफलमिव तण्डुलजलपिष्टं पीतमपहरति ।
कनकदलद्रवघृतगुड़दुग्धपलैकं शुनां गरलम् ॥ २० ॥

---

इदानीं कीटादिविषचिकित्सामाह कटभीत्यादि ।—शैरीयो झिण्टी, शेलु [illegible] क्षीरिद्रुमा वटोडुम्बरादय ॥ १४ ॥

आगारधूमेत्यादौ ।—कर्णिका कीटवक्त्रमुद्गः । य इत्यादौ ।—नैत मूलम्, [illegible] सपर्य्य ॥ १५ ॥

दंश इत्यादि । दंशे वृश्चिकदंशे । कुठारपादगुडिका पर्णाशमूलकृतगुडिका । [illegible]धूपपूर्वमिति गुग्गुलुना पूर्वं धूपयित्वा अर्कपत्रकृतो लेप ॥ १६ । १७ ॥

गोधादिविषचिकित्सामाह कुङ्कुमेत्यादि । कुनटी मनःशिला, कर्कटकस्य पल्लव [illegible]मम कुसुम्भ कुसुम्भपुष्पम् । शरटादीत्यादिशब्दादञ्जननामिकाज्येष्ठीप्रभृतीना [illegible]हणम् ॥ १८ ॥

कुक्कुरविषचिकित्सामाह कनकेत्यादि ।—कनको धुस्तूरः, उडुम्बर यज्ञोडुम्ब

पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ २ ॥
अविशुद्धशरीरस्य युक्तो रसायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ ३ ॥
गुड़ेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ।
सिन्धूत्थशर्कराशुण्ठीकणामधुगुड़ैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।

---

वेशात् कपालरञ्जनादिषु नातिव्याप्तिः। वृद्धो न रसायनाधिकारी, वक्ष्यति पूर्वे वयसीत्यादि। अन्यत्राप्युक्तं "जरापक्वशरीरस्य व्यर्थमेव रसायनम्" इति तत् कथं जराप्रशमकत्वं रसायनमिति? नैवं जराशब्देनात्र अकालपलित कालि कस्य भाविपलितमुच्यते, अतो नोक्तो दोषः। यत्तु च्यवनप्राशादौ सुवृद्धी.. पुनर्युवेति, तत्र न वृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तम्, तत तपःप्रभा.. वानुगृहीतस्य फलम्, न रसायनमात्रस्येति। सुदान्तस्त्वाह—"रसायनञ्च सुश्रु.. तुर्विषयम्। जरा च व्याधिश्च तद्विध्वंसितुं शील यस्य तद्रसायनम्। जरा.. मृदुत्वेन, न पूर्वापरविरोध अकालजराहरत्वाद्रसायनस्य। भेषज.. पदेन ध्यानमन्त्रादिकं व्यवच्छिनत्ति। ज्वरेति ज्वरातिसारादिभेषजं वाजीकरण.. व्यवच्छिनत्ति। व्याधीति ५.पालरञ्जनकृष्णीकरणादिकञ्च व्यवच्छिनत्तीति"॥ १॥

पूर्वं इत्यादि।—पूर्वं इति यौवनप्रवेश एव। मध्य इति यौवनशेषे। बालवृद्धौ तु रसायनाविषयौ भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च। शुद्धकाय इति वमनविरेचनाभ्यां शुद्धशरीरः॥ २॥

अविशुद्धे तथा फलं नास्तीति मत्वाह अविशुद्धशरीरस्येत्यादि। सुश्रुतस्य युक्त इति प्रयुक्तः। क्लिष्ट इति मलिने॥ ३॥

प्रथमतः हरीतकीरसायनमाह सिन्धूत्थेत्यादि। वर्षासु हरीतकी मा १ सैन्धव मा २ गिलनीया। शरदि हरीतकी मा ५ शर्करा मा ४ खाद्यम्, शीतल जलं पेयम्। हेमन्ते हरीतकी मा ३ शुण्ठी मा २, तप्तजलं पेयम्। शिशिरे हरीतकी मा ३ पिप्पली मा २, तप्तजलं पेयमिति॥ ४॥

तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥
प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥ ५ ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीः क्षौद्रसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ६ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोथं गुल्मं वातबलासकम् ॥ ७ ॥
जरणान्तेऽभयामेकां प्राग्भुक्ताद् द्वे विभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ८ ॥

---

त्रिफलेत्यादौ। आयसीं पात्रीमिति कान्तादिलौहपात्रीम्, लौहपात्रीमित्यनेन ...अपि सूच्यते। कल्केनेति कर्षमितेन। अस्नापिते लिप्ते क्रियते इत्यर्थः। क्वचित् उदकस्थाने घृतमिति पठन्ति ॥ ५ ॥

पञ्चाष्टावित्यादि। सप्तेति छेदः। सङ्ख्याव्यतिक्रमेण नानुक्तपिप्पलीनामुप... चयतीति चक्रः। यद्यपि त्रीणि द्रव्याणि नात्युपयुञ्जीत पिप्पली क्षार... ...मिति तथापि इह द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासो न विरुद्धः किंवा ...पिप्पल्यभ्यासव्यतिरेकेण उत्सर्गापवादन्यायनिषेधो ज्ञेयः। रसायनगुणा ...हणत्वादयः ॥ ६ ॥

तिस्र इत्यादौ। किंशुकः पलाशः। क्षारमिति क्षारोदकम् भावित इति ...र्थः ॥ ७ ॥

जरणान्त इति। प्रातः। प्राग्भुक्तादिति भोजनादौ। मधुसर्पिर्भ्यामित्य...द्विरभिरेव सम्बध्यते ॥ ८ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी॥ ९॥

पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाम्बुवृष्टिः।
धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयो वर्षशतं भवेयुः।
वृद्धदारकमूलानि स्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह भोजयेत्।
माससात्रोपयोगेन मतिमान् जायते नरः।
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥ १०॥
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहाराचारोऽपि सहस्रायुर्भवेन्नरः।

---

मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुरो योगानाह। समू[illegible]
इति गुडूच्याः शङ्खपुष्प्या वा विशेषणम्॥ ९॥

पीतेत्यादि। वाग्भटस्य। अश्वगन्धायाश्चूर्णं पयसा पित्ते, घृतेन वात[illegible]
तैलेन वाते, उष्णोदकेन वातकफ इत्याहुः। धात्रीत्यादौ। तिलाश्च [illegible]
प्रशस्ता। भृङ्गरज इति निर्देशात् सान्तो भृङ्गरजःशब्दो भृङ्गराजवचन उदा[illegible]
क्रमेणेति रसायनक्रमेण॥ १०॥

मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुनात्यग्रवेगः स्याद् बलिष्ठः स्त्रीसहस्रगः।
मन्त्रश्चाय प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥
"ओं नमो महाविनायकाय अमृतं रक्ष रक्ष, मम फल-
सिद्धिं देहि रुद्रवचनेन स्वाहा।"
धात्रीचूर्णस्य कंस स्वरसपरिगतं क्षौद्रसर्पिः समांशम्
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत् समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्यसत्त्वैरुपेतः॥ ११॥

गुडूच्यपामार्गविडङ्गशङ्खिनी-
वचाभयाकुष्ठशतावरी समा।
घृतेन लीढा प्रकरोति मानवम्
त्रिभिर्दिनैः श्लोकसहस्रधारिणम्॥ १२॥

ब्राह्मीघृतम्—

समूलपत्रमादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्।

---

[illegible]।—[illegible] [illegible]। ओं नमः इत्यादिमन्त्रो [illegible] [illegible]भिमन्त्रणाय। धात्रीत्यादि।—कंसं चतुःषष्टिपलानि। [illegible] आमलकफलस्वरसेन भावितम्। भावना च एकविंशति-[illegible]। [illegible] समांशमिति धात्रीचूर्णापेक्षया प्रत्येकं समभागमित्यर्थः। [illegible] प्रत्येकं चतुःषष्टिपलानि। मानीत्यष्टौ पलानि। सितायाः [illegible] अष्टौ प्रसृतानि षोडशपलानीत्यर्थः। स्थापितं भस्मराशाविति प्रावृडा-[illegible] शेषः। वर्षान्ते प्रावृट्कालान्ते शरदीत्यर्थः॥ ११॥

गुडूच्यादि।—शङ्खिनी शङ्खपुष्पी। क्वचित् वचास्थाने इत्येति पठ्यते, किन्तु [illegible] पठिता॥ १२॥

औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥
हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी ।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा ।
सर्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत् ।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च ।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधिं जयेत् ॥
वन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥ १३ ॥

कासश्वासातिसारज्वरपिडककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलाक्षिरोगान् ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम् ।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिजननञ्च ॥ १४ ॥

ब्राह्मीघृतं स्पष्टम् ॥ १३ ॥

कासेत्यादौ ।—पिडकः पिडका । पयः इति दुग्धं पानीयं वा, सुश्रुते क्षीरपानस्य जलपानस्यापि दर्शितत्वात् । यथा—"शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः । त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ।" प्राणिति प्रातरेव चतुर्गुणजलघृतगव्यदुग्धस्य धारोष्णस्य रात्रौ द्विविकर्षपलादि षोडशपलादित्यर्थः ॥ १४ ॥

साध्यसाधनपरिमाणम्—

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूमः॥
मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्वाक्।
सुबहुप्रयोगदोषादूर्द्ध्वञ्च पलत्रयोदशकात्।
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते॥
लोहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका।
मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः॥
त्रिफलाया भागद्वितयं ग्रहणीयं लौहपाकार्थम्॥ १५॥

---

यद्यपि सर्वरसायनश्रेष्ठत्वात् प्रथममेवामृतसारलौहाभिधानमुचितं तथापि [illegible] रसायनान्तराण्यभिधाय बहुप्रपञ्चतया सम्प्रत्यमृतसारलौहमाह [illegible] इत्यादि। तत्र मारणादिविधिप्रशस्तत्वेन प्रथमं तदभिधानं वक्त- [illegible] तथापि दुरूहप्रमयत्वेन साध्यसाधनपरिमाणविधिर्वक्तव्यः। तत्र किम् [illegible] पक्तव्यं इत्याह मेने मुनिरित्यादि।—पलपञ्चकादर्वागित्यत्र संस्कार [illegible] व्यापकतया बहुगुणत्वं न स्यादित्येव हेतुरुन्नेयः। ननु पञ्चपलादर्वाग् [illegible], उक्तञ्चापि पलाष्टकादिति योगरत्नाकरेऽभिहितमित्यत आह स्वतन्त्र [illegible] स्वतन्त्रे स्वीयशास्त्र एव नान्यत्र, तेनाशक्तौ न्यूनमानमपि शास्त्रान्तरोक्तं न [illegible] भावः। लोकसंस्कारसाधनार्थं क्वाथपरिभाषामाह त [illegible] —पचनीयेऽयसीति पञ्चपलादित्रयोदशपलान्ते लौहे या [illegible] तत्परिमितलौहापेक्षया मिलिता त्रिगुणा त्रिफला षट्पलैरधिका [illegible] पञ्चपले लौहे साध्ये लौहापेक्षया [illegible] त्रिफलायाः पञ्चदश पलानि ध्रुवषट्पलैः सह मिलित्वा एकविंशतिपलानि भवन्ति। एवं सह [illegible] ऽपि [illegible]। ननु लौहस्य तावन्मारणस्थालीपाकपुटपाकनिष्पत्तिपाकाः सन्ति, [illegible] कुत्र कियत् त्रिफलापरिमाणम् इत्यतो विभज्य त्रिफलापरि[माणं] दर्शयति मारणपुटनेत्यादि।—लौहमपेक्ष्य कृतत्रिगुणत्रिफलाद्रव्यं ध्रुवषट्- पलसहितमेव त्रिभागं कृत्वा तत्र भागद्वयं प्रधाननिष्पत्तिपाकार्थमवस्थाप्यम्, अपर[ै]कभागेन लौहमारणस्थालीपाकपुटनानि कर्त्तव्यानीत्यर्थः॥ १५॥

सर्वत्राय:पुटनाद्यर्थैकांशे शरावसंख्यातम्।
प्रतिपलमेव त्रिगुणं पाथः क्वाथार्थमादेयम्॥ १६॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावैश्च।
आद्यैकादशकान्तैरधिकं तद्वारि कर्त्तव्यम्॥
तत्राष्टमो भागः शेषः क्वाथस्य यत्नतः स्थाप्यः।

---

तदिह लोहमारणपुटनस्थालीपाकार्थगृहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह सर्वत्रेत्यादि।—आदिशब्दान्मारणस्थालीपाकौ ग्राह्यौ। सर्वत्र पञ्चपलादित्रयोदशपलान्तनिखिलमाने। पुटनाद्यर्थैकांश इति पुटनमारणस्थालीपाकार्थगृहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः। तत्र पञ्चपललौहपुटादित्रयार्थस्थापितत्रिफलैकभागः सप्तपलो भवति, तत्र जलैकविंशतिः शरावा इत्यर्थः। एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादयः तत्र जलस्यापि चतुर्विंशतिशरावादय उन्नेयाः॥ १६॥

किन्तु त्रिगुणतया अधिकमपि जलं देयं, तदर्थमाह सप्तपलादावित्यादि अस्यार्थः—पचनीयपञ्चपलादिलौहमारभ्य त्रयोदशपलान्तलौहापेक्षया त्रिगुणैः पञ्चपलाधिकतया फलत्रयस्य कविंशतिपलरूप चतुर्विंशतिपलरूप भाग वा तत्र तृतीयभागैः पुटनादिकर्मत्रयार्थस्थापितैः सप्तपलाष्टपलादिक्रमगणनया लौहत्रयोदशपलान्तेन त्रिफलाया पञ्चदशपलानि भवन्ति, तेषां क्वाथ प्रतिशरावसङ्ख्यया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य पञ्चदशपलपर्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्यन्तं जलशरावैरधिकं विधेयमित्यन्वयः। तेन सप्तपलं त्रिफलाद्रव्यं जलशरावत्रयमधिकम्, अष्टपले शरावचतुष्टयम्; एवं क्रमेण त्रयोदशपलान्त ज्ञेयम्। एतद्वचन स्पष्टीकरणार्थं पत्रिका लिख्यते। लौहपल ५, मारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ७, पाथ श २१, अधिक श ३, मिलित्वा श २४। एवं षट्पललौहमारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ८, पाथः श २४, अधिक श ४, मिलित्वा श २८। सप्तपललौहमारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ९, पाथ श २७, अधिक श ५, मिलित्वा श ३२। अष्टपललौहे त्रिफलैकभाग पल १०, पाथ श ३०, अधिक श ६, मिलित्वा श ३६। नवपललौहे त्रिफलैकभाग पल ११, पाथ श ३३, अधिक श ७, मिलित्वा श ४०। दशपललौहे त्रिफलैकभाग पल १२, पाथ

तेन हि मारणपुटनस्थालीपाका भविष्यन्ति॥ १७ ॥
पाकार्थे तु त्रिफलाभागद्वितये शरावसंख्यातम्।
प्रतिपलमम्बु समं स्यादधिकं द्वाभ्यां शरावाभ्याम्॥
तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतोग्राह्यः।
प्रथमः पाकार्थत्वात स च सर्वस्मात् प्रधानतमः॥

---

३६ अधिक श ८, मिलित्वा श ४४। एकादशपललौहे त्रिफलैकभाग पल १३, श ३९ अधिक श ९, मिलित्वा श ४८। द्वादशपललौहे त्रिफलैकभाग पल पाथ श ४२ अधिक श १०, मिलित्वा श ५२। त्रयोदशपललौहे त्रिफलैक पल १५, पाथ श ४५, अधिक श ११, मिलित्वा श ५५। इदानीमेतज्जल प्रमाण कियदवशिष्टमित्याह तत्रेत्यादि।—तत्रेति त्रिफलैकभागस्य क्वाथार्थ तत्र पञ्चपललौहे त्रिफलैकभागक्वाथार्थ जलशरा २३, शेष श ... एव पललौहे त्रिफलाक्वाथार्थ जल श २८, शेष सार्द्धशरावत्रयमित्यादि ... यम ... तृणधान्यादिनिवारणार्थं न्यूनाधिकतापरिहारार्थञ्च। उक्तं हि यत्र ... क्वाथेन मन्दपाकेन वह्निमान्द्यं भवेद्ध्रुवम्। क्वाथस्याधिकपाकस्य मन्द ... फलम्' इति। हि ... मारणपुटनादि सहत कर्मत्रय तत्र क्वाथेन ... प्रमाण, तत्र तत्र यत्नतः कर्त्तव्य इत्यर्थः। ननु एकस्मिन् दिने मारणादिकर्म ... अशक्यम्. यदि पुनरेकस्मिन् दिने मारणम्, अपरदिने पुटनादिक ... तदा क्वाथस्य पर्य्युषितत्वं नाम्लत्व स्यात्, सत्य, प्रत्यह ततक्वाथस्य ... नाम्लता। यद्यपि तापादल्पक्वथित तदपि सूक्ष्मत्वात सक्रान्ताधिक ... दोषमावहति। एवमेव वृद्धा अपि व्यवहरन्ति। लौहशास्त्रेऽप्युक्त ... ककट्काम्लभिर्माक्षिकल्पो निहन्त्यथ सुतराम। पर्य्युषितः परिशोषाद् पटाद् गलित" इति। अत्यदत्तद्वस्तु त्रिफलायास्तृतीयभागमपि त्रिधा ... विभज्य मारणपुटनस्थालीपाकरूपकर्मत्रयार्थक्वाथ प्रत्यहमेव कार्य्य हि॥ १७॥

इदानी प्रधाननिष्पत्तिपाकार्थस्थापितत्रिफलाभागद्वयस्य क्वाथविधिमाह पाकार्थे इत्यादि। पाकार्थ इति प्रधाननिष्पत्तिपाकार्थे, त्रिफलाभागद्वितये इति पूर्वोक्त-लौहपञ्चपलादौ त्रयोदशपलान्ते क्रमेण त्रिफलाया भागद्वयं चतुर्दशपल-

पाकार्थमश्मसारे पञ्चपलादौ त्रयोदश पलान्ते।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम्॥ १८॥
पञ्चपलादिमात्रा तदभावे तदनुसारतो ग्राह्यम्।

---

षोडशपलाष्टादशपलादयस्त्रिंशत्पलान्ता भवन्ति। तत्र त्रिफलायाः प्रतिपलं एकशरावं जलं दातव्यम्, किन्तु सर्वत्रैव शरावद्वयमधिकं ध्रुवत्वेन देयम्, तेन त्रिफलायाश्चतुर्दशपले षोडश वारिशरावाः क्वाथार्थं देयाः; षोडशपले अष्टादश जलशरावा इत्यादिक्रमेण बोद्धव्याः। स च क्वाथः कियदवशिष्टः स्थाप्य इत्याह चतुर्थांशेत्यादि।—प्रयत्नतो ग्राह्य इत्यत्र हेतुमाह अयस इत्यादि।—चतुर्थावशिष्टक्वाथस्य नाखिलकृतप्रधाननिष्पत्तिपाकार्थत्वादित्यर्थः। स चेति निष्पत्तिपाकः। सर्वत्रादिति मारणपुटनादि। प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि, तच्च दुग्धं पञ्चपलादित्रयोदशपलान्तलौहेषु कियन्मात्रं देयमित्याह पाकार्थमित्यादि।—अत्र एक आदिर्येषां पादानां शरावचतुर्थांशानां पादद्वयत्रयादय एकादिकाः पादाः, तैरधिकं दुग्धशरावद्वयं पुटनामंस्कृतलौहचूर्णं पञ्चपलादित्रयोदशपलान्तं यथाक्रमं पक्तव्यमित्यर्थः। तेन पञ्चपललौहं पक्तव्यं सति सपाददुग्धशरावद्वयम्। षट्पले तु पादद्वयाधिकं दुग्धशरावद्वयम् सप्तपले पादत्रयाधिकं दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्यन्तमूह्यमिति। १८॥

लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति तदा पञ्चपलादर्वाक् एकपलादिचतुःपलपर्यन्तं लौहपाकः कर्त्तव्यः, तथा यथाशक्तिसम्भवे त्रयोदशपलादुपर्य्यपि चतुर्दशपलादिलौहस्य पाकः कर्त्तव्य इत्यर्थमाह पञ्चपलादीत्यादि—चत्वरादिकमेकान्तमिति चतुस्त्रिद्व्येकम्। नन्वेवं सत्येकपलादिचतुःपलान्ते लौहे तथा त्रयोदशपलादूर्द्धञ्च चतुर्दशपलादौ लौहे जारणादिकर्मत्रयार्थम्, तथा प्रधाननिष्पत्तिपाकार्थञ्च कीदृशं क्वाथ्यत्रिफलाया मानं ग्रहणम्, एतत्क्वाथार्थं जलदानं वा कीदृशम्, स्थाप्यः शेषो वा कीदृशः, प्रधाननिष्पत्तिपाकार्थं दुग्धदानं वा कीदृशं—तदर्थमाह तदनुसारतो ग्राह्या इति पञ्चपलादिलौहमारणाद्यर्थक्वाथादिदानानुसारत इत्यर्थः। इदानीं तदनुसारत इत्यस्य विवरणाय पत्री लिख्यते— सर्वैकपले लौहे मारणादिकर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागो ग्राह्य एव भवति, प्रतिपलञ्च जलशरावत्रयवृद्धिरुक्ता, ततस्तदनुसारात् प्रतिपलञ्च

चतुरादिकमेकान्तं शक्तावधिकं त्रयोदशकात् ॥ १८ ॥

---

शरावदैगुण्यात् नव जलशरावा भवन्ति। तथा सप्तपलादौ भाग इत्यनेन चादि शरावाधिकत्वमुक्तम्, अतस्तदनुसारात् पञ्चपलादर्वागपि क्रमेण पाददश ह्रासेन। एकपललौहस्य मारणादिकर्मत्रयार्थं गृहीतत्रिफलायास्तृतीयभागे अपरोऽपि जलशराव एको ध्रुवत्वेन देयो भवति, अतः पूर्वोक्तनवजलशरावैर्मिलिता दश शरावा इति। तथा द्विपललौहे कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयो भाग पलचतुष्टयो भवति। प्रतिपलञ्च शरावत्रैगुण्यात द्वादश जलशरावा, तथा सप्तपलादौ भाग इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एको ध्रुवत्वेन देयो भवति, अतो मिलित्वा सार्द्धत्रयोदश जलशरावा भवन्ति। एवं त्रिपललौहे कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पञ्च पलानि भवन्ति, प्रतिपलञ्च जलशरावत्रैगुण्यात् पञ्चदश जलशरावाः; सप्तपलादौ भाग इति वचनानुसारादपरमपि जलशरावद्वयमधिकं ध्रुवत्वेन देयम्, तेन मिलित्वा सप्तदश शरावाः। चतुःपललौहेऽपि कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पलषट्कम्, प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादश जलशरावाः, सप्तपलादौ भाग इत्यनुसारादपरमपि पादद्वयाधिकजलशरावद्वयं ध्रुवत्वेन देयं भवति; तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे यत् क्राथादिमानं तत् पूर्वमेव निरूपितम्। त्रयोदशपलादुपरि चतुर्दशपलादौ त्र्याद्येकादशकान्तैरित्यनुसारात् पूर्वापरया शरावैर्नैव जलस्य वृद्धिः कर्तव्या, क्राथस्याष्टमांशः शेषः, एवं सर्वत्रैव। प्रधाननिष्पत्तिपाकार्थमपि एकपललौहे च त्रिफलाया भागद्वये षट् पलानि, प्रतिपलमम्बु समं स्यादित्युक्तेश्च त्रिफलायाः क्राथार्थम्, जलस्य षट् शरावा, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्तव्या इति मिलित्वा अष्टौ जलशरावाः, चतुर्थभागावशेषात् क्राथस्य शरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च एकपले तु लौहे क्रमात् पादह्रासेन सपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुणं त्रिगुणं चतुर्गुणं लौहापेक्षया, यथाप्रकृतिदोषभेदेन; तेन वातप्रकृतौ घृतं लौहाच्चतुर्गुणम्, पित्तप्रकृतौ त्रिगुणम्, श्लेष्मप्रकृतौ द्विगुणमिति। एवं द्विपले लौहे। द्विपललौहस्य प्रधानपाके त्रिफलाया भागद्वयेऽष्टौ पलानि, प्रतिपलमम्बु समम, स्यादित्युक्तेः जलस्याष्टौ शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्तव्या इति मिलित्वा दश जलशरावाः; चतुर्थभागावशेषात् क्राथस्य सार्द्धशरावद्वयम्; पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च

त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि।
जातीफलजातीकोषैलाकक्कोलैलवङ्गानाम्।
सितकृष्णजीरयोरपि चूर्णान्ययसा समानि स्युः॥ २०॥
त्रिफलात्रिकटविडङ्गा नियता अन्ये यथाप्रकृति॥
कालायसदोषहृते जातीफलादेर्लवङ्गान्तस्य।
चपप्राप्त्यनुरूपः सर्वस्योनस्य चेकार्यः॥

---

द्विपलं तु क्रमात पादह्रासेन दुग्धञ्च सार्द्धशरावैकं भवति, घृतञ्च प्रकृत्याद्यपेक्षया ... त्रयम। त्रिपललौहस्य प्रधानपाके तु त्रिफलाया दश पलानि प्रति पलमम्बु सम स्यादित्यं क्रमेण जलस्य दश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा द्वादश जलशरावाः, चतुर्थभागावशेषात् स्थाप्यं शरावत्रयम, दुग्धञ्च पादोनशरावद्वयम घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम। चतुःपललौहस्य प्रधानपाके तु त्रिफलाया द्वादश पलानि, प्रतिपलमम्बु सम स्यादित्यं क्रमेण जलस्य द्वादश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा चतुर्दश शरावाः, चतुर्थभागावशेषात् स्थाप्यन्तु सार्द्धशरावत्रयम, दुग्धं शरावद्वयम घृतञ्च पूर्ववदिति। त्रयोदशपलादुपरि चतुर्दशपललौहस्य प्रधानपाके स्थापितत्रिफलाया भागद्वये पूर्ववदेव जलं देयम स्थाप्यञ्च चतुर्थभाग पूर्वपूर्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः स्पष्टतरैव, घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिक्रमेणैति। तदनुसारत इति ग्रन्थो विस्तृत ॥ १९ ॥

पञ्चावताधितस्मात् लौहे प्रक्षेपार्थ चूर्णमाह त्रिफलत्यादि।— कान्तक्रामकाङ्क्रामुस्तकम। सितकृष्णेति द्वय जीरकविशेषणम। अयसा समानीति य लौहचूर्णं तावदेव मिलित्वा त्रिफलादिचूर्णमित्यर्थः ॥ २० ॥

इदानीमनयोः त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह त्रिफलेत्यादि।—कालायसदोषहृत इति छेदः। अन्य इति जातीफलादयः। उक्तत्रिफलादिसप्रकारं नियतत्व हेतुमाह कालायसदोषहृत इत्यादि।—कालायसं वज्रपाण्ड्यादिलौह एव कान्तत्वञ्चास्य प्रशस्तत्वं न कीर्त्यते। यदुक्तं पातञ्जले—"कज्जलाभा गिरीजाता रसायनविधौ मता" इति, पतितदानवशिरसि जाता इत्यर्थ। उक्तं हि पातञ्जले—
"कफपित्तानिलप्राया देहास्तत्र महौजसः। पतिता दानवास्तत्र प्रदेशाश्चापि तादृशाः

कान्तक्रामकमेकं निःशेषं दोषमपहरत्ययसः।
द्विगुणत्रिगुणचतुर्गुणमाज्यं ग्राह्यं यथाप्रकृति ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वा तथापि चूर्णानाम्।
अयसा साम्यं संख्या भूयोऽल्पत्वेन भूयोऽल्पा ॥ २१ ॥

---

गविभागास्ततो जाता उत्तमाधममध्यमाः। कफेनैवं शिरःस्थानं हृदयं पित्त-
स्थलम्। वायोर्नाभिरधश्चैवमिति देहविदो विदुः। वर्चोजा व्याधिनाशार्थं
त्वजा वाजिकर्मणि। शिरोजा देहसिद्ध्यर्थमित्येवं त्रिविधा मताः" इत्यादि।
याभवो दोष. आयसः, स चाकारदृष्टिवशात्, तस्याकृतिहरणे प्रशस्त इति यावत्।
यदि कान्तक्रामकस्यापि लौहदोषहरणत्वेनावश्यप्रक्षेप्यत्वोपवर्णनमित्येव युज्यते,
तथापि तस्यैकस्यापि निःशेषदोषहरणत्वकरणार्थं पृथगभिधानं कान्तक्रामक-
स्यादनार्थे करिष्यति, तथा कान्तक्रामकस्यापि नियतं प्रक्षेप्यत्वमिति ज्ञेयम्।
जातीफलादीनां प्राप्त्यनुरूपं प्रक्षेप्यत्वमाह जातीफलादेरित्यादि। – प्राप्त्यनुरूपं इत्य-
स्यार्थमाह सर्वेषामस्य चैकाद्यैरिति यदयुक्तं जातीफलादिलवङ्गान्तं यदा सर्वमेव
लभ्यते तदा सर्वस्यैव प्रक्षेपः, यदा सर्वं न लभ्यते तदा एकद्वित्र्यादिभिर्जातीफलादि-
भिरेतस्यापि प्रक्षेपः। कान्तक्रामकस्यापि अवश्यप्रक्षेप्यत्वमाह कान्तक्रामकमेक-
मित्यादि। किन्तु यदा लौहस्य निष्पत्तिपाकः कर्त्तव्यः, तदा प्रथमतो घृतं देयम्,
ततो लौहचूर्णम्, ततस्त्रिफलाक्वाथः, ततो दुग्धम्, तत एकीकृत्य लौहः पच्यते।
घृतातिरेकेण च सर्वत्र लौहपाकानुपलम्भ इति स्थितिः, अतः परिमाणपूर्वकं घृत-
माह द्विगुणेत्यादि। द्विगुणत्वादिकञ्च लौहमपेक्ष्य, यथाप्रकृतीति कफपित्तवात-
प्रकृतिषु यथाक्रमं द्विगुणत्वादि बोद्धव्यमिति; द्वन्द्वप्रकृतौ च मिश्रविधिः, समप्रकृतौ
मर्यादाबाधः, तेन त्रिगुणमित्यन्वयः। ननु त्रिफलादि लवङ्गान्तसमग्रभेषजप्राप्ति-
र्यदि भवति, तदा प्रक्षेप्यचूर्णस्य भूयस्त्वम्, यदि समग्रं न लभ्यते, तदाल्पीयस्त्वम्,
तत् कथमयसा साम्यमित्याह यदीत्यादि। – भूयोऽल्पसंख्येति सम्बन्धः, भूयसा
अल्पा वा संख्या प्रक्षेप्यचूर्णानां भूयस्त्वेऽल्पत्वे वा न प्रयोजिकेति शेषः। तेन यदा
भेषजानां समग्राणां प्राप्तौ संख्याकृतभूयस्त्वं तदा भागक्रमेण मिलितचूर्णानां लौह-
नैव समत्वम्। सम्यगप्राप्तौ च संख्याकृतस्तोकत्वं स्यात् तदा भागहृद्ध्या मिलित-
चूर्णानां लौहचूर्णेन समत्वं विधेयमिति भावः। यद्यपि नानाचार्यैस्तेषु लौह-
योगेषु प्रक्षेप्यचूर्णानां लौहसमत्वम्, तदर्द्धमानत्वम्, तच्चतुर्थमानत्वञ्चाभिहितं

एवं धात्वनुसारात् तत्तत् कथितौषधस्य बाधेन ।
सवत्रैव विधयस्तत्तदकथितस्यौषधस्योह्यः ॥ २२ ॥
इति साध्यसाधनपरिमाणविधिः ॥

---

तथाप्यमृतसारलौहे प्रक्षेप्यचूर्णानां मिलित्वा लौहचूर्णसमत्वमेवेति वचनादत्रापि बोध्यम् । २१ ॥

इदानीमुक्तौषधमध्ये यद् यद्दोषाद्यननुरूपं तदपनेयम्, यत् तत्रोचितं तदौषधं विधेयमित्याह एवमित्यादि ।—पूर्वन्तु तत्तद्वचनव्याख्यानाभिव्यक्तिनिमित्तं स्थाने स्थाने पत्रिकाक्रमो लिखितः । इदानीं तत्सर्वमेकीकृत्य एकपलादिद्वादशपलपर्यन्तं पत्रिकाक्रमेण लिख्यते । तत्र एकपलल्लौहे मारणादिकर्मत्रयार्थं मिलित्वा त्रिफला पल ३, पाथ श १, शेष श १ पल २, तथा निष्पत्तिपाकार्थं मिलित्वा त्रिफला पल ६, पाथ श ८, शेष श २, दुग्ध श १ पल २, घृतञ्च यथाप्रकृत्यं, चूर्णमानन्तु स्पष्टमेव । अथ द्विपलल्लौहे मारणादिकर्मत्रयार्थं त्रिफला मिलित्वा पल ४, पाथ श १३ पल ४, शेष श १ पल ५, कर्ष २ ; निष्पत्तिपाकार्थं त्रिफला मिलित्वा पल ८, पाथ श १०, शेष श २ पल ४, दुग्ध श १, पल ४ , घृतञ्च यथाप्रकृत्यैव, चूर्णमानन्तु स्पष्टमेव । अथ त्रिपलल्लौहे मारणादिकर्मत्रयार्थं मिलित्वा त्रिफला पल ५, पाथ श १७, शेष श २ पल १ , निष्पत्तिपाकार्थं त्रिफला पल १०, पाथ श १२, शेष श ३, दुग्ध श १ पल ६ , घृत चूर्णमानञ्च स्पष्टमेव । चतुष्पलल्लौहे जारणादिकर्मत्रयार्थं त्रिफला पल ६, पाथ श २० , पल ४, शेष श २ पल ४ कर्ष २ , प्रधानपाकार्थं त्रिफला मिलित्वा पल १२, पाथ श १४, शेष श ३ पल ४, दुग्ध श २ , घृत चूर्णमानञ्च स्पष्टमेव । पञ्चपललौहे मारणादिकर्मत्रयार्थं त्रिफला पल ७, पाथ श २४, शेष श ३, प्रधानपाकार्थं त्रिफलापल १४, पाथ श १६ शेष श ४, दुग्ध श २ पल २ , घृतादि स्पष्टमेव । षट्पलल्लौहे जारणादिकर्मत्रयार्थं त्रिफला पल ८, पाथ श २८, शेष श ३ पल ४ , प्रधानपाकार्थं त्रिफला पल १६, पाथ श १८, शेष श ४, पल ४, दुग्ध श २ पल ४ ; घृत चूर्णमानञ्च स्पष्टमेव । सप्तपललौहे जारणादिकर्मत्रयार्थ त्रिफला पल ९, पाथ श ३२, शेष श ४ प्रधानपाकार्थं त्रिफला पल १८, पाथ श २०, शेष श ५, दुग्ध श २ पल ६ घृत चूर्णमानञ्च स्पष्टम । अष्टपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल १० पाथ श ३६, शेष श ४, पल ४ , प्रधानपाकार्थं त्रिफला पल २०, पाथ श २२, शे

लौहमारणविधिः—

कान्तादिलौहमारणविधानसर्व्वस्वमुच्यते तावत् ॥ २३ ॥
यस्य कृते तल्लौहं पक्तव्यं तस्य शुभदिवसे ।
मसृदङ्गारकरालितनतभूभागे शिवं समभ्यर्च्य ।

---

पल ४, दुग्ध श ३ ; घृतं चूर्णमानञ्च स्पष्टम् । नवपललौहे जारणादिकर्म-र्थं त्रिफला पल ११, पाथ श ४०, शेष श ५ ; प्रधानपाकार्थं त्रिफला पल, पाथ श २४, शेष श ६, दुग्ध श ३ पल २ ; घृतं चूर्णमानञ्च स्पष्टम् । दश-लौहे जारणादिकर्मनयार्थं त्रिफला पल १२, पाथ श ४४, शेष श ५ पल ४ ; नपाकार्थं त्रिफला पल २४, पाथ श २६, शेष श ६ पल ४, दुग्ध श ३ पल घृत चूर्णमानञ्च स्पष्टम् । एकादशपललौहे जारणादिकर्मनयार्थं त्रिफला १३, पाथ श ४८, शेष श ६ ; प्रधानपाकार्थं त्रिफला २६, पाथ श २८, शेष ७, दुग्ध श ४ ; घृतं चूर्णमानञ्च स्पष्टम् । द्वादशपललौहे जारणादिकर्म-ाय त्रिफला पल १४, पाथ श ५२, शेष श ६ पल ४ ; प्रधानपाकार्थं त्रिफला । २८, पाथ श ३०, शेष श ७ पल ४, दुग्ध श ४ पल २ ; घृतं चूर्णमानञ्च ष्टम् । त्रयोदशपललौहे जारणादिकर्मनयार्थं त्रिफला पल १५, पाथ श ५६, श ७, प्रधानपाकार्थं त्रिफला पल ३०, पाथ श ३२, शेष श ८, दुग्ध श ४ ४ । तदेव एकादित्रयोदशपलान्तलौहस्य साध्यसाधनपरिमाणविधौ पत्रिका खिता, एवमुक्तरीत्या च चतुर्दशपलादिलौहेऽपि साध्यसाधनपरिमाणमुन्नेय-ति । साध्यसाधनपरिमाणविधिरिति साध्यं लौहं, साधनं त्रिफलादि, तयोः रिमाणविधिरित्यर्थः ॥ २२ ॥

इति साध्यसाधनपरिमाणविधिः ।

इदानीं लौहजारणविधिमाह कान्तादीत्यादि ।—आदिशब्दात् पाण्डिवज्रादयो गृह्यन्ते ; एषां लक्षणानि प्रदीपस्य चतुर्थपरिच्छेदेऽनुसन्धेयानि । लौह रणविधानमेव सर्व्वस्वं तदधीनत्वात् पुटादिकर्मणां, किन्तु सुमृतमेव लौहं गुण , तदुक्तं—"सुमृतञ्च यतो लौहममृतेन समं नृणाम् । दुर्मृतं शूलविष्टम्भौ र्गन्थितिसञ्चयम् । भवेद्यौवधे तस्माद्यत्नं कुर्य्याद्भिषग्वरः" ॥ २३ ॥

यस्य कृत इति यस्यातुरस्य निमित्तम् । लौहमारणाय भूमिसंस्कारपूर्वकमिति च्यतामाह मसृदित्यादि ।—मृदा सह अङ्गारमेकीकृत्य सञ्चूर्ण्य तेन करालिते

वेदिकविधिना वह्निं निधाय हुत्वाहुतीस्तत्र ॥ २४ ॥
धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि।
शक्त्यनुरूपं दद्याद्द्विजाय सन्तोषिणे गुणिने ॥
सन्तोष्य कर्मकारं प्रसादपूगादिदानसम्मानैः
आदौ तदश्मसारं निर्मलमेकान्ततः कुर्यात् ॥ २५ ॥

---

दन्तुरिते छिन्न इति यावत्, एतेनातितापान्मृत्तिका न गलति; नतमध्ये मध्यनिम्नभूभागे। शिवमित्युपलक्षणं, तदुक्तं—"अर्चयित्वा विधानेन हेरम्ब गुरुभास्करौ। लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम्। आदित्य देवताश्चैव धन्वन्तरिपतञ्जली। दद्याद्बलिञ्च सर्वेभ्यो नानाभक्ष्योपचारतः" इति वह्निमिति वन्यदिव्यानलं, तदभावे दारुद्वयसङ्घट्टनजमग्निम्। यदाह पतञ्जलि— "दिव्यं दावं समादाय लौहकर्म समाचरेत्। यदि दिव्यानलाभावस्तदा घर्षणसम्भवं ॥ आरोप्य कर्मशालायामग्निं यत्नेन पूजयेत्" इति ॥ २४ ॥

यद्यपि दृष्टादृष्टरूपेण कार्य्यचक्रेण कार्य्यं सिध्यति तथा दृष्टमप्यदृष्टवशादुपतिष्ठते। इत्यदृष्टस्यैव रमणीयत्वं मन्यमान आह धर्मादित्यादि श्रेय इत्यभिमतप्रशस्तफलम्। किमपीति धान्यहिरण्याद्यदानाद्यन्यतमं यथाशक्ति दद्यादित्यर्थः। मारणाथ लौहसंस्कारमाह आदावित्यादि।—अश्मसारं लौहं निर्मलमिति शोधनविधिना कार्य्यं तद्यथा प्रथमं लौहं शिलादिना निर्मलीकृत्य पत्तनं कार्य्यं, तदनु चाङ्गेरीमातुलुङ्गाम्लवेतसेनाम्लयित्वा सप्तवारं प्रत्यहमातपे संशोष्य ततः काञ्जिकादौ दिनद्वयं त्रयं वा स्थाप्यम्, एवमम्लभावना विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयम्; ततश्च मन शिला-वल्मीकमृत्तिकाकुठारिकामूलचाङ्गेरीश्वेतदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम्। ततश्च "पत्तनं निर्मलं कृत्वा लौहमम्लीकृतं पुनः। मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया। भावितं भावयेत् तत्र वल्मीकामलकेऽपि च कुठारच्छिन्ना चाङ्गेरी गरुडदूर्वा ससैन्धवा ॥ अभिलिप्तं यथाप्राप्ति शोष्यं सूर्य्यांशुक्रमात् ॥" गरुडदूर्वा श्वेतदूर्वेति नाम। तदेवं भावना विधाय तदनु भस्त्रया वह्निं आपयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्काथेषु वारत्रयं कृत्वा निर्वापणीयम्। उक्तं हि—"सौराष्ट्राल्लगोमू

तदनु कुठारच्छिन्नत्रिफलागिरिकर्णिकास्थिसंहारैः॥
करिकर्णच्छदमूलशतावरीकेशराजाख्यैः॥
शालिञ्चमूलकाशीमूलशाहूड्जभृङ्गराजैश्च।
लिप्ता दग्धव्यं तद्दृष्टक्रियलोहकारेण॥ २६॥

---

फलाक्राथवारिणि। प्रतिद्रव्यं निषेक्तव्यं त्रिधा त्रिधा विधानतः" इति। क्रमाञ्च च—"लौहपत्रं मनाक्तप्तं द्विगुणे तद्रसे क्षिपेत्। निषेक एष दृष्टो निषेकार्थैकवादिभिः" इति। निषेकार्थं त्रिफलाक्राथविधानञ्च यथा मितार्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात् तोयमर्द्ध-पावशेषितम्" इति। दोषविशेषे च निषेकविशेषो यथा—"विशेषतः कफे तीक्ष्णैः तिक्तकषायकैः। वाते तु मधुरस्निग्धैः पित्ते मधुरशीतलैः। निषेकः शस्यते त्व सर्वदोषापनायकः।" तदेवमुक्तक्रमेण निषेकं विधाय रात्रिमेकां विश्राम्य मारणादिषु योजयेत्। उक्तं हि—"विश्राम्य रजनीमेकां ततः कर्म समा नं" इति॥ २५॥

इदानीं लोहमारणार्थं भेषजान्याह तदन्वित्यादि।—तदन्विति शोधनानन्तरं लोहजारणसमीपकाले पुनरपि स्वच्छकाञ्जिकमावे लौहस्य निषेकं कृत्वैव कर्त्तव्यम्। उक्तं हि पातञ्जले—"क्वाथं पर्य्युषितं कृत्वा बलिं दत्त्वा चतु। अपरोऽपि च दातव्यो निषेको व्यधसन्निधौ। अम्लस्वच्छारणाले च ततो सम्पक्रमेत॥" कुठारच्छिन्ना कुठारिका; गिरिकर्णी श्वेतापराजिता; अस्थि-संहारश्च, करिकर्णच्छदमूलं हस्तिकर्णपलाशमूलम्; काशी स्वनामख्याता। डज्ञा वर्षाभू, पुनर्नवेति यावत्। यद्यपि एतैरेव भेषजराजैर्लिप्ता सुदग्धे नियतमेव लौहस्य मारणं भवति, तथापि वृद्धा लौहार्द्धभागपरिमितम्, पेक्षया षोड़शांशेन परिमितं वा शोधितस्वर्णमाक्षिकचूर्णं त्रिफलाक्राथेनालोड्य लिप्ता तदनन्तरम् उक्तकुठारच्छिन्नादिभेषजैर्लौहापेक्षया षोड़शांशैरालिप्य मापनमुपदिशन्ति। उक्तार्थे पतञ्जलिवाक्यं यथा—"एतदर्द्धेन विख्यातः माक्षिकेण च। माक्षिकार्द्धगुणा प्रोक्ता कुनटी चाम्लपेषिता। मारकद्रव्य-षोडशांशेन भाव्यते॥" केचिन्माक्षिकस्यापि षोड़शांशमाहुः यथा—फलावाडिवीहिङ्गुभवपादरजोऽन्वितम्।" तत्र वाड़िवीहिङ्गुभवं स्वर्णमाक्षिकम्,

चिरजलभावितनिर्मलशालाङ्गारेण परित आच्छाद्य।
कुशलाध्मापितभस्त्रानवरतमुक्तेन पवनेन॥
वह्नेर्वाद्यज्वाला बोद्धव्या जातु नैव कुश्चिकया।
स्वल्पवर्णसलिलभाजा किन्तु स्वच्छाम्बुसंप्लुतया॥
द्रव्यान्तरसंयोगात् स्वां शक्तिं भेषजानि मुञ्चन्ति।
मलधूलिमत् सर्वं सर्वत्र विवर्जयेत् तस्मात्॥२७॥
सन्दंशेन गृहीत्वान्तःप्रज्वालिताग्निमध्यमुपनीय।
गलति यथायथमग्रे तथैव मृदु वर्द्धयेन्निपुणः॥

---

पादाश षोडशांश इति व्याख्यानयन्ति। तथा ह्यत्रापि "लौह लौहाष्टमांशं षोडशांशेन वा पुनः। त्रिफलाक्वाथपिष्टेन माक्षिकेण प्रलेपयेत्। ततो लौह-चतुर्थांशकुनट्या वाम्लपिष्टया" इति। कुनटी मनःशिला। अत्र लौहजारणार्थं भृतस्वर्णमाक्षिकस्य शोधन लक्षणञ्च लिख्यते;—"मङ्के सुवर्णसङ्काशो मनाक् कृष्णच्छविर्वहिः। ब्रहद्वर्ण इति ख्यातो माक्षिकोऽत्र प्रशस्यते।" एवविधमाक्षिकचूर्णमारिषशालिञ्चक्वाथमध्ये पत्तनिकायां स्थापयेत्। पत्तनिकास्थापितक्वाथं तत्र स्वर्णमाक्षिकचूर्णं वस्त्रे पोट्टलिकां बद्ध्वा निक्षिप्य दोलापाकक्रमेण पचेत्। पत्त-निकाभ्यन्तरे क्वाथमध्ये पोट्टलिकायां यत् तोयवद्गलति तद्ग्राह्यम्। तदुक्तं—"स्वर्णमाक्षिकचूर्णञ्च वस्त्रबद्धं विपाचयेत्। कालमारिषशालिञ्च क्वाथे दोलाविधानतः तदधः पतित ग्राह्यमेवं शुध्यति माक्षिकम्" इति॥ २६॥

इदानीं तत्पाकाय यादृशोऽङ्गारो ग्राह्यस्तमाह चिरेत्यादि।—चिरं पञ्चमासादिकम्, भावितं स्थापितम्; निर्मलं तृणधान्यादिविरहात्। कुशलोऽत्र स्थिरोऽनलसश्च। कुश्चिका वंशशाखा कुचीति ख्याता। विपक्षे दोषमाह द्रव्यान्तरेत्यादि।—मृदादिसंसर्गे सति यस्माल्लौहसंसृष्टभेषजानि हीनशक्तिकानि भवन्ति तस्मात् मृदादिकर्बुरितसलिलयुक्तकुश्चिकया वह्निज्वाला न बोद्धव्या, किन्तु निर्मलजलयुक्तकुश्चिकयैवेत्यर्थः॥ २७॥

इदानीं तल्लौहं येन प्रकारेण वह्निमध्ये प्रवेशनीयं तदाह सन्दंशेनेत्यादि।—सन्दंशः सांडाशीति ख्यातः। मृदु वर्द्धयेदिति क्रमशस्तल्लौहखण्डं वह्निमध्ये

तलनिहितोर्द्धमुखाङ्कुशलग्नं त्रिफलाजले विनिक्षिप्य।
निर्वापयेदशेषं शेषं त्रिफलाम्बु रक्षेच्च ॥ २८ ॥
यल्लोहं न मृतं तत् पुनरपि पक्तव्यमुक्तमार्गेण।
यच्च मृतं तथापि तत् त्यक्तव्यमलौहमेव हि तत् ॥ २९ ॥
तदनु घनलौहपात्रे कालायसमुद्गरेण सञ्चूर्ण्य।
दत्त्वा बहुशः सलिलं प्रक्षाल्याङ्गारमुद्धृत्य।

---

प्रशमयेदित्यर्थः। गलितञ्च यथा तथा त्रिफलाक्वाथे देयं तदाह तलेत्यादि।—पाकेन यथायथ गलति तथा तलनिहितोर्द्धमुखाङ्कुशेन जतुवल्लग्नं विहित समुद्धृत्य सन्दंशेन पीडयित्वा यथोक्तत्रिफलाजले शनैः शनैर्निर्वापयेत्। शेषं त्रिफलाम्बु रक्षेत् इति पुटपाकार्थं स्थालीपाकार्थं स्थापितत्रिफलाक्वाथभागद्वयमेव शेषशब्दवाच्यम्। उक्तार्थे पातञ्जले यथा—"हस्तिकर्णसमीरेण अङ्गाराध्मापितं भृशम्। उत्तोलितं यथा लीन स्फुलिङ्गैः परिवर्जितम्। ततोऽङ्कुशमुखे लग्नं सन्दंशपीडितं यथा। उद्धृत्य त्रिफलातोये प्रक्षेप्तव्यं शनैः शनैः" इति ॥ २८ ॥

त्रिचतुर्वारमङ्गारध्मानात् तावत सर्वमेव लौहं म्रियते, तथापि यन्न मृतं तत् ... कर्त्तव्यम्, तदाह यल्लोहमित्यादि।—उक्तमार्गेणेति उक्तभेषजलेपादिक्रिया ...नीया। तथापि यन्न मृतं तत् त्याज्यमेवेत्याह यच्च मृतमित्यादि। तथापीति सर्वाभरद्वारे, सप्तवारपाकेनापीत्यर्थः। उक्तं हि—"सप्तवारान् तथा लौहं पूर्ववत् पक्वभेषज। ... ध्मात्वा समुत्थाप्य निक्षिपेत् त्रिफलाम्भसि। एवं नामात्र ... लौहो न ... त्याज्य एव सः" इति। अमरणे हेतुमाह अलौहमित्यादि। उक्तप्रधलिप्तानेकवारध्मातमरणव्याप्त हि सुलोहत्वम्। तन्मरणं निवृत्तिमान ... लौहशास्त्रोदितसुलोहत्वमादायैव निवर्त्तत इति भावः। मृतलौहलक्षणञ्च यथा—"लौहगूथसमाकारस्पर्श-ग्राह्यः प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतो वद्यसत्तमैः" इति ॥ २९ ॥

इदानीं आरनालैर प्रक्षालनञ्च तथा त्रिफलाक्वाथावसिक्तस्य सूर्य्यातपे शोषणरूपो भानुपाकश्च यथा कर्त्तव्यस्तदाह तदन्वित्यादि।—घनं दृढ़ छिद्राद्यभावयुक्तम्। लौहपात्र इति लौहोदूखलादावित्यर्थः। कालायसमुद्गरं तीक्ष्णलौहमुद्गरम्। एतदुभयमप्युपलक्षणं, तेन दृढ़दृषदादिकञ्च बोध्यम्। सञ्चूर्ण्येत्यत्र सुक्ष्मनिर्मलिति

तदयः केवलमग्नौ शुष्कीकृत्याथवातपे पश्चात्।
लौहशिलायां पिंष्यादसितेऽश्मनि वा तदप्राप्तौ ॥ ३० ॥

इति लौहमारणविधिः ॥

स्थालीपाकविधिः—

अथ कृत्वायोभाण्डे दत्त्वा त्रिफलाम्बु शेषमन्यद्वा।
प्रथमं स्थालीपाकं दद्यादा तत्क्षयात् तदनु ॥
गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः।
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकं वा ॥ ३१ ॥

इति स्थालीपाकविधिः ॥

---

शेषः। सलिलमित्युपलक्षणं, तेन त्रिफलाक्वाथोऽपि बोध्यः। शुष्कीकृत्येति त्रिफलाक्वाथेनैव सप्तधा सूर्य्यातपे सशोष्येत्यर्थः। उक्तार्थे पातञ्जलं यथा—"अयोघनेन तत् पिष्टं शिलया दृढया यथा। अयोमलसमं पिण्डं कृत्वा मुद्गसमं पुन त्रिफलावारिणा धौतं विशुष्कं चूर्णितं पुनः।" इत्यादि। योगरत्नाकरेऽप्युक्तं "मृतश्चोदूखले लौहं मूषलेनापि ताडयेत्। सञ्चूर्ण्य त्रिफलाम्भोभिः सप्तधा सूर्य्यपाचितम्। एवं पुटविधौ योग्यो विज्ञेयो भिषजां वरैः।" इत्यादि। अत्र लौहप्रक्षालनार्थं भानुपाकार्थञ्च त्रिफलाक्वाथविधिर्यथा योगरत्नाकरे—"मृदाण त्रिफला लौहात् कर्त्तव्या त्रिगुणा सदा। चतुर्गुणफलात् तोयमष्टभागावशेषितम् एष एव विधिर्नित्यं क्षालनेऽपि च शस्यते।" इति। तथा—"भानुपाकार्थमिच्छन्ति त्रिफलामयसा समम्। सलिलं द्विगुणं तत्र चतुर्भागावशेषितम्।" इति ॥ ३० ॥

इति मारणविधिः।

स्थालीपाकमाह अथेत्यादि।—अयोभाण्डे लौहपत्तनिकायाम्। शेषं त्रिफलाम्बु त्रिफलैकभागकृतक्वाथस्य आतनिर्वापणावशिष्टम्। अथ यदि कथमपि तद्विनष्टं स्यात् तदा का गतिरित्याह अन्यद्वेति तत्प्रक्रिययैव क्वाथान्तरं कार्य्यमिति भावः। प्रथमं स्थालीपाकं दद्यादिति प्रथमं स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाकं विधाय त्रिफलाक्वाथक्षयः कर्त्तव्यः। इत्येष स्थालीविधानक्रमः आतत्क्षयादिति त्रिफलाक्वाथशोषपर्य्यन्तम्। तदन्विति प्रथमं त्रिफला-

पुटपाकविधिः—

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातिममसमध्यम्।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च॥
अन्तर्घनतरमर्द्धं शुषिरं परिपूर्य्य दहनमायोज्यम्।
पश्चादयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात्॥
त्रिफलाम्बुभृङ्गकेशरशतावरीकन्दमाणसहजरसैः॥
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसैः॥
स्थित्वाथ लौहपात्रे मार्दे वा लौहमार्दपात्राभ्याम्।
तुल्याभ्यां पृष्ठेनाच्छाद्यान्ते रन्ध्रमालिप्य॥

---

क्वाथेन स्थालीपाकं विधाय। अनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकं कार्य्यं इत्याह गजकर्णेत्यादि।—गजकर्णो हस्तिकर्णपलाशः। प्राग्वदित्यनेनैव यावतीयत्रिफलाक्वाथस्य स्थालीपाके मात्रा तन्मात्रयानन्तरश्च पाकस्तथा गजकर्णादिस्वरसादावित्यर्थः। किन्तु तत्र व्यायन् स्थालीपाकीयद्रव्याणामन्तरे यदि स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथ्यजलादिकं दत्त्वा क्वाथं विधाय स्थालीपाको विधेय इति॥३१॥

इति स्थालीपाकविधिः।

पुटपाकविधिमाह हस्तप्रमाणेत्यादि।—श्वभ्रं खातम्। हस्तैकखातिसमसमध्यमिति हस्तैकप्रमाणा खातिः खननं यस्य, सर्वतो हस्तैकमात्रपरिमाणमित्यर्थः। समं निम्नं मध्योऽभ्यन्तरभागो यस्य तत् समसमध्यम्। कटाहसदृशमित्यनेनैव कटाहाकारत्वमुक्तं, तेन चतुष्कोणं न कार्य्यमित्यर्थः। तत्र श्वभ्रे अन्तरिति मध्ये घनतरं बहुतरं निबिडतरमिति यावत्। अर्द्धशुषिरं परिपूर्य्येति करीषादिभिः अर्द्धभागं परिपूर्य्येत्यर्थः। कैर्द्रव्यैः पङ्कोपमं कुर्य्यादित्याह त्रिफलेत्यादि।—त्रिफलाम्बु त्रिफलाक्वाथः, भृङ्गकेशरो भृङ्गराजकेशराजौ, कन्दः शूरणः। एषां भृङ्गादीनां सहजरसैः स्वरसैः। भल्लातकस्य पुनः क्वाथ एव, स च भल्लातकसहस्र विधिवद्बोध्यः। अयश्चूर्णं त्रिफलाक्वाथादिभिः पङ्कोपमं कृत्वा किं कर्त्तव्यं तदाह स्थित्वेत्यादि।—मार्दे इति कृष्णमृत्तिकाभवपात्रे, एतच्च मृत्पात्रं सर्वथा लौह-

तत्पुटपात्रं तत्र श्वभ्रज्वलने निधाय भूयोभिः।
काष्ठकरीषतुषैस्तत् सञ्छाद्याहर्निशं दहेत् प्राज्ञः॥ ३२॥
एवं नवभिरमीभिर्भेषजराजैः पचेत्तु पुटपाकम्।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान्॥
प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत्।
तादृशि दृशदि न पिंष्याद् विगलद्रजसा तु युज्यते यत्र॥

---

पात्राभावे हि बोध्यं ; किन्तु दक्षिणराढ़ायां सममृत्तिके कृतसम्पुटे लौहं कृत्वा वस्त्रमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहारः। अयञ्च पक्षः साधीयान् भवति, यतो लौहसम्पुटमध्येऽधमलौहघटितसम्पुटमावस्यापि पुटपाकौषधसमर्ग जीर्णतया तदीयरजसोऽनुप्रवेशो दुर्निवार इति। पृष्ठेनाच्छाद्येति—यत्र पात्रान्तरे पङ्कोपमं लौहचूर्णमस्ति तन्मुखमपरतत्तुल्यपात्रस्य कटीभागे निधायेत्यर्थ अन्ते रन्ध्रमालिप्येति पट्टितम्‌दृढवस्त्रादिभिरिति शेषः। भूयोभिरिति प्रचुरैः। इदञ्च काष्ठादिकं पुटमात्रोपदर्शकार्थम्, अतोन पौनरुक्त्यम्। भूयोभिरित्यनेन गर्तपूरणं कृत्वा तदुपर्य्यपि करीषसमुच्छ्रयः कार्य्य इति दर्शयति। अहर्निशमित्यनेन दिवसं रात्रौ वा पुटो देय इति दर्शयति। अन्ये तु पुटपाकस्याष्टप्रहरव्यापनार्थमहर्निशमिति वचनमाहुः, तन्न, पुटपाकस्य चतुःप्रहरसम्पाद्यत्वात्। उक्तं हि पत्रञ्जले—"चतुर्भिः प्रहरैर्ज्ञेयः पुटपाकक्षणो बुधैः।" तथा योगरत्नाकरसमुच्चयेऽपि—"चतुर्भिः प्रहरैरेव पुटपाकः प्रकीर्त्तितः। पुटपाकक्षणादूर्द्ध्वं स्थितो भवति भस्मसात्। अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः। कुण्डस्थो भस्मनाच्छन्न आकृष्य सुशीतलः। समाकृष्टस्य तस्य गुणहानिः प्रजायते।" इति। तत्र संक्षेपात् पुटपाकपरिपाटी लिख्यते। त्रिफलाक्वाथादिभिः पङ्कोपमं लौहं विधाय सम्पुटाकृतिलौहपात्रस्थं कृत्वा वस्त्रादिभिरवगुण्ठ्य पट्टितवस्त्रमृत्तिकया पात्रयोरवकाशं लिप्य हस्तमात्रपरिमितसमतलभूगर्त्ते करीषतुषैः शुष्कगोमयखण्डैर्वा खातस्यार्द्धं प्रपूर्य्य तत्र तल्लौहसम्पुटं निधाय वह्निं नियोज्य तदुपरि अपरकरीषादिभिः शुष्कगोमयखण्डैर्वा श्वभ्रं परिपूरयेत् ; एवं चतुर्भिः प्रहरैरेव पुटो देयः शीतीभूतमाकृष्टव्यम्॥ ३२॥

इदानीमुक्तैस्त्रिफलादिभिः पुनर्नवास्वरसान्तैः प्रत्येकं, मिलितैर्वा पुटो देय

तदयश्चूर्णं पिष्टं घृष्टं घनसूक्ष्मवाससि श्लक्ष्णम्।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम्॥
पुटेन स्थालीपाकेऽधिकृतपुरुषे स्वभाववशगविगमात्।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि॥ ३२॥

इति पुटपाकविधिः॥

---

त्र्याह एवमित्यादि।—नवभिरिति इह त्रिफला एकत्वेनैव गणनीया, तेन न सङ्ख्यातिरेकः। त्रिफलेत्यनेन त्रिफलादिगणमिच्छन्ति केचित्; तद्यथा—"त्रिफलात्रिवृता, दन्तीत्रिकटुतालमूलिकाः। भद्रदारुश्च उशीर-वृषपत्रकचित्रकाः। भृङ्गराजविडङ्गौ च भृङ्गभल्लातकौषधम्। दाडिमस्य च पत्राणि शतपुष्पी पुनर्नवा। कठारकामकौ कन्दलन्वौ भेकस्य पर्णिका। हस्तिकर्णपलाशश्च कुलिशः केशराजक.। माषः खण्डितकर्णश्च गोजिह्वा लौहमारकः। गिरिसन्तानकः प्रोक्तस्त्रिफलादिरयं गणः। सामान्यपुटकाकार्थमेतानिच्छन्ति सूरयः।" इति। दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः, ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति। किञ्च यस्मिन् व्याधौ ये ये योगा हितास्तस्मिन् व्याधौ तत्तत्क्वाथैरपि पुटो देयः। उक्तं हि—"ये ये यत्र गदे योगास्तेषां तेषाञ्च कारिणा। विधिनाभाय तेनैव पुटो रोगे च सम्मतः।" इति। विधिनेति साध्यसाधनपरिमाणोक्तपुटपाकार्थत्रिफलाक्वाथविधिना, अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्यान्तराण्यनुक्तमानानि सन्ति, देयजलमानं शेषजलमानञ्च नोपात्तं, तत्र योगरत्नाकरोक्तव्यवस्थैवानुसर्तव्या। यदुक्तं क्वाथविधौ तत्रैव—"अन्यानि यानि युक्तानि योक्तव्यानि पुटादिषु। तानि लौहसमान्येव जलं प्रागेव कीर्त्तितम्। लभ्यते स्वरसो येषां तेषां क्वाथस्तु नेष्यते। त्रिफलाव्यतिरिक्तेन मतमेतत् पतञ्जलेः।" इति। जलं प्रागेव कीर्त्तितमिति मृदौ क्वाथार्थं चतुर्गुणं जलं देयं, स्थाप्यश्चतुर्थो भागः। मध्यद्रव्येऽष्टगुणं जलं देयं, स्थाप्यश्चाष्टमो भागः। कठोरद्रव्ये षोडशगुणं जलं देयं, स्थाप्यश्च षोडशो भाग इति। ननु पुटेन किमत्र क्रियते? उच्यते; दोषनाशगुणोदय इति। यदुक्तं—"पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः। म्रियते हि पुटाल्लौहः पुटांस्तस्मात् समाचरेत्। यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि। तथा तथाभिवर्द्धन्ते गुणा एव सहस्रशः। तावल्लौहं पुटेद्धीमान् यावत्सू-

पाकविधिः—

अभ्यस्तकर्म्मविधिभिर्बालकुशाग्रीयबुद्धिभिरलक्ष्यम्।
लोहस्य पाकमधुना नागार्जुनशिष्टमभिदध्मः॥ ३४॥
लोहारकूटताम्रकटाहे दृढ़मृण्मये प्रणम्य शिवम्।
तदयः पचेदचपलः काष्ठेन्धनेन वह्निना मृदुना॥

---

र्पीकृत जले। निस्तरङ्गे लघुत्वेन समुत्तरति हंसवत्। तावच्च चूर्णयेदेनं यावत् कज्जलसन्निभम्। करोति निहितं नेत्रे नैव पीडा मनागपि।" इति। पुटान् कर्मभेदेन सङ्ख्याभेदो यथा —"शतादिस्तु सहस्रान्तः पुटो देयो रसायने। दशादि शतपर्य्यन्तो गदे पुटविधिर्मतः। वाजिकर्मणि विज्ञेयः पुटः पञ्चशताधिकः। दशोत्तरशतान्तम् पुटः पुटविचक्षणैः।" यदा तु चन्द्रिकाभावे लौहे पुटा देयास्तदा एतावद् भूय सङ्ख्यका अपि पुटा दीयन्ते। यदा तु प्रतिपुटान्ते पेषणं वस्त्रपूतञ्च तदा सप्ताष्टाभिरेव विशिष्टफलदा भवन्तीत्युपदिशन्ति वृद्धाः। प्रतिपुटं पेषणमाह प्रतीति।—एतेन पेषणवक्ष्यमाणवस्त्रपूतत्वाभ्यां भस्मीभूतपुटार्थदत्तभेषजनिर्गमः परदेयभेषजद्रव्यसंस्काराधानञ्चेति भावः। कोमलशिलासु पेषणं न कार्य्यमिति भावः। पिष्टा च वस्त्रपूतं कार्य्यमित्याह तदयः इत्यादि।—घनं निविड, सचक्षणवासः, यत्र घृष्टव्यं पूतमित्यर्थः। इदानीमातुरस्य प्रकृत्यादिकं निरूप्य उत्कर्षेषु यदनुचितं तस्यापकर्षः कार्य्यः, अनुक्तस्याप्युचितस्यादानं कार्य्यमित्याह पुरुष इत्यादि। अधिकृतेति अधिकृतपुरुषचिकित्सत्वेन प्राकृत इत्यर्थः॥ ३३॥

इति पुटपाकविधिः।

इदानीं लौहस्य प्रधाननिष्पत्तिपाकमाह अभ्यस्तेत्यादि।—अभ्यस्तकर्मविधिभिः दृष्टकृतलौहपाकैः। बालकुशाग्रमिति तीक्ष्णं सूक्ष्मञ्च तेन कुशाग्रमिव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषां, दुरूहस्यार्थस्य तीक्ष्णसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यलक्ष्यं ज्ञातुमशक्यम्। नागार्जुनशिष्टं नागार्जुनेन कथितम्। लौहपाकारम्भेऽपि मङ्गलं कार्य्यम्। उक्तं हि पातञ्जले—"मातृकां पूजयेत् सर्वां नायिकाञ्च विनायकम्। अन्यत् स्वस्त्ययनं कुर्य्यात् सदा हितमनाः सुधीः। पच एव भवेदेव त्रिवर्गफलदो नृणाम्" इति॥ ३४॥

लौहपाकार्थं पात्रमाह लोहेत्यादि।—आरकूटः पित्तलम्। काष्ठेन्धनेनेति

निक्षिप्य त्रिफलाजलमुदितं यत् तद्घृतञ्च दुग्धञ्च।
सञ्चाल्य लौहमय्या दर्व्या लग्नं समुत्पाद्य ॥ ३५ ॥
मृदुमध्यखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम्।
पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्तु समः।
अभ्यक्तदर्वि लौहं सुखदुःखस्खलनयोगि मृदु मध्यम्।
उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्य्याः ॥

काष्ठपदं तृणतुषादिव्युदासार्थम्। वह्निनेत्यधोवह्निना। उक्तं हि—"मृदुनाधो-हुताशेन पक्तव्यमवधानतः" इति। स्थापितत्रिफलाभागद्वयकृतक्वाथादिप्रक्षेपार्थ-माह निक्षिप्येत्यादि।- उदितमित्युक्तपरिमाणम्। घृतादिदानक्रमश्च भोज-राजेनोक्तः, यथा—"घृतेन लौहमालोड्य चौरेण समनन्तरम्। ततः क्वाथेन मन्दाग्नौ शनकैः पचेत। ततः सञ्चालयल्लौहं लौहदर्व्यातिदीर्घया" इति ॥ ३५ ॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह मृद्वित्यादि। मध्यमपाको न केवलं समप्रकृतौ हित एव, किन्तु प्रकृत्यन्तरेऽपि योज्य इत्याह मध्यमस्तु समः इति। समप्रकृतिः संव्यर्थेन सर्वास्वेव प्रकृतिषु उचित इत्यर्थः। अमाधोऽप्याह "दर्व्यामाश्लिष्यते यत्तु तच्च स्खलति वा नवा। मृदुपाकं विजानीयात् पित्ते तु हितं सदा ॥ सितापुञ्जोपमं यत्तु मूषिकोत्करसन्निभम्। तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम्। एकैकगुणयोगित्वान्न तमिच्छन्ति तद्विदः। सर्व-प्रकृतिसमत्वात्मध्यम बहुपूजितम्" इति। एकीयमतं मृदुमध्यखरपाकस्था क्रमा-न्निरूपणमाह अभ्यक्तेत्यादि। अभ्यक्ता घनपङ्कवत् संश्लिष्टा दर्वी येन ईदृशं लौहं मृदुपाकं ब्रुवते। अभ्यक्तदर्वीत्यपि पाकं तथा सुखदुःखस्खलनयोगी— कदाचित दर्वीं त्यजति कदाचित न त्यजति इत्यर्थः। एतादृशं यल्लौहं तन्मध्यम-पाकं मध्यमपाकं ब्रुवते। तथा उज्झितदर्वीति यल्लौहं कदाचिदपि दर्व्या सन्त्य-ज्यते तत खरपाकं ब्रुवते इति। तथा अन्यतममतमाह अन्य इत्यादि। विशेषेण लौहेनाभ्यक्ता दर्वीप्रलेपो येन ईदृशं, यच आखूत्कराकृति इन्दुरमृत्तिकासदृशञ्च यल्लौहं तन्मृद्विति मृदुपाकं ब्रुवते। तथा अर्द्धचूर्णलौहं मध्यमिति मध्यमपाकं ब्रुवते अर्द्धचूर्णमिति अर्द्धं चूर्णम् अपरमर्द्धञ्च आखूत्कराकार

अन्ये विहीनदर्वीप्रलेपमाखूत्कराकृतिं ब्रुवते ।
मृदु मध्यमर्द्धचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥ ३६ ॥
त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः ।
प्रकृतिविशेषे सूक्ष्मौ गुणदोषौ जनयत्यल्पम् ॥
विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः ।
विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥ ३७ ॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे ।
चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः ॥

---

मित्यर्थः । तथा सिकतापुञ्जोपमं बालुकाराशिसदृशं यल्लौहं चक्षुषा गृह्यते न तु स्पर्शेन, तत् खरपाकं ब्रुवते । पातञ्जले तु स्पर्शादिनापि पाकज्ञानमुक्तं—"तावल्लौहं पचेद्वैद्यो यावद्धस्तेन पीड़ितम् । समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः । अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम् । तदा सिद्धं विजानीयाल्लौहं लौहविशारदः । वर्त्तितो वर्त्तितो वर्त्तिस्वरूपत्वं व्रजेदिति । ताभ्यामेव प्रवेदृष्टं सिद्धं विद्याच्चिकित्सकः । मन्दमाहुस्तथा लौहमलक्ष्याखिललक्षणम् । अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम्" इति । जीवनाथोऽप्याह—"अञ्जनाभं घनं स्निग्धं श्लक्ष्णमूलमथोद्धरेत् । अक्लिन्नमम्भसि क्षिप्तं सम्यक्पाकस्य लक्षणम्" इति ॥ ३६ ॥

त्रिविधोऽप्ययं पाको न विफल इत्याह त्रिविध इत्यादि ।—लौहपाकानन्तरं त्रिफलादिचूर्णप्रक्षेपमाह विज्ञायेत्यादि ।—द्राक् शीघ्रं ; क्षितौ, नाकाशे । कियत्क्षणात् विश्राम्येत्यनेन सर्वथा निर्वृत्तिर्न प्रतिपद्यते ; किन्तर्हि, मनाक् तप्तत्वम् । यदाह पतञ्जलिः—'अवतार्य्य मनाक् तप्त' इति । इतिकर्त्तव्यता लिङ्गयोगरत्नाकरसमुच्चयोक्तानुसर्त्तव्या । यदुक्तं तत्रैव—"अवतार्य्य ततो दर्व्या परिघट्य पुनः पुनः । यदा पाणिसहो भूतो निक्षिपेदौषधं तदा । स्तोकं स्तोकं न दातव्यं परिघट्य निरन्तरम्" इति ॥ ३७ ॥

लाभे सति सौगन्ध्यार्थं कान्तक्रामकीयदोषहरणार्थञ्च कर्पूरप्रक्षेपमाह यदीत्यादि ।—विगलितं इति अपगते । अनुरूपं इत्यनेन यावतास्फुटगन्धस्वादूपलब्धिर्भवति तावन्मानमित्यर्थः । न वा न यदि तल्लाभ इति । यदि कर्पूरलाभो न

पक्वं तदश्मसारं सुचिरघृतस्थित्यभाविरूक्षत्वे ।
गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् ॥३८॥
यदि तु परिप्लुतिहेतोर्घृतमौचिताधिकं ततोऽन्यस्मिन् ।
भाण्डे निधाय रक्ष्येद्भाव्युपयोगो ह्यनेन महान् ॥
अयसि विरूक्षीभूते संलेहस्त्रिफलाघृतेन सम्पाद्यः ।
एतत् ततो गुणोत्तरमित्यमुना लेहनीयं तत् ।
अत्यन्तकफप्रकृतिर्भक्षणमयसोऽमुनैव शंसन्ति ।
केवलमपीदमशितं जनयत्ययसो गुणान् कियतः ॥३९॥

---

स्यात तदा न वा त्रिपेदित्यन्वयः। पक्वलौहं दिनान्तरे वारत्रयमिति सूक्ष्मं पेष्टव्यम्। उक्तं हि योगरत्नाकरे—"विश्राम्य रजनीमेकां पेष्टव्यः शीतलोऽत्नतः। त्रिधा शिलातले सूक्ष्मो शिलापुत्रेण ताड्यात्" इति। अथ सिद्धस्य लौहस्य स्थापनाय पात्रमाह पक्वमित्यादि।—सुचिरकालं घृतस्थित्या अभावि रूक्षत्वं यस्य तादृशे, बहुदिनं व्याप्य घृतभावित यत् पात्रम्। तस्मिन्नित्यर्थः। गोदोहनादिभाण्डं दधिदुग्धादिभावित लौहभाण्डाभाव इति कान्तादिलौहपात्राभावे; तदुक्तं— 'कान्तादिलौहभाण्डे तु तदत् ताम्रमये शुभे। चिराज्यभाविते मार्दे लौहतामाद्य सम्भवे" इति ॥ ३८ ॥

इदानीमयःपाकार्थं दत्तं घृतमधिकं यद्युपलभ्यते, तदा तदाकृष्य भाविलौहरूक्षत्वनिवृत्त्यर्थं पात्रान्तरे स्थाप्यमित्याह यदि त्वित्यादि।—घृतस्याधिक्यमेव कथं ज्ञातव्यमित्याह परिप्लुतिहेतोरिति।—परिप्लुतिः पात्रादुच्छलितत्वम्। ईदृशेन ह्यपलभेत। किमर्थं तद्घृतं रक्षणीयमित्याह भाव्युपयोग इत्यादि। हि यतोऽनेन लौहपाकोच्छलितघृतेन महान् उपयोगो महत् प्रयोजनं भावि वर्त्तते, स च रूक्षीभूतलौहस्नेहनादिरूपः। उक्तं हि—"भवेद्यदि क्वचिल्लौहे श्रवणादधिकं हविः। पृथक्पात्रेऽपि तत् स्थाप्यं संलेहनार्थं विरूक्षिते। अथवा मर्दनं लौहे यन्मधुसर्पिषोर्यते। तदनेनैव कर्त्तव्यमिति केचिद्व्यवस्थिताः।" यदि पुनर्लौहपाकोच्छलितं घृतं न लभ्यते, तदा त्रिफलाक्वाथकल्काभ्यामन्यद्घृतं पक्वा रूक्षितलौहस्य संलेहनं कार्यमित्याह अयसीत्यादि। किन्तु तत्त्रिफलाघृतात् लौहपाकोच्छलितं घृतमेवोत्कृष्टगुणमित्याह एतदित्यादि।—एतदिति लौहपाकोच्छलितं घृतम्। ततः इति त्रिफला

अथवा वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थांशसमद्वित्रिचतुःपञ्चगुणभागम् ॥
प्रक्षिप्याथः प्राग्वत् पचेदुभाभ्यां भवेद्रजो यावत् ॥
तावन्मानानुस्मृतेः स्यात् त्रिफलादिद्रव्यपरिमाणम् ।
इदमाप्यायकमिदमतिपित्तनुदिदमेव कान्तिबलजननम् ।
स्तभ्नाति हृट्क्षुधौ परमधिकाधिकमात्रया क्षिप्तम् ॥४०॥

इति पाकविधिः ।

---

घृतात् गुणोत्तरमुत्कृष्टगुणमिति । अमुना घृतेन तदयः, संवर्द्धनीयमिति । तर्हि घृतस्य प्रयोजनान्तरमाह अथन्तेत्यादि ।—अमुनैवेति लौहपात्रीक्कुथितघृतेनैवेत्यर्थ लौहोक्कुथितघृतस्योत्कृष्टगुणत्वमप्याह केवलमित्यादि ।—केवलं लौहपात्रीक्कुथित घृतम् । जनयत्यसौ गुणान् कियत इति लौहसम्बन्धेन लौहगुणानुविधानादिति भावः ॥ ३९ ॥

इदानीं पित्तदुष्टिं प्रति अत्रैव लौहे चतुर्थांशसमादिमानतोऽभ्रकप्रवेशेन लौहाभ्रकं पक्तुं विधिमाह अथवेत्यादि ।—वक्तव्यविधिनेति कृष्णाभ्रकमभ्रेकवपुरित्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरविधिश्च वक्तव्यस्तेन विधिना संस्कृतमभ्रकचूर्णं निश्चन्द्रीकृतमादाय अयो लौहचूर्णं प्रक्षिप्य पचेदिति । कियन्मानम् अभ्रकचूर्णं ग्राह्यमिति जिज्ञासायामभ्रस्यैव भागक्रममाह लौहचतुर्थेत्यादि ।—लौहचूर्णमपेक्ष्य निश्चन्द्रीकृताभ्रचूर्णस्य चतुर्थो भागः पादिक इत्यर्थः । तथा पञ्चमीयैकपलादित्रयोदशपलोक्तलौहचूर्णस्य इयन्तु अभ्रस्य पुनरेको भागः, तेन लौहस्य भागद्वयम्, अभ्रस्य तदर्द्धमेको भाग इति अभ्रस्यार्द्धभागत्वम् । तथा एको भागो लौहस्य तथा एको भागोऽभ्रस्येति लौहसमत्वमभ्रस्येति । एवमेको भागो लौहस्य, इयन्तु अभ्रस्येति द्विगुणत्वम् । तथा एवमेको भागो लौहस्य, अभ्रस्य भागत्रयमिति अभ्रस्येति त्रिगुणत्वम् । लौहस्यैकोभागः भागचतुष्टयन्तु अभ्रस्य तथा एको भागो तथा लौहस्य, पञ्चभागस्तु अभ्रस्येति ज्ञेयम् । एवं क्रमेण लौहाभ्रकाभ्यां मिलिता एकपलादित्रयोदशपलान्तमानव्यवस्थया पाकः कार्य्य इत्याह प्राग्वदित्यादि । एवमिति अभ्रकप्रवेशेन प्रधाननिष्पत्तिपाकार्थं "त्रिफलाक्काथदुग्धघृतप्रक्षेप्यचूर्णपरिमाणं लौहप्रमिति निर्णयार्थमाह उभाभ्यां भवेदित्यादि ।—अयमर्थः उभाभ्यां लौह

अभ्रकविधिः—

कृष्णाभ्रमभेकवपुर्वज्राख्यं काचपत्रकं ज्ञात्वा ।
काष्ठमयोदूखलके चूर्णं मूषलेन कुर्वीत ॥
भूयो दृषदि च पिष्टं वासः सूक्ष्मावकाशतलगलितम् ।
मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत् त्रिदिनम् ॥
उद्धृत्य तद्रसादथ पिष्याद्भैरम्लिकधान्यभक्तस्य ।
प्रक्षोदात्यम्लाम्लस्वच्छजलेन प्रयत्नेन ॥
मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्यात् ॥
स्थालीपाकं पुटनद्याद्यैरपि भृङ्गराजाद्यैः ॥ ४१ ॥

---

अभ्राभ्यां मिलित्वा यावद्द्वौ भवेत्, तावदेव लौहमानं परिकल्प्य तन्मानानुसारेण त्रिफलादिमानं कल्पनीयम् । पूर्वं केवललौहपाके त्रिफलादीनां यावन्मानमुक्तम् इदानीं मिलितलौहाभ्रकेऽपि तावदेवेत्यर्थः । अतएव लौहरसाभ्रकयोगमपेक्ष्य योगरत्नाकरेऽप्यभिहितं—"यावल्लौहरजस्तस्मात् भवेदर्द्धेन पारदः । तदर्द्धेन भवेत् प्राक् मतमेतत्पतञ्जलेः ॥ मानेन त्रितयस्यास्य त्रिफला ग्राह्यं पलत्रयम्" इति । ननु किमर्थं पुनरुत्तरोत्तरमधिकाधिकमात्रया लौहे त्रिगुणमभ्रकमित्यत आह इद-मित्यादि । इदमभ्रकं लौहे अधिकाधिकमात्रया समुपयुक्तं सद्विधिना आप्यायक-त्वादिगुणविशिष्टं भवतीत्यर्थः । आप्यायकरणम् अमृतसिक्तमिव पुरुषं बलीत्वर्थं करोतीत्यर्थः । लक्षाति तट्क्षुधाविति तट्क्षुधी पुरुषस्य बाधां न जनयत इत्यर्थः । किंवा आहारजातमविकलमखिलं परित्यज्येव एषा बुभुक्षा च न पुरुषमुरस्य करोतीत्यर्थः ॥ ४० ॥

इति पाकविधिः ।

अभ्राद्यविधिसंस्कृतकृष्णाभ्रकचूर्णमित्युक्तम्, अतस्तामेवाभ्रकशुद्धिमाह कृष्णाभ्र-मित्यादि । अभेकवपुरिति भेकस्य वपुः हरितपीतादिवर्णं भवति तेन यदभिकं वर्णेन भेकस्य वपुरिव एकदेशेऽपि न भवति तदेव च वज्राख्यं बलीति तस्य प्रसिद्धिः । तदुक्तं योगरत्नाकरे—"अग्निस्थं कठोराङ्गं गुरु कज्जलसन्निभम् । यत्र प्रध्मायते वह्नौ भेकीभूतं भवेदपि । सदाकारसमुद्भूतं बलीति प्रथमं वरम्" इति । तदभ्रकं मल्लादिभिरविकमपि वर्णंन्य, भूयः पुनः दृषदि शिलायां पिष्टं

ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्माग्नौ।
तावद्दहेत् यावन्नीलोऽग्निर्दृश्यते सुचिरम् ॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात् ॥ ४२ ॥

इति अभ्रकविधिः।

---

चूर्णीकृत्य घनतरवाससा छानयित्वाऽधो यद्गलितं तद्ग्राह्यम्। मण्डूकपर्णी थानकुनीति ख्याता, तद्रसादिति मण्डूकपर्णीस्वरसात्। अचोदेति चोदोऽग्रीर्षभक्तसिक्थकम्, अचोदश्च तद्विरहात्। पेषणानन्तरं यत् कर्त्तव्यं तदाह मण्डूकपर्णिकाया इत्यादि। पूर्वरसेनेति यत्रैव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विमृज्य मोदकाकारं कुर्य्यात्; मोदयतीति मोदन इति मोदनशब्दोऽपि मोदकार्थे द्रष्टव्यः। क्वचित्तु मोदकविदिति पाठः। स च तत्तट्टीकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा शुष्कीकुर्य्यादित्युपदेशो बोद्धव्यः। अयमभ्रकशोधनप्रकारः अघोराचार्य्यमतानुसारेण निबद्धः। तत्र मण्डूकपर्णीरसेन यद्यपि पुनर्मोदककरणं नास्ति तथापि षट्कर्मणा प्रतिसंस्कृत्योपदेशादिदं लिखितमिति बोध्यम्। तदनु चास्य अभ्रस्य चूर्णीकृतस्य स्थालीपाकपुटपाके कर्त्तव्ये तदर्थं द्रव्याण्याह स्थालीपाकमित्यादि।—आर्द्रैर्भृङ्गराजाद्यैरिति लौहपुटनविधौ भृङ्गराजकेशराजशतावरीकन्दमाणादिरसैरित्यर्थः। आद्यैरित्यत्र अन्यैरपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मतः ॥ ४१ ॥

एवं पुटादिशोधितस्याभ्रस्य वह्नौ ध्मापनं कार्य्यं, ततस्तद्विधिमाह ताड़ादिपत्रेत्यादि।—ताड़ा स्वनामख्याता, आदिशब्दात् केतुकादिपत्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्रपिहितस्याभ्रस्य ध्मापनं व्यवहरन्ति। पिण्डीकरणञ्च भृङ्गराजादिद्रवालोड़नादधिगन्तव्यम्। दुग्धं प्रक्षाल्येति दुग्धनिर्वापितोत्थापिताभ्रकसंलग्नं यद्दुग्धम्। यद्यपीदानीं ताड़ादिपत्रपिहितस्य ध्मापनमभ्रस्य नैं व्यवहरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाप्यस्मात् बहुधा कृतत्वात् च सम्यक् निश्चन्द्रकत्वमनेनास्य भवत्येव। ध्मापितं यतोऽभ्रस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तच्च येन केनापि भेषजेन भवतु। अपरापरेऽभ्रकमारणप्रकारा नानाचार्य्योक्ताः सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः।

लौहभक्षणविधिः—

नानाविधव्याध्यार्त्ते पुष्पैः काम्यैः शिवं समभ्यर्च्य।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम्॥
दशकृष्णलपरिमाणं शक्तिवयोभेदमाकलय्य पुनः।
इयदधिकं तदधिकतरमियदेव न मात्रमोदकवत्॥ ४३॥
समममृणामलपात्रे लौहे लौहेन मर्दयेद्गाढ़ं भूयोभूयः।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम्।

---

तत्रैकं प्रसिद्धमतैकं यथा—"भाग्र भक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम्। कन्द-माणास्थिसंहारखण्डकर्णरसैरथ। वृद्धदारकपिण्डेन कालमारिषजेन च॥ हस्तीर-बृहतीभृङ्गलवणाकेशराजजैः। पेषणं भावनं कुर्य्यात् पुटपाकमनेकधा। याव-न्निश्चन्द्रकत्वं स्यात् ततो मोचरसेन च। कालमारिषजेनापि स्थालीपाकं प्रदा-पयेत्। यावदभ्रकत्वमायाति शुद्धिरेव विहायसः।" अत्र हस्तीरः श्वेतपुनर्नवा; लवणा स्वनामख्याता; मोचा रम्भा; व्यक्तमन्यत्। किन्त्वयं वृद्धवैद्यैः प्रायः क्रियते॥ ४२॥

इत्यभ्रकविधिः।

इदानीं निष्पन्नलौहस्य भक्षणविधिमाह नानेत्यादि। नानाविधव्याधयः पाण्डुज्वरातीसारयक्ष्मशोथरक्तपित्तराजयक्ष्मप्रभृतयः। अमृतमिति अमृतमिवामृतम्। तत्र कियन्मानमुपयोज्यं तत्राह दशेत्यादि।—कृष्णला रक्तिः, तेन चरकमानमापक-मित्यर्थः। अयञ्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषबलवयोऽभिहितः, तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इह दशरक्तिपरिमाणं यथाक्रमं मध्यमाधमयो-रधिकमधिकतरञ्च भवतीति। बलाद्यपेक्षया उक्तपरिमाणादन्यान्यतरपरिमाणेना-प्यारम्भः। वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाणं युक्तमिति कृत्वा तावत्परिमाणमेव कर्त्तव्यमिति मात्रमोदकवन्निबन्धो न कार्य्य इत्यर्थः। तेन "आरम्भो वर्द्धनञ्चापि पञ्चाद्येकगुञ्जया।" तथापि पञ्चसप्तनवरक्तिकाः प्रथमदिने; तथा—"रक्ति-मेकामुपक्रम्य यावत् स्युर्नव रक्तिकाः" इत्यादि। यत् तन्त्रान्तरे उक्तं, सर्वमनेन तत् सङ्गृहीतम्॥ ४३॥

लौहमर्दनार्थं पात्रमाह समेत्यादि।—उत्तानवामकरतलस्थापनार्थं तत् पात्रं

बन्धं गृह्णाति यथा मध्वपृथक्त्वेन पङ्कमविमिश्रयत् ॥ ४४ ॥

इदमिह दृष्टोपकार्यमेतददृष्टन्तु मन्त्रेण।
स्वाहान्तेन विमर्दो भवति फडन्तेन लौहबलरक्षा।
सनमस्कारेण बलिर्भक्षणमयसो हूमन्तेन ॥

"ओं अमृतोद्भवाय स्वाहा।" "ओं अमृते हूं फट्।" "ओं नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरगुरुविद्यामहाबलाय स्वाहा।" "ओं अमृते हूं" ॥ ४५ ॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत्।
कान्तक्रामकममलं सम्यग्रसं पिबेद्दिने न तु तत्।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥ ४६ ॥

---

भाजनाकारं करणीयम्। लौहेनेति लौहदण्डेन। मधु तदुचितं दत्त्वा, अधिकमिति मध्वपेक्षया किञ्चिदधिकं घृतं मिश्रणीयम्। मर्दनविध्यर्थं लक्षणमाबन्धमित्यादि।—अविमिश्रयदिति स्वतन्त्रं मधु अपृथक्त्वेन एकत्वेनाविमिश्रविमिश्रमकुर्वत् अतएव पङ्कमिति ॥ ४४ ॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरिति दृष्टमुक्त्वा मन्त्रजमस्यादृष्टार्थमाह इदमित्यादि।—तत्र प्रथमं लौहमर्दनमन्त्रमाह ओं अमृतोद्भवायेत्यादि।—स्वाहान्तो मर्दनमन्त्रः। लौहरक्षणमन्त्रमाह ओं अमृते हूं फट् इति। बलिदानमन्त्रमाह ओं नम इत्यादि।—भक्षणमन्त्रमाह ओं अमृत हूमिति ॥ ४५ ॥

लौहभैषज्यपाकार्थमनुपानमाह जग्ध्वेत्यादि।—नीरस्यामलम् आकाशगुणत्वयभूयिष्ठभूभागाश्रय, [illegible] गन्धं सर्वत्र; उक्तञ्च—"सर्वत्र गन्धमेवेति मतमाह पतञ्जलिः" इति। अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणम्। तदुक्तं योगरत्नाकरे—"अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधाः" तथा अन्यत्रोक्तम् अनुपानं प्रयोक्तव्यं लौहात् पञ्चगुणं पयः" इति। अनुपानं कृत्वा लौहदोषनिरासाय निस्तुषः कान्तक्रामकस्य स्वरसमात्रं पेयमित्याह कान्तक्रामकमित्यादि।—आचम्येति।—आचमनञ्च सुशीतजलेन हंसोदकेन वा। यदुक्तं—"कृत्वानुपानमाचम्य [illegible] वा। यद्वा हंसोदकेनैव" इत्यादि ॥ ४६ ॥

नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत् ।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥
जह्याच्च दिवानिद्रामहितञ्चाकालभुक्तञ्च ।
वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान् ।
तत्फलविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥ ४७ ॥
अशितं तदयः पश्चात् पततु न वा पाटवं कुरु प्रथताम् ।
आर्त्तिर्भवतु न वान्ते कूजति भोक्तव्यमव्याजकम् ॥ ४८ ॥
प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिद्धमश्नीयात् ।
घृतसंप्लुतमश्नीयान्मांसैर्वै हृद्यैः प्रायः ॥
उत्तममनूपभूचरविष्किरमांसं तथाजमैणादिकम् ।
अन्यदपि जलचराणां पृथुरोमापेक्षया ज्यायः ॥

---

अनुपानादिकं कृत्वा यथा स्थातव्यं तदाह नात्युपविष्ट इत्यादि ।—नातिस्थित इति तद्गीभूतः दण्डायमानः सन् अति न तिष्ठेत् चिरं न तिष्ठेदित्यर्थः । अपरं परिवर्जनीयमाह अत्यन्तेत्यादि ।— अत्यन्तेति वातादिभिः सम्बध्यते ; यानमश्वादि यानम्, आदिशब्दादीर्ष्याचिन्ताविषमाङ्गन्यासादीनां ग्रहणम् । अकालभुक्तम् अजीर्णादौ भोजनम् । वर्जनीयरसानाह वातकृत इत्यादि ।—वातकृत इत्यादिकं हेतुगर्भमेव विशेषणं, किंवा वातकृतः पित्तकृत इत्यनेन कट्वम्लतिक्तकषायाः पिप्पल्यामलकगुडूचीहरीतक्यादयो वातपित्तं न कुर्वन्ति, तेषामुपयोगो न विरुध्यत इति दर्शयति । विशेषेण वर्जनीयविधानमाह तत्फलेत्यादि ।—अत्रापि जह्यादिति पूर्वोक्तं सम्बध्यते ॥ ४७ ॥

प्रातरुपयुक्तं लौहं चेत् अतः कस्यामवस्थायां भोक्तव्यमित्याह अशितमित्यादि ।—अशितं तदयः पश्चादिति गुदेन पततु प्रवर्त्ततां, न वा, तथा आर्त्तिरिति कुक्षा पीडा भवतु वा न वा ; तथापि पाटवम् आलस्यादिराहित्यं कुरु भवतु तथा लौहसम्भावितहृद्ये सम्यग् वायोः सञ्चरणेनाव कूजनञ्च कुरु भवतु तदैव अव्याजं निःशङ्कं भोक्तव्यं कुरु इत्यङ्गीकारविशेषे । एतेन पाटवमन्त्रकूजन-मेतदुभयमेव भोजनं प्रति प्रयोजकमित्यर्थः ॥ ४८ ॥

इदानीं भोजनं येन विधिना कर्त्तव्यं तदाह प्रथममित्यादि ।—विशदं पृथक् ;

मांसालाभे मत्स्या बहौषधाः स्थूलसद्गुणा ग्राह्याः ।
मद्गुररोहितशकुला दग्धास्तु पललान्मनाङ्न्यूनाः ॥
शृङ्गाटकफलकशेरु-कदलीफलतालनारिकेलादि ।
अन्यदपि यच्च वृष्यं मधुरं पनसादिकं ज्यायः ॥
केवुकताडककरीरान् वार्त्ताकुपटोलफलदलसमठान् ।
मुद्गमसूरेक्षुरसान् शंसन्ति निरामिषेष्वेतान् ॥ ४९ ॥
शाकं प्रहेयमखिलं स्तोकं रुच्यै तु वास्तूकं दद्यात् ।
विहितनिषिद्धादन्यन्मध्यमकोटिस्थितं विद्यात् ॥ ५० ॥
तप्तदुग्धानुपानं प्रायः सारयति बद्धकोष्ठस्य ।
अनुपीतमम्बु यद्वा कोमलशस्यनारिकेलस्य ॥

---

अक्लिन्नमिति नात्यौष्णसलवणम् । दुग्धमिति जीवद्वत्सायाः शुक्लायाः कृष्णाया वा प्रशस्तवत्साया वा ग्राह्यम् । वैष्कर्मैरिति तित्तिरादिभिर्विहङ्गमसम्भृतैः । प्रायःशब्दादाजैर्वाद्यि बोद्धव्यम् । एतदेवाह उत्तममित्यादि ।—अथ रभुचरजाङ्गलदेशचरा. लावतित्तिरिशशकादय, विष्किरा कुक्कुटादय, एषां मांसमुत्तममिति बालस्थविरव्याधितादिवर्जितानाम् । आदिशब्दात् कृष्णसारगोधादयः । अन्यदपीति विष्किरादिव्यतिरिक्तमित्यर्थः । जलचरा हंसादय । पृथुरोमापेक्षया ज्याय इति मत्स्यापथ्यश्रेष्ठमित्यर्थः । अन्ये तु पृथुरोमा शकुल्यमित्याहु. । मांसाप्राप्तौ मत्स्यविशेषोपयोगमाह मांसालाभ इत्यादि । के ते सद्गुणा [illegible] मद्गुरित्यादि ।—एतेन मद्गुरादयो दग्धाः सन्तः पललादिति मांसात् मनाङ् न्यूनाः किञ्चिद्धीना इत्यर्थः । इदानीं भक्ष्योचित फलकन्दमाह शृङ्गाटकेत्यादि ।—आदिशब्दादाम्रखर्जूरादिकम् । निरामिषव्यञ्जनार्थमाह केवुकेत्यादि ।—ताडकरीरास्ताडकाङ्कुराः । फलदलेति पटोलस्य फलदलम् ॥ ४९ ॥

शाकं पुनः सकलमेव वर्जनीयमित्याह शाकमित्यादि ।—प्रहेयमित्यवश्यत्याज्यम् रुच्यर्थं पुनर्वास्तूकमेवाल्पप्रमाणं दद्यात् । विहितनिषिद्धव्यतिरिक्तं यदाद्यं तत् साधारणं ज्ञेयमित्याह विहितेत्यादि ॥ ५० ॥

इदानीं बद्धकोष्ठं प्रति अनुपानविशेषमाह तप्तेत्यादि ।—तप्तक्षीरानुपानेन मलं सरन्ति बद्धाः । नारिकेलोदकञ्च प्रसरति । एकमपि कृते यद्वा न प्रवर्त्तन्ते

यस्य न तथा सरति सयवक्षारं जलं पिबेत् कोष्णम्।
कोष्णं त्रिफलाक्वाथं सनाथं क्षारं ततोऽप्यधिकम् ॥ ५१ ॥
त्रीणि दिनानि समं स्यादह्नि चतुर्थे तु वर्द्धयेत् क्रमशः।
यावच्चाष्टममाषं न वर्द्धयेत् पुनरितोऽप्यधिकम् ॥
आदौ रक्तिद्वितयं द्वितीयवृद्धौ तु रक्तिकात्रितयम्।
रक्तिपञ्चकं पञ्चकमत ऊर्द्ध्वं वर्द्धयेन्नियतम् ॥ ५२ ॥
वात्सरिककल्पपक्षे दिनानि यावन्ति वर्द्धितं प्रथमम्।

---

तस्य किं कर्त्तव्यमित्याह यस्येत्यादि। उष्णजलं कोष्ठानुरूपं यवक्षारं प्रक्षिप्य पिबेदित्यर्थः। प्रयोगान्तरमाह त्रिफलेत्यादि।—क्षारं यवक्षारं सनाथमिति सहितमित्यर्थः। यवक्षारप्रक्षेपश्च "प्रक्षेपः पादिकः क्वाथ्यात्" इति परिभाषयैव। तत इत्युक्तयोगात ॥ ५१ ॥

लौहप्रमाणवृद्धिः क्रमेणैव कार्य्या अतस्तमेव वृद्धिक्रमं दर्शयति त्रीणि दिनानीत्यादि।—येन परिमाणेन लौहभक्षणारम्भः कृतः, तेनैव परिमाणेन दिनत्रयं कार्य्यम्, चतुर्थदिनादारभ्य पुनरपि दिनत्रयं यावत् समवृद्धौ वर्द्धयेत् त्रीणि दिनानि समं स्यादित्युक्तेः ततोऽपि सप्तमदिने या रक्तिवृद्धिः कृता तयैव वृद्ध्या पुनरपि दिनत्रयं यावत् वर्द्धयेत् त्रीणि दिनानि समं स्यादित्युक्तेरित्यादि बोध्यम्। एवं क्रमेणाष्टमाषकपर्य्यन्तं वृद्धिः कार्य्या, इतोऽधिकवृद्धिर्न कार्य्येत्याह यावदष्टममाषमित्यादि।—क्रमशो वर्द्धयेदित्युक्तमतस्तमेव क्रममाह आदावित्यादि।—आदौ लौहप्रयोगारम्भे रक्तिद्वयं कृत्वा वृद्धिरुपयोज्यम्, ततः प्रथमवृद्धौ चतुर्थदिनमारभ्य रक्तिद्वयं कृत्वा त्र्यहं वृद्धिः कार्य्या, तेन द्वितीयत्र्यहे प्रतिदिनं रक्तिकाचतुष्टयं भवति, ततो द्वितीयवृद्धौ रक्तित्रयं कृत्वा त्र्यहं वृद्धिः, तेन तृतीयत्र्यहे प्रतिदिनं सप्तरक्तिका भवन्ति, अत ऊर्द्ध्वं चतुर्थपञ्चमादित्र्यहेषु त्रीणि दिनानि समं स्यादित्युक्तरीत्या क्रमेण रक्तिपञ्चकं कृत्वा अष्टमाषकं यावद् वर्द्धयेत्। तेन चतुर्थत्र्यहे द्वादशरक्तिः पञ्चमत्र्यहे सप्तदशरक्तिः, षष्ठे द्वाविंशतिरित्यादि ज्ञेयम्, तेन पञ्चदिनाधिकं सप्तसप्ताहे दशरक्तिकमाषेण त्रिरक्तिकाधिका अष्टौ माषका भवन्ति; अत्र च तत्र चतूरक्तिकावृद्धिं त्यक्त्वा यथोक्तवृद्धौ वृद्धास्तथा कुर्वन्तीत्यर्थं सिद्धान्तः ॥ ५२ ॥

तावन्ति वर्षशेषे प्रतिलोमं ह्रासयेत् तदयः ॥
तेष्वष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात् ।
सायञ्च तावदह्नो मध्ये माषद्वयं शेषम् ॥ ५१ ॥
इति भक्षणविधिः ॥
एवं तदमृतमश्नन् कान्तिं लभते चिरस्थिरं देहम् ।
सप्ताहत्रयमात्रात् सर्वरुजो हन्ति किं बहुना ॥
आर्य्याभिरिह नवत्या सप्तविधीनां यथावदाख्यातम् ।
अमतिविपर्य्ययसंशयशून्यमनुष्ठानमुन्नीतम् ॥

---

इदानीं संवत्सरं यावदयदि कर्त्तव्यमिदं रसायनं स्यात् तदा वर्षावशेषदिनानि यावन्ति भवन्ति तावन्त्येव प्रतिलोमं रक्तिकादिक्रमेण ह्रासः कार्य्य इत्याह तावन्तीत्यादि।—इदानीं पञ्चदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते इति वत्सराभ्यन्तर एव केन प्रकारेण तल्लौहमुपयोज्यमित्याह तेष्वित्यादि।—अष्टमाषकेषु मध्ये माषकत्रयं प्रातः। तावदिति माषकत्रयं सायाह्ने; अह्नो मध्ये भोजनसमये शेषं माषकद्वयम्। अन्यत्राप्युक्तं—"प्रातर्माषत्रयं कार्य्यं मध्याह्ने माषकद्वयम्। माषत्रयं दिवाशेषे माषकाष्टकभक्षणम्" इति। इदानीन्तु रक्तिकाद्वयमारभ्य योगिनं प्रति रक्तिकाद्वयवृद्ध्यैव त्रिसप्ताहपञ्चसप्ताहादिभिः किञ्चिदधिकमाषकद्वयं यावत् वृद्धिः ततो त्रिसप्ताहादिभिः रक्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः। उत्तरक्रिया चात्र द्विगुणा कार्य्या; तदुक्तं पातञ्जले—"इति मुख्यक्रियायाः स्याद्द्विगुणा चोत्तरक्रिया।" उत्तरक्रियाच नात्युपविष्टो नात्यतिभाषी नातिस्थितस्तिष्ठेदित्यादिना उक्तैव ॥ ५१ ॥

इति भक्षणविधिः।

इदानीमस्य लौहस्य फलमाह एवमित्यादि।—उपसंहरति आर्य्याभिरित्यादिना। सप्तविधयश्च—साध्यसाधनपरिभाषाविधिः, स्थालीपाकविधिः, पुटनविधिः, प्रधाननिष्पत्तिः, पाकविधिरश्रविधिर्भक्षणविधिश्चेति। यथानुष्ठानं नवत्या आर्य्याभिः कोऽपीष्टकर्मा अमतिविपर्य्ययसंशयशून्यं यथा स्यात् तथा वितवान् इत्यर्थः। कोऽपीत्यनिर्दिष्टनामधेयः पुरुषः उत्कृष्टरूपः। षट्कर्मा श्रोत्रियः; उक्तं हि—"याजनं यजनं दानं ग्रहणञ्च परिग्रहः।" अध्यापनमध्ययनं श्रोत्रिय

मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा ॥ ५४ ॥

अमृतसारं लौहं समाप्तम् ॥

यत्र तत्रोद्भवं लौहं निःशेषं मारितं यदि।
त्रिफलाव्योषसंयुक्तं भक्षयेदखिलनाशनम् ॥
सामान्याद्द्विगुणं क्रौञ्चं कलिङ्गोऽष्टगुणस्ततः।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविर्दशभिर्गुणैः।
ततः कोटिसहस्रं वा अयस्कान्तं महागुणम् ॥ ५५ ॥

---

षड्भिरेव च" इति। अमतिः सर्वथा ज्ञानाज्ञानराहित्यं तस्मिंस्तदुद्भिन्नः स च द्विधा—एककोटिकोऽनेककोटिकश्च ; तत्राद्यो विपर्ययः, द्वितीयश्च संशय इति। अनुष्ठीयत इत्यनुष्ठानं ग्रन्थसन्दर्भ एव। यथावद्व्याख्यातमित्यत्र पूर्वाचार्य्यैरिति शेषः। उपनीतमिति गुरुपरम्परया उपदेशपूर्वकं कथितमित्यर्थः। मुनिरचितेत्यत्र मुनि-र्नागार्जुनः। बान्धवानामिति मनुष्याणाम्। एषां चतुर्वर्गाश्रयत्वेनावश्योपकर्त्तव्यता च बन्धुत्वम्, एतेनास्य निबन्धस्य अमतिविपर्य्ययसंशयनिरासः संक्षेपश्चेति गुणद्वयमुक्तम् ॥ ५४ ॥

अमृतसारलौहं समाप्तम्।

इदानीं नागार्जुनोक्तं दाशरथायनलौहमाह यत्र तत्रेत्यादि—यत्र तत्र भवमिति क्रौञ्चकलिङ्गादियत्किञ्चिद् ग्रभवं वज्रपाण्ड्यादिकमेव निःशेषमिति सर्वथैव मृतम्। निःशेषमित्यत्र निरुत्थमिति पाठे टङ्कणादियोगेनापि वह्नौ ध्मापनार्थं यदुपतिष्ठते पुनर्लौहभावं नापद्यत इत्यर्थः। त्रिफलेत्यादि।—व्योषं त्रिकटु। त्रिफला त्रिकटुचूर्णञ्च मिलित्वा लौहसमं बोध्यम्। संयुक्तं सम्यक् युक्तम्, तेन मधुघृताभ्यां लौहपात्रे लौहदण्डेन विघृष्य भक्षणीयम्। रक्तिकादिक्रमेणेति वदन्ति वृद्धाः। अन्ये त्वादौ माषकमेकमुपयोज्यमित्याहुः। वह्निं मध्ये वा अग्निबलमपेक्ष्य यथा शक्ति कुर्वन् सार्द्धसंवत्सरात् वह्निं नाशयेदिति दाशरथायनवटिकायामुक्तम्। लौहानां गुणमाह सामान्यादित्यादि। दण्डभङ्गिपर्य्यन्तदेशदर्शितोत्तरदिक्संभवं लौहं सामान्यम्, द्विगुणमिति सामान्यलौहात् द्विगुणगुणकारकम्। क्रौञ्चमिति

ताम्रयोगः।

रसतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम्।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा॥
पत्रीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः।
आम्ले ध्मापिततामं निर्गुण्डीकल्ककाञ्जिकमम्ले॥
यत् पतति गैरिकाभं तत्पिष्टमर्द्धगन्धकं तदनु।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः॥
हिलमोचिमूलपिण्डे क्षिप्तं तदनु मार्दसम्पुटे लिप्ते।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधु चन्द्रिकाविरहितम्॥

---

ओड्रदेशोद्भवम्; भद्रमिति भद्रदेशोद्भवम्। एषाञ्च भक्षणलक्षणञ्च टीकायामनु सन्धेयम्, इह तु विस्तारभयान्न लिखितम्॥ ५५॥

सम्प्रति ताम्रयोगमाह रसत इत्यादि।—शोधितात् पारदात् ताम्रं वक्ष्यमाण क्रमेण मारितचूर्णावस्थं द्विगुणं ग्राह्यम्; कृष्णाभ्रञ्च वक्ष्यमाणरीत्या शोधितं चूर्णावस्थं ताम्राद्द्विगुणं ग्राह्यम्। कृष्णेति अभ्रकविशेषणात् भेकवपुर्षो निरस्त एषां रसादीनां पृथगेव शुद्धिः। तत इति तेषु मध्ये ताम्रशुद्धिं द्विधा आह। कि तत्प्रकारद्वयमित्याह पत्रीकृतस्येत्यादि।—मारणमिति छेदः। एतच्च तनुपत्रीकृतम्। द्वि ' शुद्धिमाह तथा लवणैरित्यादि।—लवणैः सैन्धवादिभिः पञ्चभिरेव। आम्ले इति लिपे निर्गुण्डी निसुन्दार, तदीयमूलमतकल्कयुक्तकाञ्जिकमध्य इत्यर्थः। अथ द्रुतरूप यत् ताम्रं पतति तद्गैरिकवल्लोहितमित्यर्थः। ताम्रादर्द्ध गन्धकं दत्त्वा तावदेकीकृत्य पेष्टव्य, ततः स्थाल्यामारोप्य तुषमृत्तिकया लिप्त लौहवत् पुटो देय.। अभ्रकशुद्धिमाह अभ्रकन्त्वित्यादि।—अम्लाम्भसा काञ्जिकेन पिष्ट सत् हिलमोचिकापिण्डे कृत्वा एकमृत्पात्रे निधाय अपरेण पिधाय तीक्ष्णमि बहुलं यथा स्यात् तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति, तदनु पुटादाकृष्य शिलायां पिष्टा चूर्णीकृत्य तत् ग्राह्यमित्यर्थः। अथ जारिततामचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह रेचितेत्यादि।—रेचिततामेण मारिततामेण सह रसः खल्लशिलायां मेलयित्वा दृढा पिष्टिका कार्य्या। तदनु निर्गुण्डी कल्कमिश्रिते मृदुसलिले काञ्जिके वा पिष्टिकैः असकृदित्यनेकवारमुत्

रेचिततास्त्रेण रसः खल्वशिलायां घृष्टः पिण्डिका कार्या।
उत्स्वेद्य गृहसलिलेन निर्गुण्डीकल्कोऽसकृच्छुद्धौ।
एतत् सिद्धं त्रितयं चूर्णिततास्त्रार्द्धिकैः पृथग्युक्तम्॥
पिप्पलीविड़ङ्गमरिचैः श्लक्ष्णं द्विविमाषिकं भक्ष्यम्।
शूलाम्लपित्तश्वयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु।
रसायनं महदेतत् परिहारो नियमतो नात्र॥ ५६॥

ताम्रयोगः।

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम्।
दत्त्वा चोर्द्धमधो मध्ये स्थालिकामध्यसंस्थितम्॥
कृत्वा खल्पशरावेण स्थालिमध्ये पिधाय च।
शर्कराभक्तलेपेन लिप्त्वा सन्धिं तदूर्द्धतः॥

…िद, शुद्धाविति शुद्धयम्। उत्स्वेदनप्रकारश्चायं सूतनियामकभार्ग्यादिगणान्य …मद्रवे रसपिण्डित मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीकल्केन मिश्रित …काञ्जिकेनाधो ज्वालया ताप्यमानेन उत्स्वेदनीयमसकृदित्यर्थः। सूतनियामकश्च …भार्ग्यादिगणो योगरत्नाकरे यथा—"भार्गी शरपङ्खा कुठारच्छिन्ना ब्राह्मी मूषिक- …पर्णिका पुनर्नवा अपराजिता अवाक्पुष्पी भेकाह्वा रुदन्ती मयूरशिखा चेति। …भार्ग्यादिरेव विख्यातगणः सूतनियामकः।" इति। अग्नितापेनापि रसं क्वचिदपि …न नीतं न ददातीत्यर्थः। सूतनियामकौषधमध्यगं रसं सकाञ्जिकदोलायन्त्रे …र्वेत। तदनु त्रितयमिदं रसाभ्रताम्रचूर्णं पिप्पल्यादित्रयञ्च प्रत्येकं ताम्रचूर्णार्द्ध …मान गृहीत्वा संयोजनीयं, तत एकीकृत्य अग्निबलाद्यपेक्षया द्विविमाषिकादिक- …प्रयोज्यम्। आदिशब्देन दशप्रभृतय.। कुक्षिरोगेष्विति अग्निमान्द्यादिष्वपी- …त्यर्थः ॥ ५६॥

ताम्रयोगान्तरमाह तनुपत्रीकृतमित्यादि।—नैपालमिति नेपालदेशोद्भवं ताम्रम्। …तनुपत्रीकृतमिति पत्तनं यथा स्यात् तथा पत्रीकृतम्, पत्तनता कण्टकवेध्यावस्थो- …पादानेन लभ्यत इति। तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा जम्बीराम्ल- …रसेन सम्मर्द्य प्रक्षाल्य सशोध्य, तदनु ताम्रसममेव शोधितगन्धकं सञ्चूर्ण्य, तदन- …न्तर स्थालिकायां कियदपि गन्धिकचूर्णं दत्त्वा तदुपरि कियदपि ताम्रपत्रं निवेश्य

वालुकापूरितस्थाल्यां पिहितायां पुनस्तथा ॥
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनः पुनः ।
कृत्वा देयं मृतं ताम्रं कर्षमाणं ततः पुनः ॥
रसोऽम्लमथितः शुद्धस्तावन्मात्रः प्रदीयते ।
ततस्तथैवं संमर्द्य पुनराज्यं प्रदापयेत् ॥
अष्टविन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा ।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम् ॥
संहृत्यालम्बुषरसप्रसृतेन विलोड़ितम् ।
पुनस्तथैव वह्निस्थलौहपात्रे विमर्दयेत् ॥
यावद्द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम् ।
अलम्बुषरसेनैव गुड़कं सम्प्रकल्पयेत् ॥

---

पुनस्तदुपरि गन्धकचूर्णं देयमित्येवंक्रमेण सर्वाणि ताम्रपत्राणि गन्धकचूर्णसहितान्युपर्य्यधोभावेन निवेश्य, ततोऽन्यशरावेण स्थाल्यन्तरनिवेशयोगेन तत् ताम्रपत्रं पिधाय, तच्छरावप्रान्तञ्च शर्करासहितभक्तलेपेन लिप्त्वा तस्य शरावस्योपरिभागं वालुकापूर्णं तत् स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्या मुखं पिधाय तथैव भक्तलेपेन लिप्त्वा प्रहरमेवमविच्छेदेनाधो ज्वालां प्रदापयेत् । इति ताम्रमारणम् ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह तत इत्यादि । कथं योजना कर्त्तव्येत्याह अथेत्यादि ।—अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णकर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौनःपुन्येन घृष्ट्वा द्रवीभूते तस्मिन् मृतताम्रचूर्णं कर्षमानं दत्त्वा तथैव शिलापुत्रेण घर्षणीयम् । ततः पुनरिति ततोऽनन्तरं अम्लितापद्रुत एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः । पुनस्तेनैव मर्दनीयः, किन्तु श्लिष्टो रसः अम्लमथितः सन् शुद्धः । अत्र दीजम्बीराद्यम्लरसमथनाच्

तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः॥
ततस्तां पोट्टलीमाज्यमग्नां कृत्वा विधारिताम्।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक्॥
यदा निष्फेनता चाज्ये पुटिका च दृढा भवेत्।
तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाधृतम्॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत्।
तक्रं स्यादनुपानन्तु अम्लपित्तोच्छ्रये पुनः॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु।
सप्तमे दिवसे रक्तिवृद्धिस्ताम्रात्तु माषकम्॥
यावत् प्रयोगश्च तथैवापकर्षः पुनर्भवेत्।
योगोऽयं ग्रहणीयक्ष्मपित्तशूलाम्लपित्तहा॥

---

मद्य। तदनु अष्टबिन्दुपरिमित घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रकेणैव। तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूत स्यात्। ततस्तस्मात् खर्परात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं सूक्ष्ममपि भत संहृत्य पलद्वयेनाम्लम्बुषरसेन विलोड्य रसक्षयपर्यन्तं पुनर्लोहखल्ललौहपात्रे मर्दयेत्, तत आकृष्य अलम्बुषरसेनैव शिलायां पिष्टा गुडिका कल्पयेत्। तदनन्तरं किं विधेयमित्याह तत् पिण्डमित्यादि। ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूप त्रिकटुक दत्त्वा विस्तार्य तदुपरि अपरवित तार्तमिमलवस्त्रखण्डे स तामौषधगुडक निधाय ततो दृढां पोट्टलिकां बद्धा, घृत पूर्णस्थालीपात्रे सूत्रेण दण्डसलग्नतया दोलापाकविधिना तां पोट्टलीं समारोप्य घृतनिमग्नां कृत्वा पचेत्। पाकज्ञानार्थमाह यदेत्यादि।—पुटिका च दृढा भवेदिति पुटिका पोट्टलिका, तस्या दृढता च दण्डिकयाताड्य ज्ञेया। त्रिकटुत्रिफलयोश्च मिलित्वैव पञ्चगुञ्जेति ताम्रतुल्यं, प्रातरित्यर्द्धप्रहरे। अनुपानमाह तक्रमित्यादि। अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव ताम्रतुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह अम्लपित्तोच्छ्रये इत्यादि।—त्रिफलैव

रसायनञ्चैतदिष्टं गुदकीलादिनाशनम्।
न चात्र परिहारोऽस्ति विहाराहारकर्म्मणि ॥ ५७ ॥

इति ताम्रयोगः।

शिलाजतुप्रयोगः—

हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः।
जत्वाभं मृदु मृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥
अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥
हेम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि।
मधुरञ्च सतिक्तञ्च जवापुष्पनिभञ्च यत् ॥
विपाके कटु तिक्तञ्च तत् सुवर्णस्य निःस्रवम्।
राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते ॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु।
यत्तु गुग्गुलुमङ्काशं तिक्तकं लवणान्वितम्।

---

समा देया त्रिफलैव ताम्रतुल्या देयेत्यर्थः। तथा कौणगलम् अनुपिबेदिति वृद्धिक्रममाह सप्तम इत्यादि।—सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धिः कार्य्या, माषकमानं यावदस्य प्रयोगः कार्य्यः। तेन माषकादूर्द्ध्वं वृद्धिर्न कर्त्तव्येत्यर्थः। येनैव क्रमेण वृद्धिः कार्य्या तेनैव ह्रासोऽपीत्याह तथैवापकर्ष पुनर्भवेदिति। केचित्तु वृद्धवैद्यास्त्रिफलाव्यतिरिक्तेन द्विविरक्तिकमिदमौषधं मधुना समालोड्य ददति। तेनैव महान् विशेषो दृश्यते। गुदकीलादिनाशनमित्यादिशब्दात् पाण्डुरोगादयः ॥ ५७ ॥

इति ताम्रयोगः।

इदानीं चरकोक्तशिलाजतुरसायनमाह हेमाद्या इत्यादि।—गिरिगता धातवो गिरिधातवः, हेमाद्या इति तद्विशेषणम्। आद्यशब्दात् लौहरूप्यताम्रसीसकगैरिकमनःशिलादीनामपि ग्रहणम्। अतएवोक्तं हारीते—"सुवर्णरूप्यत्रपुसीसताम्रम्" इत्यादि। अनाम्लमित्यादि विशिष्टगुणाभिधेयस्य शैलाद्युत्थफलकम्,

विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम् ॥
गोमूत्रगन्धः सर्वेषां सर्वकर्मसु यौगिकः ॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः ॥ ५८ ॥
लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि ।
तृणाद्यग्रे कृतं सर्वमधो गलति तन्तुवत् ॥

---

तस्माद्रसचतुष्टयस्यात्र विधिः। धातुभ्यश्चतुर्भ्य इति रसायनाधिक्यात्, तेन सुवर्ण-रूप्यनपुसीसेत्यादिना हारीतेन यदेवं विविधधातुसम्भवत्वमुक्तं तेन सम न विरोधः। नात्युष्णशीतमिति शीतोष्णयोर्बलवत्त्वं निषिध्यते, तेन किञ्चिदुष्णं किञ्चिच्छीतलं शिलाजतु भवतीति। ते के चत्वारो धातव इत्याह हेम इत्यादि। क्रमेण हेमादि-सम्भवानां चतुर्णां लक्षणमाह मधुरमित्यादि। चकारात् स्निग्धत्वादिकं बोध्यम्। यदाह हारीतः—"स्निग्धं घनं काञ्चनगैरिकाभ मतिक्तशीतं मधुरं सुवर्णात्" इति। अत्र शिलाजतुसामान्यगुणकथने अम्लकषायव्यतिरिक्तरसचतुष्टयमुक्तम्, तथा कटु-पाकोऽप्युक्तम्, तेन विशेषगुणकथने पुनर्यो रसोऽभिधीयते तत्रोत्कर्षवानिति ज्ञेयः; सामान्यगुणोक्तरसोऽनुक्तोऽपि लभ्यत एव। यस्तु रौप्यभवे कटुपाकविरुद्धो मधुरक उक्तः, स उत्सर्गापवादन्यायेन समर्थनीयः। अन्ये तत्तु समधुरविरुद्धं पच्यत इत्याहु, अतएव हारीते विदाहित्वमस्य यदुक्तं तदप्युपपद्यते, यथा--"रौप्याकरो-त्थन्तु मृणालवर्णं सक्षारकं तत् कटुकं विदाहि" इति। युक्तिमुपवर्णयन्ति। अत्र वीर्य्यं ताम्रभवस्योष्णमुक्तम्, तथा त्वायससान्नाच्च शीतमुक्तम्, तेन नात्युष्णशीतवीर्य्यतयोः सामान्यगुणोक्तयोरवकाशो नास्तीति केचिदाहुः, तन्न युक्तम्, यतो नात्युष्णशीतत्वं त्वधीयते, किन्तु शीतोष्णयोर्बलवत्त्वमात्रं निषिध्यते, तेन किञ्चिच्छिलाजतु शीतम्, उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातम्। ताम्रभवशिलाजतुगुण-कथने तिक्तोष्णमित्यत्र तीक्ष्णोष्णमिति केचित् पठन्ति, तन्मते ताम्रजे यद्यपि रसो नोक्तस्तथापि सामान्योक्तचतूरसत्वमेव सानुभवरसभावेन ज्ञेयमित्यर्थमाहुः। पश्चिम-मित्यायसम्। यथाक्रममिति वातपित्ते सौवर्णम्, श्लेष्मपित्ते रौप्यजम्, कफे ताम्र-जम्, त्रिदोषजे लौहजमित्यर्थः ॥ ५८ ॥

मलिनं यद्भवेत् तच्च चालयेत् केवलाम्भसा ।
लौहपात्रेषु विधिना जर्ज्जीभूतञ्च संहरेत् ॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्व्वैरेकैकशोऽपि वा ॥
प्रक्षिप्योद्धृतमाप्लानं पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे समाह्वमेतेन विधिना तस्य भावना ॥
तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम् ।
ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ।
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ॥
पूर्व्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह ॥
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम् ।
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ॥

---

श्रेष्ठशिलाजतुनो लक्षणमाह लौहकिट्टायत इत्यादि ।—यत् शिलाजतु वह्नौ विगतधूमं सत् दह्यते लौहमलवच्च भवति तच्छ्रेष्ठम् । परीक्षान्तरमाह अम्भसीति अम्भसि अयं कृतं जले क्षिप्तं सत् प्रथमतः स्तब्धाति प्लवते, तन्तुवत् गलति अथवा तन्तुवल्लम्बते, तत् शिलाजतु श्रेष्ठमित्यर्थः । शिलाजतुशोधनमाह मलिनमित्यादि । अम्भसा उष्णोदकेन, लौहपात्रेषु विधिनेति हारीतोक्तशिलाजतुसाधनविधिना । जर्ज्जीभूतं यत् तत् संहरेत् संगृह्णीयात्, काचादिनिर्म्मलपात्रे स्थापयेदित्यर्थः । तत्राथ शोधनविधिः । प्रथमं केवलं शिलाजतु जले धौतं कृत्वा तदनु कीटादिदुष्टौषधि-दोषविनाशाय अगुरुतुवरीनिम्बपत्रयवगुडूचीष्टतैर्धूपयित्वा, तदनु श्लक्ष्णचूर्णीकृत्य तदनु भाजनाकारलौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं वा केवलोष्णोदकं वा प्रक्षिप्य नित्यं लौहमूषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयम् । अत्र च प्रचण्डातपावस्थानेन सरवदूर्द्ध्वं यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्म्मलपात्रे स्थाप्यम्, एवं शिलाजतु भावनायां योज्यम् ; उक्तं हि हारीते—"तदयाश्ययित्वा क्रमशो विभज्य देशे शुभे मङ्गलसिद्धियुक्ते । तिथौ च पुण्ये सुदिने च पुण्ये नक्षत्रयोगेण शिवेन चापि । लौहागुरुनिम्बगुडूचिसर्पिर्यवैर्यथावत् परिधूपयेच्च ।

मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत्।
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः॥
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा।
मात्रा पलन्त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत्॥

पयांसि शुक्तानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः।
आलोड़नार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम्॥ १८॥

चरकोक्तशिलाजतुविधानं सोपस्कारमेतत्।

---

सनालिकाकीटपतङ्गदंशदुष्टौषधीदोषविनाशनं तत्" इति। इदानीं चरकोक्त-भावनाविधिमाह वातपित्तेत्यादि।—निर्व्यूह क्वाथः। सुभावितमिति सप्ताहम्। सर्वैरिति वातघ्नादिक्वाथैः। भावनात किं स्यादित्याह वीर्य्योत्कर्षमित्यादि। प्रक्षिप्येत्यादि।—रसे वातघ्नादिक्वाथे कोष्णे तच्छिलाजतु प्रक्षिप्य पश्चादातपे तपने शुष्कपर्य्यन्तं कृत्वा पुनरपि तद्रसे प्रक्षिपेत। वानं शुष्कम्, "शुष्के वानसुभे विषु" इत्यमरः। इदानीं भावनार्थद्रव्यादिकमाह तुल्यमित्यादि।—तन्त्रान्तरस्य। गिरिजेन शिलाजतुना तुल्यं भावनौषधं दशमूलादिद्रव्यं क्वाथ्यम्। ततः समरसतां यातमिति तच्छिलाजतु क्वाथेन सह समरसतामिति आलोड़नेन एकीभूय तुल्यतां यातमित्यर्थः। एवं सिद्धं भावितं शिलाजतु लौहचूर्णेन सार्द्धमेकीकृत्य दुग्धेन पानव्यमित्याह पूर्व्वोक्तेनेत्यादि। चरकस्य। पूर्व्वोक्तेनेति चरक एव प्रतिषिद्धे रसायनपादे पूर्व्वोक्तविधिः। अत्र भागानुक्त्या शिलाजतुलौहयोः समत्वं कश्चिदाह, तन्न, शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लौहचूर्णस्य ग्राह्यत्वात्; हारीतेऽप्येवमेवोक्तम्। क्षीराशी क्षीरप्रधानभोजनकारी। इदानीमेतत्प्रयोगस्य कालभेदेन वैविध्यमाह प्रयोग इत्यादि।—सप्तसप्ताहाः एकोनपञ्चाशद्दिनानि तद्व्यापकप्रयोग इत्यर्थः। एवं त्रयश्चैकश्च सप्तक इति बोध्यम्। अथ चास्य त्रिविधा मात्रामाह मात्रेत्यादि। अस्मिन् प्रयोगे वर्ज्यमाह शिलाजतुप्रयोगे

शिवागुड़िका—

काले तु रवितापाढ्ये क्वथायसजं शिलाजतुप्रवरम्।
त्रिफलारससंयुक्तं त्र्यहञ्च शुष्कं पुनः शुष्कम्॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः॥
एकाहं क्षीरेण तु तत् पुनर्भावयेच्छुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथनैषां यथालाभम्॥
काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा।
ऋद्धियुगर्षभवीरामुण्डितिका जीरकेऽशुमत्यौ च॥
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्गचव्याब्दाः।
कटुका शृङ्गी पाठे तानि पलांशिकानि कार्य्याणि॥

---

त्वित्यादि। विदाहीनि वशकरीरमरिचराजिकादीनि। शिलाजतुप्रयोगे गुरुद्रव्यनिषेधेऽपि गुरुक्षीरप्रयोगाभिधानम् उत्सर्गापवादन्यायेन न विरुद्धमिति। कश्चित् कुलत्थानिति कुलत्थादीन् तेन काकमाचीकपोतयोरपि ग्रहणम्। उक्तं हि वाग्भटे—"कुलत्थं काकमाचीञ्च कपोतञ्च सदा त्यजेत्" इत्याह। सर्वकालमिति यावद्रसायनविहिता गुणास्तिष्ठन्ति। कश्चित्तु यावज्जीवम् कुलत्थवर्जनमाह कुलत्थस्य वर्जने सर्वकालीनत्वस्योपपत्तरभ्रकस्येव तथा प्रयोगे प्रतिषिध्यत इति यैर्द्रव्यैरालोड्य शिलाजतु पेयं तान्याह पयसेत्यादि।—चरकस्य। सोपस्कारमिति चरके परीक्षादिकमुक्तम् अत्र पुनर्लोहकिट्टायत इत्यादिना तदप्युक्तमिति सोपस्कारत्वम्॥ ५९॥

चरकोक्तशिलाजतुविधिमभिधाय शैवतन्त्रोक्तप्रसिद्धशिलाजतुप्रयोगं शिवगुडिकामाह काले इत्यादि।—रवितापाढ्ये इति विशेषणाद् ग्रीष्म इति यावत्, अन्ये तु शरदमप्याहुः। शिलाजतुनोऽत्र षोडशपलमात्रा, वक्ष्यति च पलानि दश षट् चेति। तेन तन्मानसम मिलितत्रिफलाद्रव्यं गृहीत्वा क्वाथयित्वा त्र्यहं भावनं कर्त्तव्येत्याह त्रिफलेत्यादि।—अत्र तुल्यं गिरिजेन जलमित्यादि—पूर्वोक्तवचनानुसारेण त्रिफलाक्वाथं कृत्वा त्र्यहं भावना कार्य्येत्यर्थः। एवं दशमूलक्वाथादिभिर्गोमूत्रान्तैरपि त्र्यहं त्र्यहं क्रमेण भावयेदित्यर्थः। क्षीरेण पुनरेकाहं परमिति।

अष्टांशे साधितानां रसेन पदांशिकेन भाव्यानि।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च॥
द्विपलञ्च त्रिस्रमागधिकाकट्कर्कटाख्यमरिचानाम्॥
चूर्णं पलञ्च विदार्य्यास्तालीशपलानि चत्वारि॥
षोड़श सितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ।
तिलतैलस्य द्विपलं चूर्णार्द्धपलानि पञ्चानाम्॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां मिश्रयित्वा तु।
गिरिजस्य षोड़शपलैर्गुड़िकाः कार्य्यास्ततोऽक्षसमाः।
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः॥
तासामेका काले भक्ष्या पेयापि वा सततम्॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि।
आलोड़नानि तासामनुपाने वा प्रशस्यन्ते॥
जीर्णे लघ्वन्नपयोजाङ्गलोनिर्य्यूहयूषभोजी स्यात्।
सप्ताहं यावदतःपरं भवेत् सर्वं सामान्यम्॥
भुक्तापि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित्।
निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम्।
बहुवार्षिकमपि गाढं यक्ष्माणञ्चाढ्यवातञ्च॥

---

क्षीरेण एकाहमेव भावयेदित्यर्थः। वक्ष्यमाणकाकोल्यादिक्वाथेन पुनः सप्ताह भावना कर्त्तव्येत्याह सप्ताहं भाव्यं स्यादिति। एषामिति वक्ष्यमाणकाकोल्यादीनाम्। यथालाभमिति वचनात् इन्द्रयवकटुरोहिण्यादिव्यतिरेकेणापि। विदारीयुग्ममिति विदारी-क्षीरविदार्य्यौ। क्षीरविदार्य्याश्च लक्षणं—"क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी" इति भग्नाचकित्सोक्तगन्धतैलव्याख्यायां गदाधरेणोक्तम्। ऋद्धियुगं ऋद्धिवृद्धी। वीरा मांसीति त्रिविक्रमः। जलजशाकमिति रत्नप्रभा। जीवके इत्यादि। कषायुक्तजीवके; अंशुमत्यौ शालपर्णीपृश्निपर्ण्यौ, इभकणा गजपिप्पली; कटुकी कटुरोहिणी; एतान्यष्टाविंशतिद्रव्याणि लिखितानि। वाग्भट्टे

ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुग्रहणीरोगान्।
व्रध्नवमिगुल्मपीनसहिक्काकासारुचिश्वासान्॥
जठरं श्वित्रं कुष्ठं पाण्डुरं क्लैव्यं मदं क्षयशोषम्।
उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान्॥
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च।
यकृदर्बुदानि विद्रधिभगन्दरं रक्तपित्तञ्च॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति।
दंष्ट्राविषं समौलं गराणि बहुप्रकाराणि॥
मन्त्रौषधियोगान् विप्रयुक्तान् भौतिकांस्तथा भावान्।
पापालक्ष्मौ चेयं शमयेद्गुड़िका शिवा नाम्ना॥
वल्या वृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम्।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च॥
श्रीमान् प्रकृष्टमेधःस्मृतिबुद्धिबलान्वितोऽतुलशरीरः।
पुष्ट्योजोऽतिविमलेन्द्रियतेजोबलसम्पदुपेतः॥

---

तु रसायनतन्त्रपठितशिवगुडिकापाठे ऋद्धि-ऋषभकादिषड्द्रव्याणि पठ्यन्ते, तद्यथा— ऋद्धिऋषभकौ मुण्डरीन्द्रयवौ कटुरोहिणी कर्कटशृङ्गी चेति। तदेवमुभयाचार्य्यप्रामाण्यादुभयथैव प्रयोगसङ्गतिरभ्युपेया। अस्याः पिप्पल्यादिवर्गस्याविवक्षाया यथालाभवचनादेतानि षोड़शद्रव्याणि न दृश्यन्तेऽपीति केचित्। एषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां क्वथनार्थदेयजलद्रोणसाधितशेषक्वाथशरावैः सप्तधा विभक्तैः सप्तदिनानि भावनाः सप्त कर्त्तव्याः। किन्तु सप्तदिने क्वाथस्याम्लता भवति। ततश्चैषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां सप्तदिनविभागेन पलचतुष्टयं मिलित्वा ग्राह्यं, तेन प्रतिदिनं पलचतुष्टयविभागेन काकोल्यादीनां प्रत्येक माषा ९, रक्तिका २ ग्राह्यम्; एवं जलद्रोणस्यापि सप्तदिनविभागेन देयजलशराव ९. पल १, माषा ९, रति १, अस्य पादावशिष्टतः क्वाथ्यं जल श २, कर्ष १, माषा २; अस्मिन् क्वाथे पूतीणे प्रतिदिनं शिलाजतुभावना, एवं सप्ताहं कर्त्तव्यम्। दश षट् चेति षोड़शत्यर्थः। यद्यपि निर्देशके

बलिपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः।
संवत्सरप्रयोगाद्द्वाभ्यां शतानि चत्वारि।
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम्॥
समुद्रभूवामृतमन्थनोत्थः स्वेदः शिलाभ्यो धृतवह्निरेः प्राक्।
यो मन्दरस्याखिलभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी॥
शिवागुड़िकेति रसायनमुक्तं गिरीशेन गणपतये।
शिववदनविनिर्गता यस्मान्नाम्ना तस्माच्छिवा गुड़िका॥ ६०॥

इति शैवसिद्धान्तोक्ता शिवागुड़िकेयम्।

इति शिलाजतुविधानम्।

---

मानप्रधानत्वात त्रिफलादीनां मरिचान्तानां मिलित्वैव पलद्वयं युज्यते तथापि वाग्भटप्रामाण्यात प्रत्येकमेव त्रिपलं ग्राह्यम्। पञ्चानामिति त्वक्क्षीर्यादिलान्तानां प्रत्येकमद्धपलं वाग्भटदर्शनादेव। त्वक्क्षीरी वंशलोचना। गिरिजस्य षोड़श पलमिश्रयित्वं ति योज्यम्। इह सर्वेष्वेव शिलाजतुप्रयोगेषु कर्त्तव्येषु प्रथमं शोधन विधाय तिक्तकघृत द्व्यहं त्र्यहं वापि बलानुरूपप्रमाणं दातव्य यथा स्निग्धो भवति; यदुक्तं तत्त्वप्रदीपे—"सम्यक्कायो विमलेन्द्रियश्च प्रशस्तनक्षत्रसुहृत्संयोगी। पिबेद्धृत तिक्तकषायमिद्ध द्व्यह त्र्यह वापि बलानुरूपम्" इति। अक्षसमा चात्युत्तममात्रा, एतत्तदनुसारेण मध्यमाधमपुरुषापेक्षया मात्रोह्या। यदृच्छया द्रव्यनियमेन, येन कदाचित् भुक्तापि भक्षिता सती विकार न जनयेदित्यर्थः। चाद्यवाते ऊरुस्तम्भ., सहजहेतुजकैव्यद्वयपरिग्रहार्थं षाण्ढ्य क्लैव्यमित्युभयपदोपादानं बोध्यम्। यद्यपि वीजदोषोत्पन्नसहजक्लैव्यमसाध्यत्वेनोक्तम्, तथापि प्रयोगमाहात्म्यसूचनार्थमिदमुक्तम्। गराणि संयोगविषाणि; भौतिकान् भावानिति भूतकृताः पीड़ाः। संवत्सरप्रयोगादिति पूर्वेण सम्बध्यते, द्वाभ्यामिति संवत्सरद्वयेनेत्यर्थः। शिलाजतुनः प्रागुत्पत्तिमाह समुद्रभूवेत्यादि।—अमृतमन्थनोत्थ इति अमृतमन्थनसमयजः। हितायेत्यादि। हितायेत्यत्र जगतामिति शेषः॥ ६०॥

इति शिवागुड़िका।

इति शिलाजतुविधानम्।

अमृतभल्लातकी—

सुपक्वभल्लातफलानि सम्यग्द्विधा विदार्य्याढकसम्मितानि ।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥
पुनः पचेत् क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात् ।
सितोपलाषोड़शभिः पलैस्तु
विमिश्र्य संस्थाप्य दिनानि सप्त ॥
ततः प्रयोज्याग्निबलेन मात्राम्
जयेद्गुदोत्थानखिलान् विकारान् ।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिं सुकुमारताञ्च ॥

अमृतभल्लातमाह सुपक्वेत्यादि ।—भल्लातकान्यत्र हारीतोक्तामृतभल्लातकोक्तरीत्या ग्राह्याणि, यथा—"भल्लातकानां पवनोद्धतानां वृन्तच्युतानामिह चाढकं स्यात् । तदिष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य नीरे विधिवत् प्रवाते । शुष्कं पुनः सङ्क्षिदलीकृतञ्च ततः पचेदप्सु चतुर्गुणासु । पादावशिष्टं परिपूतशीतं दुग्धं तुल्येन पचेत् सुशीतम् । तदर्द्धया शर्करयावकीर्णं ततः खजेनोन्मथितं विधाय भाण्डे विशुद्धे त्वथ धान्यराशौ संस्थापयेत् सप्त दिनानि चेति । तत्सम्प्रयोगात् परिजातवीर्य्यम्" इत्यादि । अत्र भल्लातकानां चतुःषष्टिपलानि, तदपेक्षया चतुर्गुणं जलं ग्राह्यमानं द्रवद्वैगुण्यात्तु षष्टिशरावपरिमितं यद्यपि, तथापि वक्ष्यमाणतन्त्रान्तरीयवाक्यैकतानुरोधात् आढके पलविवक्षां विधाय पलोल्लेखगतत्वेन द्वैगुण्यं न विधेयम्, तथा क्वचित् पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकतानुरोधात् पलोल्लेखगते द्रव्येऽपि कुडवादिविवक्षायां द्वैगुण्यं भवति । तथापि चरके चतुर्थे चिकित्सिते मधुकाष्टपलं द्राक्षाप्रस्थक्वाथ इत्यादिना यः प्रयोग उक्तः स जतूकर्णे द्राक्षाप्रस्थः मधुकार्द्धप्रस्थ इत्यादि ग्रन्थेन पठितः, तेन जतूकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव जलं भवति, तत्प्रत्यर्थाच्चरकेऽपि मधुकाष्टपलोल्लेखविधानेऽपि क्वाथ्ये कुडववद्विवक्षया कृतद्वैगुण्यमेव जलं दीयते । तद्वदत्रापि आढके

वं हयानाञ्च मतङ्गजं बलं स्वरं मयूरस्य हुताशदीप्तिम्।
ोवल्लभत्वं लभते प्रजाञ्च नीरोगमब्दद्विशतानि चायुः॥
चान्नपाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च।
योगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम्॥
भल्लातकशुद्धिरिह प्रागिष्टचूर्णं गुण्डनात्।
घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते॥ ६१॥

इति अमृतभल्लातकी।

इति रसायनाधिकारः।

विवक्षां विधाय द्वैगुण्यं न कार्य्यम्। तदेव तन्त्रान्तरीयवाक्यं यथा—"भल्ला-
ाढकं चुसं जलाढकद्वये शृतम्। पादशेषे रसे तस्मिन् घृतप्रस्थसमन्विते।
ाढकं ततो दत्त्वा सितायाः प्रस्थमेव च। तावच्च साधयेद्धीमान् यावल्लेहत्वमा-
म। अर्शसां नाशनं श्रेष्ठं दीपनं कुष्ठनाशनम्। अम्लपित्तापहं प्रोक्तं वाजी-
णमुत्तमम्। अग्निवृद्धिकरञ्चैव बलकृत् पुष्टिवर्द्धनम्" इति। केचित्तु क्षीरा-
ततो दत्त्वेत्यत्र क्षीरप्रस्थमिति पठित्वा अस्य प्रयोगस्य योगान्तरत्वं मन्यमानाः
भल्लातकेत्यादिचक्रसंगृहीतयोगे जलस्य द्वैगुण्यमिच्छन्ति, किन्तु परमेश्वर-
तादिसंग्रहे क्षीराढकमित्येव पाठो दृश्यते एकवाक्यता च तदैव सङ्गच्छते।
दाव्यवहारश्चाद्वैगुण्येन दृश्यते तेनायमेव पाठः साधीयान्। हारीतमतन्तु
न्तरमेवेति न्याय्यम्, यतस्तत्र परिमाणे इतिकर्त्तव्यतायाञ्च महदेवान्तरम्।
मिति घृतप्रस्थम्। चतुर्भागावशिष्टं क्वाथमपेक्ष्य घृतस्यार्द्धांशताम्:, उक्तेन
न घृतस्यार्द्धांशं पचेदिति योज्यम्। क्षीरस्य चातुर्गुण्यं घृतापेक्षया अतएव
न घृताच्चतुर्गुणं क्षीरमित्यादि। क्षीरचतुर्गुणेनेति चतुर्गुणेन क्षीरेणेत्यर्थः।
निपात प्रत्यनियमात्। ततश्च युक्तेनेति न पाठः, सम्बन्धाभावात्। ततश्च घृतं
च पूत्वा च शर्कराप्रक्षेप इत्यर्थः। किन्तु लेहोऽपि पच्यते, तदा क्वाथशर्करा-
मेकीकृत्य पक्तव्यम्॥ ६१॥

इत्यमृतभल्लातकी।

इति रसायनाधिकारः।

## अथ वृष्याधिकारः।

पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा।
साधितौ भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम्॥ १॥
वस्ताण्डसिद्धे पयसि भावितानसकृत् तिलान्।
यः खादेत् स नरो गच्छेत् स्त्रीणां शतमपूर्ववत्॥ २॥
चूर्णं विदार्य्याः सुकृतं स्वरसेनेव भावितम्।
सर्पिः क्षौद्रयुतं लीढ्वा शतं गच्छेद्वराङ्गनाः॥

---

सुस्थस्यौजस्करसामान्याद्रसायनानन्तरं वाजीकरणमुच्यते वाजीकरणशब्दार्थ चरकेणोक्तो यथा—"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः। व्रजेच्चाभ्यधि येन वाजीकरणमेव तत्" इति। व्रजेच्चाभ्यधिकमिति पुनः पुनर्गच्छेत्। व्यज्य इति पाठे नारीषु पुंस्त्वं येन व्यज्यत इत्यर्थः। गयदासडिम्तु पूर्वोदगादतात् अन्ये तु वाजः शुक्रं सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणमित्याहुः। किंवा वाजो मैथुनम्, उक्तं हि हारीते—"वाजी नाम "प्रकाशम् तच्च मैथुनसञ्ज्ञितम्। वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते॥" तच्च [illegible] यदुक्तं चरके—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम्। स्रुतिवृद्धि किञ्चित् त्रिविधं वृष्यमुच्यते॥ यथा—कामिनीस्पर्शादिकं स्रुतिकरम्, क्षीरादि वृद्धिकरम्, माषादि स्रुतिवृद्धिकरमिति। वृष्ययोगमाह पिप्पलीत्यादि।—अस्य तत्र पिप्पलीलवणयोः सरवात्वादल्पमानता। वस्ताण्डौ छागाण्डकोषौ क्षीरसर्पिषा क्षीरोत्थसर्पिषा, न तु क्षीरञ्च घृतञ्चेत्येकवद्भावः, क्षीरपक्वमत्स्य संयोगविरुद्धत्वात्। प्रमदाशतमिति वनिताबहुत्वोपलक्षणम्। भक्षणप्रकारो यथा छागाण्डद्वय जलं हत्वा उत्स्विद्य क्षीरोत्थघृतेन भर्जयित्वा अनुरूपमेव पिप्पली चूर्णाभ्यां संस्कार्य्य उपयोज्यम्॥ १॥

वस्ताण्डसिद्ध इत्यादि।—क्षीरपरिभाषया वस्ताण्डेन क्षीरसाधनम्, तेन भावितान्। यद्यपि उक्ताधिकमांसैत्यादिना वस्तमांसस्य क्षीरेण सह विरोधी दर्शितः तथापि तत्सामान्यवचनम् इदं पुनरपवादरूपं विशिष्टवस्ताण्डविषयतया न विरोधमावहति। असकृदिति सप्तधा पूर्ववदिति अकृतपूर्वस्त्रीसङ्गमवत्॥ २॥

चूर्णमित्यादि।—सुगमं तस्य। स्वरसोऽपि विदार्य्या एव। एवमित्यादि

एवमामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते॥ ३॥
विदारीकन्दकल्कन्तु घृतेन पयसा नरः।
उडुम्बरसमं खादन् वृद्धोऽपि तरुणायते॥ ४॥
स्वयं गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत्॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्॥ ५॥
गोक्षुरकः क्षुरकः शतमूलीवानरिनागबलातिबला च।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति।
घृतभृष्टो दुग्धमाषपायसो वृष्य उत्तमः॥ ६॥

---

...स्वरसभावितस्याप्युक्तत्वात् एवमित्यतिदेशस्य वेशद्यं वैयर्थ्यं स्यात, तेन विदारी...स्वरस चौद्रघृताभ्यामामलकस्य तत्स्वरसभावितस्य प्रयोग इति कश्चित्, तेन ...मलकचूर्णस्य द्विधा प्रयोगः; एकः घृतक्षौद्राभ्याम्, अन्यश्च शर्करामधुघृतपयो-...पाश्चेति। अन्ये तु एवमित्यतिदेशः सुकृतत्वविधानार्थमित्याहुः॥ ३॥

विदारीत्यादि।—सुश्रुतस्य। अत्र घृतेनेत्यत्र शतेनेति पाठे केवलं जलशृते ...र्थं॥ ४॥

स्वयं गुप्तेत्यादि।—सुश्रुतस्य। उच्चटेत्याद्यपि तस्यैव। सुखार्थिनेत्यत्र बलार्थि-...ति सुश्रुते पठ्यते। एवमित्यनेन पयसेति बुध्यते। कर्षमित्यादि।—चरकस्य। ...क यष्टिमधु। नित्यवेग इति नित्ययुक्तवेगाभिभूतः॥ ५॥

गोक्षुरक इत्यादौ—क्षुरकः कोकिलाक्षः, वानरी शूकशिम्बी। शतामूली च ...नरी चेति समाहारद्वन्द्वः, अत एव क्लीबबहुवचनान्तः पाठ एव साधुः। एषां ...कगोक्षुरवानरीणां फलबीजं ग्राह्यम्। यदुक्तममृतवल्ल्यां—"गोकण्टक्षुरके-

दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्जितम्।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान्॥
युक्त्या युक्तंससूक्ष्मैलं नवे कुम्भे शुचौ पटे।
मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम्॥
तदद्यादुपरिष्टाच्च रसालं मात्रया पिबेत्।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते॥ ७॥
आर्द्राणि मत्स्यमांसानि शफरीश्चाज्यभर्जिताम्।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्॥ ८॥

नारसिंहचूर्णम्—

शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च।

---

पिकच्छुफलवरीकुशीबलाचूर्णभृतेन। पयसा रात्रिसमये" इत्यादि।—अत्र कुर्ण्डी गोरचतण्डुला। घृतेत्यादौ माषपायसो माषविदलैर्दुग्धेन कृतः पायसः, स च मन्दो घृतेन सन्तलितः॥ ६॥

दध्न इत्यादि।—चरकस्य। दोषवर्जितमिति मलिनत्वादिदोषवर्जितम् युक्त्या युक्तमिति यथातिमाधुर्य्यं न स्यात्, कटुत्वञ्चाधिकं न भवति, तथा शर्करामरिचादियोज्यमित्यर्थः। मार्जितमिति पाठे पटे घृष्टं तमिति षष्टिकौदनम् निश्चलैस्तु मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनमिति पठ्यते। तस्मिन् मार्जिते पूते रस इत्यर्थात्, ततोऽत्र शीते शीतवीर्य्ये षष्टिकभक्तं प्रक्षिपेत्, ततोऽद्यादिति। उपरिष्टादिति भुक्त्वेत्यर्थः। रसालालक्षणं यथा—"सचतुर्जातकाजाजीसगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि" इति। अन्यत्र यथा—"अर्द्धाढकं सुचिरपर्य्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य। सर्पिःपलं मधुपलं मरिचार्द्धकर्षं शुण्ठ्यास्तथार्द्धपलमर्द्धपलं चतुर्णाम्। शुक्ले पटे ललनया मृदुपाणिघृष्टा कर्पूरगन्धसुरभिर्नवभाण्डसंस्था। एषा वृकोदरकृता सुरसा रसाला या स्वादिता भगवता मधुसूदनेन"॥ ७॥

आर्द्राणीत्यादि।—चरकस्य। आर्द्राणि, सद्यस्कानीत्यर्थः। मत्स्योऽत्र प्रधानकल्पतया रोहितः॥ ८॥

वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः॥
भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु।
तिलानां शोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम्॥
त्रूषणस्य पलान्यष्टौ शर्करायाश्च सप्ततिः।
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम्॥
शतावरीसमं देयं विदारीकन्दजं रजः।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत्॥
पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम्।
मासेकमुपयोगेन जरां हन्ति रुजामपि॥
वलीपलितखालित्यमेहपाण्ड्वाद्यपीनसान्।
हन्त्यष्टादशकुष्ठानि तथाष्टावुदराणि च॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम्।
क्षयञ्चैव महाश्वासान् पञ्च कासान् सुदारुणान्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्॥
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा॥
[illegible] काञ्चनाभो मृगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगतः।
[illegible]णां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्गः॥

---

शतावरीत्यादि।—चन्द्राटस्य। वाराही इति वराहकन्दस्य। तल्लक्षणं यथा—"ताम्बूलसदृशैः पत्रैर्यष्टिभिः समलङ्कृतम्। सर्जार्जुननिभैः पुष्पैः शोभनं च [illegible]गन्धिभिः। वराहचर्मविवर्णेन पिच्छलेन सुवर्चसा। कन्देन कटुतिक्तेन नैर्[illegible] [illegible]सुगन्धिना। जायते सा गिरौ रम्ये विन्ध्ये श्रीपर्वते तथा॥" वृन्दे तु—"वराहमुद्धवत् कन्दो वाराहीकन्दसञ्ज्ञितः। भिषजा तदलाभे च चर्मकारालुकोत" इत्युक्तम्। किन्तु वाराहीकन्दापेक्षया चर्मकारालुकस्यातिहीनगुणत्वेन [illegible]स्य तत्प्रतिनिधित्वं युक्तम्। गुडूच्याः पञ्चविंशतिरित्यपपाठः। तन्त्रान्तरं—

पुत्रान् सञ्जनयेद्वीरान् नरसिंहनिभांस्तथा ।
नारसिंहमिदं चूर्णं सर्व्वरोगहरं नृणाम् ॥
वाराहीकन्दसञ्ज्ञस्तु चर्मकारालुको मतः ।
पश्चिमे वृष्टिशब्दाख्यो वराहलोमवानिव ॥ ८ ॥

गोधूमाद्यं घृतम्—

गोधूमाच्च पलशतं निःक्काथ्य सलिलाढ़के ।
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम् ।
काकोली क्षीरकाकोली जीवन्ती सशतावरी ॥
अश्वगन्धा सखर्जूरं मधुकं त्र्यूषणं सिता ।
भल्लातकमात्मगुप्ता समभागानि कारयेत् ॥
घृतप्रस्थं पचेदेकं क्षीरं दत्त्वा चतुर्गुणम् ।
मृदग्निना च संसिद्धे द्रव्याण्येतानि निक्षिपेत् ॥
त्वगेलापिप्पलीधान्यकर्पूरं नागकेशरम् ।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥

---

"भल्लातक प्रस्थयुग्मं सत समपलीन गुडूच्याश्च" इत्युक्तत्वात, यत प्रस्थयुगल सप्तपलेन सत पञ्चविंशतिपलानि भवन्ति । त्र्यूषणस्य मिलित्वा पलान्यष्टौ । विदा भूमिकुष्माण्ड । पलार्द्धमिति पूर्वयुगाभिप्रायेण, इदानीमष्टमाषकेण व्यवहार्य्य इति आढमारुत ,' यथा भीमो भीमसेनः । वाराहीकन्दस्य दुर्लभत चर्मकारालुकमेन गौडीयैर्वाराहीकन्दसञ्ज्ञया गृह्यते । वस्तुतस्तु वराहकन्दकाश कारालुक द्रव्यान्तरं तल्लक्षणाभावात ॥ ८ ॥

गोधूमादित्यादि ।—गोधूमो धवलसारो ग्राह्य उत्कृष्टत्वात् । सलिलाढ पादावशेष इति योज्यम्, अतो गोधूमशतपल जलद्रोणो देय इति चक्रः । वकुल नि क्काथ्येत्यनेनैव सम्बध्यते, तथैव निर्दिष्टत्वात् पादशेषस प्रस्थ इति व्याचष्टे किन्तु चक्रपाद एव प्रचरति । मुञ्जातकफलं सौत्तरपथिकम् । तदप्राप्तौ ताल मस्तकम् । हारावल्यान्तु तालमस्तकमित्यवाक्ति । परूषकं फलं ; खर्जूरं पिह

दद्यं चूदखण्डेनालोड्य विधिवद्विनियोजयेत्।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा॥
केवलस्य पिबेदस्य पलमात्रां प्रमाणत:।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत्॥
बल्यं परं वातहरं शुक्रसञ्जननं परम्।
मूत्रकृच्छ्रप्रशमनं वृद्धानाञ्चापि शस्यते॥
पलद्वयं तदश्नीयाद्दशरात्रमतन्द्रित:।
स्त्रीणां शतञ्च भजते पीत्वा चानुपिबेत् पय:॥
अग्निभ्यां निर्मितञ्चैतद्गोधूमाद्यं रसायनम्।
जलद्रोणे तु गोधूमक्वाथे तच्छेषमाढ़कम्॥
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम्।
कल्कद्रव्यसमं मानं त्वगादे: साहचर्य्यत:॥ १० ॥

शतावरीघृतम्—

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते॥ ११ ॥

गुड़कुष्माण्डकम्—

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत्॥

---

खर्जूर; मधूकं यष्टिमधु; अन्ये तु मधूकमिति पठित्वा मधूकस्य फलमाहु:। मिता शर्करा। आत्मगुप्ताया मूलमिति निश्चल:, फलमित्यन्ये। संसिद्ध इत्यनन्तरं पूते चेति शेष:। त्वगादीनाञ्च मानं कल्कतुल्यं वक्ष्यति। तत शीतीभूते शर्करामधुनोर्मिलित्वाऽष्टौ पलानि। पूर्वं पलमात्रां पिबेदिति यदुक्तं तत् प्रथमत:, अनन्तरं सात्म्यभावे सति पलद्वयं; न पुनरितोऽधिकमिति॥ १० ॥

घृतमित्यादि।—चरकस्य। त्रिंशदध्याये "प्रक्षेप: पादिक: क्वाथ्यात् स चेह कल्कसमो मत:" इत्युक्ते: शर्करापिप्पलीक्षौद्राणां कल्कसमत्वं ज्ञेयम्॥ ११ ॥

कुष्माण्डकादित्यादि।—घृततैलयोर्मिलित्वा प्रस्थम्। अत्र खण्डकुष्माण्डवत्

त्वक्‌यवधान्यकव्योष-जीरकैलाद्वयानलम् ।
ग्रन्थिकं चव्यमातङ्गपिप्पलीविश्वभेषजम् ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् ।
चूर्णीकृतं पलांशञ्च गुड़स्य च तुलां पचेत् ॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत् ।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् ।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥
क्षयेण च गृहीतानां परमेतद्भिषग्जितम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ॥
गुडकुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकुष्माण्डवत् पात्रं स्विन्नकुष्माण्डकद्रवः ॥ १२ ॥
यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ १३ ॥
भल्लातकबृहतीफलदाड़िमफलवल्कलसाधितं कुरुते ।
लिङ्गं मर्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥

---

त्वग्बीजादिवर्जितसुस्विन्नगालितपिण्डकुष्माण्डभर्जनं कार्य्यं यावन्मधुनिभं पक्वं भवति। ततो द्रवार्थमेव गालितकुष्माण्डद्रवमेव प्रस्थचतुष्टयं गृहीत्वा तत्र द्रवे पुराणगुडपलशतमेकीकृत्य पूत्वा कुष्माण्डं पचेत्। ततोऽवतारिते क्षीणे त्वक्‌यवादिचूर्णप्रक्षेपः। जीरकैलाद्वयेति जीरकद्वयमेलाद्वयञ्चेति। मातङ्गपिप्पली गजपिप्पली। प्रलम्बं तालाङ्कुरं, तालखण्ड इत्यन्ये; आद्य एव पक्षो युक्तः इत्थं स्यात्। मन्दाग्नीनामल्पमात्रयेति शेषः। प्रमदासु प्रसक्तानां वाजीकरणमित्यन्वयः। तथा ये क्षीणरेतसस्तेषामुत्तमं तद्भिषग्जितमिति योज्यम्। पात्रमित्याढकं खण्डकुष्माण्डकञ्च रक्तपित्तोक्तं गुडकुष्माण्डके द्रव इति पाठे द्रवः स्विन्नकुष्माण्डस्य ग्राह्यः ॥ १२ ॥

अनुक्तवाजीकरणसंग्रहार्थमाह यत्किञ्चिदित्यादि ॥ १३ ॥

कनकरसमर्दनवर्त्तितहयगन्धामूलमिश्रपथ्येषितम्।
माहिषमिह नवनीतं शतवीजे तच्च फलमध्ये ॥
गोमयगाढ़ोद्वर्त्तितं पूर्वं पश्चादनेन संलिप्तम्।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम् ॥ १४ ॥

अश्वगन्धातैलम्—

अश्वगन्धावरीकुष्ठं मांसीसिंहीफलान्वितम्।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत्।
स्तनलिङ्गकर्णपालिवर्द्धनं म्रक्षणादिदम् ॥ १५ ॥
मेदसा चौद्रयुक्तेन वराहस्य प्रलेपितम्।
सम्यक् स्निग्धं रतान्तेऽपि स्तब्धतां न विमुञ्चति ॥ १६ ॥
वीजं वृहत्करञ्जस्य कृतमन्त: सपारदम्।
हेम्ना सुवेष्टितं न्यस्तं वदने वीजस्तम्भनम् ॥ १७ ॥
आजन्तुष्टीचीरं गव्यघृतं चरणयुगलेपेन।
स्तम्भयति पुरुषवीजं योगोऽयं यामिनीं सकलाम् ॥ १८ ॥
भल्लातकवृहतीफलनलिनोदलसिन्धुजन्मजलशूकैः।
माहिषनवनीतेन करम्बितैः सप्तदिनमुषितैः ॥
मूलेन हयगन्धाया महिषीमलमथितं पूर्वमथ लिप्तम्।

---

इदानीं लिङ्गमूलत्वादपत्यस्य तद्वृद्धियोगानाह भल्लातकेत्यादि।—अय योगो भल्लातकासहाय न देय.। जलस्यात्र चतुर्गुणं बोध्यम्। कनकेत्यादि।—कनक धुस्तूर, तस्य पत्रस्वरस.। तत्फलमिति धुस्तूरमेव। गोमयेन सद्यस्केन लिङ्ग गाढमुद्वर्त्तनं कृत्वा ततोऽनेन लेप इति। कठिनाङ्गना इति कठिनाङ्गना प्रायेण द्राविडलाटमालवदेशजा:। तास्तु प्रायशो बहुतरसुरतैर्नैव तुष्यन्तीति कठिनत्वम् ॥ १४ ॥

अश्वगन्धातैले फल वृहतीफलम्। कर्णपालि: कर्णनालिका ॥ १५—१८ ॥

भल्लातकेत्यादौ। करम्बिता: मिश्रितास्तै:। अनन्तर हयगन्धाया मूलं विवर

भवति लघु क्षततरामभग्नलिङ्गं ध्रुवं पुंसाम् ॥ १९ ॥
नीलोत्पलमितपङ्कजकेशरमधुकशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढ़लिङ्गो भवति नातिविवरेण ॥ २० ॥
सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रतेर्वीजस्तम्भाद्दृढं लिङ्गम् ॥ २१ ॥
सप्ताहं छागसलिलसंस्थं करभवारुणीमूलम् ।
गाढोद्वर्त्तनविधिना लिङ्गस्तम्भं रते कुरुते ॥ २२ ॥
गैरिकोन्नतशृङ्गत्वभवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भजन् ललनां नैकाण्डो भवति हर्षार्त्तः ॥ २३ ॥
समतिलगोक्षुरचूर्णं छागोक्षीरेण साधितं समधु ।
भुक्तं क्षपयति षाण्ड्यं यज्जनितं कुप्रयोगेण ॥ २४ ॥

---

कृत्वा सप्तदिनमुषितैर्भल्लातकादिभिर्लिप्तं लिङ्गमित्यन्वयः । कीदृशं लिङ्गम् — महिषीमलेन मथितं पूर्वं मर्दितं पूर्वम् । एतेनादौ महिषीमलेन लिङ्गं मर्दयित्वा पश्चात् भल्लातकादिभिर्लिप्तं लिङ्गं लघुक्षततरादभग्नलिङ्गं भवतीति ॥ १९ ॥

इदानीं वाजीकरणप्रसङ्गात् वीर्य्यस्तम्भनमाह नीलोत्पलमित्यादि ।—नीलोत्पलश्वेतपद्मयोः केशरम् । एभिः सर्वैः पिष्टैर्नाभिं लिप्त्वा चिरकालं कामुकः रमत इत्यर्थः, नातिविवरेण अतिक्रान्तच्छिद्रेण ॥ २० ॥

सिद्धमित्यादौ ।—भूमिलता किञ्चुलुकः, तया मिश्रितं कुसुम्भवीजस्य तैलं सिद्धमिति पक्वमित्यर्थः ॥ २१ ॥

सप्ताहमित्यादि ।—छागभवसलिलं छागमूत्रम् ; करभवारुणी उष्ट्रकण्टा गङ्गापालङ्कीति केचित् ॥ २२ ॥

इदानीं कुप्रयोगकृतध्वजभङ्गचिकित्सामाह गैरिकेत्यादि ।—यस्याः धेनोः शृङ्गमुन्नतं भवति तत्त्वकचूर्णेन धूपितं वस्त्रं परिधायेत्यर्थः । यः पुरुषो नियमेन एकस्त्रीगामी स्त्र्यन्तरगमने तु ध्वजोत्थानं न भवति स एकाण्ड उच्यते ॥ २३ ॥

समेत्यादि ।—सम निस्तुषतिलगोक्षुरवीजचूर्णं छागदुग्धैरुत्कारिकां साधयित्वा शीते मधु दत्त्वा भक्षयेत् । षाण्ड्यं लिङ्गानुत्थानम् ॥ २४ ॥

यो गजवराङ्गबद्धं मथितेन खालित्यं हरति।
उन्मुखगोशृङ्गोद्भवलेपो यागो ध्वजभङ्गहरः॥ २५॥
कुष्ठैलवालुकैलामुस्तकधन्याकमधुककृतः कवलः।
अपहरति पूतिगन्धं रसोनमदिरादिजं मन्थम्।
क्षौद्रेण बीजपुरत्वग्लीढाधोवातगन्धनुत्॥ २६॥
इति वृष्याधिकारः॥

---

## अथ स्नेहाधिकारः।

सर्पिस्तैलं वसा मज्जा स्नेहेषु प्रवरं मतम्।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात्॥ १॥

---

कुपर्योगेण लिङ्गानुत्थाने यत तच्चिकित्सामाह योगजित्यादि।—मथितेन घोलेन। उन्मुखेत्यादि।—ऊर्द्ध्वं मुखं यद्गोः शृङ्गम्, न तु बलीवर्दस्य। ऊर्द्ध्व मुखस्त्रीगवीशृङ्गेण लेपनं लिङ्गस्य॥ २५॥

कुष्ठेत्यादौ।—मधुकं यष्टिमधु। यदुक्तं लोकव्यवहाराख्यकामशास्त्रे—"कुष्ठैलवालुकैलामुस्तकधन्याकयष्टिमधुकवलः। हरति मुखपूतिगन्धं रसोनमदिरादिगन्धं च।" दम्पत्योरन्यतरस्य मुखपूतिगन्धेन भोगभङ्गप्रसङ्गः स्यादतस्तद्गन्धापनयनद्वारस्य योगस्य वृष्याङ्गत्वं ज्ञेयम्। एवं वक्ष्यमाणयोगेऽपि बोध्यम्। क्षौद्रेणेत्यादौ।—बीजपूरो मोंखर इति ख्यातः। अयश्च लेहः शयनसमये बोध्यः। अधोवातः गुदवायुः। बीजपूरफलत्वक्तु अधोवातनिरोधं जनयति। यदुक्तं तत्रैव—"यो लीढे शयनकाले मधुमिश्रं बीजपूरदलचूर्णम्। स व्रीडाकरवातप्रसरावरोधात् सुखं स्वपिति" इति॥ २६॥

इति वृष्याधिकारः।

---

रसायनवाजीकरणे पञ्चकर्मविशुद्धौ कर्त्तव्ये अतः पञ्चकर्माणि वाच्यानि। पञ्चकर्मणाञ्च स्वेदपूर्वकत्वात्, पुनः स्वेदस्य स्नेहपूर्वकत्वात् प्रथमं स्नेहविधिमाह सर्पिरित्यादि—वाग्भटस्य। एतत् सर्पिरादिचतुष्टयं स्नेहेषु स्नेहकारकद्रव्येषु

केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
तथा धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम्॥ २॥
ग्रन्थिनाडीक्रिमिश्लेष्म-मेदोमारुतरोगिषु।
तैलं लाघवदार्ढ्यार्थं क्रूरकोष्ठेषु देहिषु॥ ३॥
वातातपाध्वभारस्त्री-व्यायामक्षीणधातुषु॥
रूक्षक्लेशसहात्यग्नि-वातावृतपथेषु च।

दधिक्षीरादिषु मध्ये प्रवरं श्रेष्ठं स्नेहनप्रकर्षादित्यर्थः। तत्रापीति तेष्वपि सर्पिरादिषु मध्ये सर्पिरुत्तमं श्रेष्ठम्। संस्कारो गुणान्तराधानमिति यस्यानुवर्त्तनमनुविधानम्। तैलादयो हि द्रव्यान्तरसंस्कृताः सन्तः स्वगुणं विहायैव संस्कारकद्रव्यगुणान् वहन्ति। सर्पिस्तु स्वगुणान् संस्कारद्रव्यगुणांश्च वहति अतएवोक्तं — "नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्" इति। अत्र संस्कारद्रव्यक्षीरक्वाथादिगुणाधानेऽपि सर्पिर्न स्वगुणान् स्नेहशैत्यादीन् जहाति, किन्तु स्वगुणांस्तद्गुणांश्च वहति। यतोऽनुशब्दं न पश्चाद्वाचिना स्वगुणवर्त्तनस्य पश्चात् संस्कारकगुणवर्त्तनमुच्यते। "स्नेहाद्वातं शमयति पित्तं माधुर्य्यशैत्यतः। घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्॥" न च वाच्यं रूक्षोष्णचित्रकादिसंस्कारात् रूक्षोष्णं सर्पिर्भवति ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथमत्र तिष्ठत इति, यतः सर्पिःसम्बन्धिचित्रकावयवानुगतं हि रूक्षोष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः। इदमेव च सर्पिषः संस्कारानुवर्त्तनं यत् स्वगुणविरुद्धस्यापि गुणानुपघातेन धारणमित्यादि व्याख्यान्तरमस्मदीयचरकतत्त्वप्रदीपिकायामेवानुसन्धेयम्। केचित्तु संस्कारः स्वीयगुणः शीतत्वादिः, अनुशब्दः सहार्थे, तेन विरुद्धवीर्य्याणामौषधानां संयोगेऽपि संस्कारोऽनुवर्त्तते; तैलादीनान्तु दाहज्वरे चन्दनादितैलोपदेशात् तैलस्योष्णत्वं शीतवीर्य्यचन्दनादिद्रव्ययोगान्निवर्त्तते नैतद्रूपं घृतस्येत्याहुः॥ १॥

घृतविषयमाह केवलमित्यादि।—केवलं द्रव्यान्तरसंयोगरहितम्॥ २॥

तैलविषयमाह ग्रन्थीत्यादि।—वाग्भटस्य॥ ३॥

वसामज्जाविषयमाह वातातपेत्यादि।—वाग्भटस्य। शेषाविति छेदः। वाता-

शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ॥
तथा दग्धाहतभ्रष्ट-योनिकर्णशिरोरुजि ॥ ४ ॥
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ।
साधारणर्त्तौ स्नेहं पिबेत् कार्य्यवशादिह ॥ ५ ॥
वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।

त्यादि वाग्भटस्य शेषादिति छेदः । वातादिभिः क्षीणा धातवो येषां ते तथा। प्रसङ्गः क्रमश्च, क्रमसङ्ग इत्यत्र क्रमशश्चेति पाठो लेखकदोषात्। ाताहतपर्येष्विति वाताहतस्रोतःसु। शेषाविति वसामज्जानौ। वसायास्त्वन्यदपि षयान्तरमाह वसा त्वित्यादि। रुजाशब्दः सन्ध्यादिभिः सम्बध्यते। आहतः ाडितः। भ्रष्टयोनिः स्वस्थानाच्च प्रच्युतयोनिः ॥ ४ ॥

इदानीं स्नेहानामुपयोगकालमाह तैलमित्यादि।—वाग्भटस्य। साधारण-र्त्तौ स्नेहं पिबेदित्युत्सर्गः। साधारणश्च प्रावृट्शरद्वसन्ताख्यं शीतघर्मविकृत्यभा-ावयम्। यदाह दृढबलः—"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः। तद-र प्रावृडाद्या ज्ञेयाः साधारणास्त्रयः। प्रावृट्शुक्रनभौ ज्ञेयौ शरदूर्ज्जसहौ पुनः। पस्यश्च मधुश्चैव वसन्तः शोधनं प्रति" इति। अत्र साधारणा इत्यत्युष्णशीत-ा इत्यर्थः। शुक्रनभाविन्याषाढश्रावणौ प्रावृडित्युक्तम्, अतएव निर्देशात् शुक्र-ब्द आषाढेवचनोऽपि ज्ञेयः। किंवा शुचिनभाविति पाठः। ऊर्ज्जसहौ कार्त्तिक-ार्गशीर्षौ, तपस्यः फाल्गुनः, मधुश्चैत्र इति। वर्षान्त इति शरदि। अन्यौ वसा-ज्जानौ। माधव इति वैशाखे। यद्यपि वैशाखो न साधारण-ऋतुमध्ये पठितः न्तु फाल्गुनचैत्ररूपो वसन्त एव, तथापि प्रभूतकफतया स्नेहपानविषयत्वं नाप्त ि, वैशाखस्तु बलक्षयधातुक्षयकारक इति। अत बल्यो धातुकारकः वसा-ज्जानौ युक्त एवेत्यर्थः। अन्याविव्यपि पाठः। कुतः पुनरसमय एव ह पिबेदित्यत आह कार्य्यवशात् तु तदिति संशोधनरूपप्रयोजनवशात्। संशोधनं ाधारण-ऋतौ उत्सर्गतो विधीयते; तेन तदङ्गविशेषं स्नेहपानमपि तत्रै-र्थं ॥ ५ ॥

इदानीमात्ययिकात्यल्पशीतकालयशीतेऽपि यथा स्नेहपानं विधेयं तथा दोष-ि च यथा स्नेहपानं तदाह वातपित्ताधिकः। इत्यादि। वातश

श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥ ६ ॥
स्नेह्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।
वृद्धा बाला.बलकृशा रूक्षक्षीणास्ररेतसः ॥
वातार्त्तस्यन्दतिमिर-दारुणप्रतिबोधिनः ।
स्नेह्या न त्वतिमन्दाग्नि-तीक्ष्णाग्निस्थूलदुर्बलाः ॥
ऊरुस्तम्भातिसाराम-गलरोगगरोदरैः ।
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीड़िताः ।
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ७ ॥

---

पित्तञ्च वातपित्तं तदधिको वातपित्ताधिकः। रात्राविति सायम्; उष्णे ग्रीष्मे; श्लेष्माधिकग्रहणमित्यत्र शीतविकारवत्सामञ्जस्यहीनपुरुषोपलक्षणं, तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते। अतएव सुश्रुतेऽप्युक्तम्—"वातपित्ताधिको रात्रौ वातश्लेष्मादधिको दिवा" इति। केवलवाताधिकस्य तथा पित्ताधिकस्य तथा श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव। पानकालश्च वक्ष्यमाणः। वक्ष्यति हि—पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षित इत्यादि।—व्याख्यान्तरञ्च अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयम्। अमलभास्कर इति दुर्दिनव्युदासार्थं मध्याह्नग्रहणार्थं वा ॥ ६ ॥

इदानीं स्नेहार्हानाह स्नेह्येत्यादि।—वाग्भटस्य। स्नेह्या इति छेदः। स्वेद्या इति स्वेदार्हाः। एवं संशोध्या इति वमनादिसंशोधनयोग्याः; मद्या इति मद्यादि आसक्ताः; चिन्तकाश्चिन्ताबहुलाः। अबला इत्यकृशोऽपि यो बलरहितः। कृश इति मांसोपचयहीनः। क्षीणास्ररेतसः; क्षीणे रक्तशुक्रे येषां ते क्षीणास्ररेतसः, वातार्त्ता वातरोगिणः; स्यन्दोऽभिष्यन्दः स च पुराणोऽभिप्रेतः। दारुणो दुःसाध्यः, प्रतिबोधी जागरणम् अत्यन्तजागरणशील इत्यर्थः। अन्ये तु क्रकचोन्मीलनयुक्त इत्यर्थः। अस्नेह्यानाह न त्वित्यादि।—अतिमन्दो, दुर्बलान्तेषु प्रत्येकं योज्यः। अतएवाल्पबलाः स्नेह्या न त्वतिदुर्बला इति न पूर्वापरविरोधः। अपप्रसूता इत्यपरिणतगर्भस्रावयुक्ता इत्यर्थः, वाग्भटे त्वप-प्रसूतेत्यत्र च पठन्ति व्याचष्टे च सुतगर्भेति; सुश्रुतेन चकारेण च प्रसूता प्रोक्ताः। युक्त इति तत्कालप्रयुक्ते ॥ ७ ॥

स्नेहसात्म्यः क्लेशसहो दृढ़काले च शीतले ।
अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम् ॥ ८ ॥
पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः ।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ।
अहोरात्रमहः कृत्स्नं दिनार्द्धञ्च प्रतीक्षते ॥
उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ।
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ॥
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ ९ ॥

---

अच्छस्नेहपानविषयमाह स्नेहेत्यादि ।—सुश्रुतस्य । दृढ इति बलवान् ; काले च शीतल इति यद्यपि पूर्वोक्तसाधारणकाल एव स्नेहविषयस्तथाप्यात्ययिकविकारवशात् यदि शीतले काले स्नेहोपयोगः कर्त्तव्यः स्यात्, तदाच्छमेव पिबेदित्यर्थः । अन्ये तु दृढ इति पदं दूरीकृत्य काले चानतिशीतल इति पठन्ति । अच्छ इत्यादिनास्य सम्बन्धः ॥ ८ ॥

सम्प्रति संशमनस्नेहस्य संशोधनार्थस्नेहस्य च पानकालमाह पिबेदित्यादि ।—शमनमिति न शोधयति यद्दोषान् तथा संशोधनमिति संशोधयति यद्दोषानित्यान्वर्थलक्षणम् । अन्नकाले द्विप्रहरादिरूपे तत्र बुभुक्षा कदाचिन्न स्यादिति तदर्थं प्रकाङ्क्षित इति विशेषणम् । शुद्ध्यर्थन्तु स्नेहं विन्दुघृतादिकम् ; नैशे निशान्तरकृते चाहारे जीर्णे सति प्रातरेव पिबेदित्यर्थः । अयमत्राभिसन्धिः, संशमनार्थः स्नेहो यदि जरणार्थं प्रातरेव क्रियते तदा कोष्ठोपलेपकदोषस्याक्षयात् तेन स्नेहेन सह स्नेह उत्क्लेशं कुर्य्यात्, न तु दोषसंशमनम्, अतएव संशमनोऽन्नकालेऽभिहितः । संशोधनार्थस्तु स्नेहो दोषोत्क्लेशकर एवापेक्षित इति दोषक्षेशावस्थायामेव प्रातःकाले तत्पानं युक्तमिति । एतच्च कालकथनमुत्सर्गतः, तेन वातपित्ताधिको रात्राविप्यपवादविषयव्यतिरिक्त एवास्य विषयो ज्ञेयः । स्नेहमात्रायास्त्रैविध्यमाह—अहोरात्रमित्यष्टप्रहरोपलक्षणम्, एवमहः कृत्स्नमिति तत्प्रहरचतुष्टयं दिनार्द्धमिति तत् प्रहरद्वयमुपलक्षयति ; अतएवोक्तं वाग्भटे "द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्य्यन्ति याः क्रमात्" इत्यादि । तेन प्रहरादतीतेऽपि दिने मात्रा पीता यथोक्तप्रहरादिकालक्रमात् दिनान्तरे रात्रौ वा जीर्य्यमाणा मन्तव्या यदा पुनरहोरात्रपरिणामिनी

जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ।
भल्लाते तौवरे स्नेहे शीतमेव जलं पिबेत् ।
स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ।
एवञ्चानुप्रशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ १० ॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति ।
विष्टभ्य वापि जीर्य्येत्तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ।
जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ।
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत् प्रति ॥ ११ ॥
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रव्योष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ १२ ॥

---

मात्रा क्रियते तदहरादारो न कार्य्यः । अतएव चरके उत्तममात्रा स्नेहपा
विषयपुरुषमभिप्रेत्योक्ता । क्षुत्पिपासासहा इति । अनया तु चरकपरिभाष
प्रायो न व्यवहरन्ति वृद्धाः । तेन उत्तमादिपुरुषाणां स्नेहमात्रां प्रति तद्व्यवहा
सिद्धमतमाह उत्तमस्येत्यादि ॥ ९ ॥

अनुपानमाह जलमित्यादि ।—अन्विति अनुपाने । सर्वेषूष्णमथाम्बु तै
यदुक्तं तदपवादमाह भल्लातेत्यादि ।—भल्लाततुवरयोः स्नेह इति विग्रहः । तुव
वृक्षविशेषः तत्फलभवस्नेह इत्यर्थः उक्तं हि सुश्रुते—"पर्वैस्तु केशराकारैः फ
सर्षपसन्निभैः । वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः" इति । पीतस्नेहे य
तृष्णा स्यात् तदा तत्र प्रतीकारमाह स्नेहपीत इत्यादि ।—पीतस्नेह इत्य
उद्धरेदिति वमेत् ॥ १० ॥

अविधिपीतस्नेहजव्यापदः प्रतिकारमाह मिथ्याचारादित्यादि ।—सुश्रुत
मिथ्याचारादिति शीततोयादिसेवनादयथाविध्युपयोगाद् बहुत्वादित्यतिमात्र
विष्टभ्य मलादिरोधं कृत्वा जीर्णाजीर्णशङ्कायां चाल्पस्नेहावशेषेऽपि ज्ञेया ॥ ११ ॥

इदानीं स्नेहमपेक्ष्य कालत्रयहितमाहारमाह भोज्य इत्यादि ।—वाग्भट
अन्नं स्नेहमिति शेषः । श्वः पास्यन्निति श्वः स्नेहं पास्यन्, तथा तस्मिन्नेव

**त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः।**
**नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत्सप्तदिनात् परन्तु॥**

---

स्नेह पिबन्, तथा पीतवानपि यः पुरुषः स मात्रया भ्रम्नं भोज्यः भोजयितव्य इति। कीदृशमन्नं भोजयितव्यमित्याह द्रवोष्णमित्यादि।—अनभिष्यन्दीति न शीतोऽवरोधक श्लेष्मकरमिति न संयोगविरुद्धम्। निश्चलस्तु पास्यन्नित्यत्र पाय्यमिति पठित्वा पाययितव्यं स्नेहमिति शेष इत्याह; किन्तु चरके—"द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः। नातिस्निग्धं न सङ्कीर्णं स्नेहं पातुमिच्छति" इति॥ तथा वाग्भटपुस्तकेष्वपि बहुशोऽपास्यन्नित्येव पाठः टीकाकृद्भिश्च व्याख्यात इति॥ १२॥

पञ्चकर्माङ्गस्नेहप्रयोगावधिकालमाह त्र्यहावरमित्यादि।—त्र्यहेण त्र्यहं व्याप्य क्रियमाणस्नेहनेनावरम् अधमं यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यो भवति। एतच्च मृदुकोष्ठविषयकम्, उक्तञ्च—मृदुकोष्ठस्त्रिरात्रेण स्निह्यतीति। तथा सप्तदिन व्याप्य परं सप्तदिनरूप वा अपरमुत्कृष्टं यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यः। एतच्च मृदु क्रूरकोष्ठविषयकम्; उक्तञ्च—स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानव इति। मध्यकोष्ठं प्रति तु स्नेहनप्रकर्षकालो यद्यपि नोक्तस्तथापि चतुरहादिना मध्यकोष्ठस्य स्नेहनं ज्ञेयम्। यदाह सुश्रुतः—"पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहं वा" इति। उक्तसप्तदिनरूपस्नेहनकालानतिक्रमं सोपपत्तिकमाह नातःपरमित्यादि।—अतःपरमिति सप्तदिनात् परम्, कुतो नोपदिशन्तीत्यत आह सात्म्यीभवेदिति। सुश्रुतेऽप्युक्तं—"सप्तरात्रात् परं स्नेहः सात्म्यीभावाय कल्पते" इति। सप्तरात्रात् परेण क्रियमाणः स्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वात् न स्नेहनमधिकं करोतीत्यर्थः। तेन यावन्मात्रस्नेहप्रयोगेण सप्ताहोपयुक्तेन स्नेहनं न जातं मात्रयाऽल्पत्वात्, सा मात्रा सप्तदिनात् परं न प्रयोक्तव्यैव तस्याः स्नेहमात्रायाः सात्म्यीभूतत्वात्। या पुनरधिका मात्रा सात्म्यतां न गता सा सप्ताहात् परमपि स्नेहनार्थं कर्त्तव्यैव। वृद्धास्तु यदि सप्तरात्रेणापि पुरुषः स्निग्धो न भवति तदा किञ्चित् विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुञ्जते। ननु यदि क्रूरकोष्ठः सप्तरात्रेण स्निह्यतीति व्यवस्था तत् कथमिह नातःपरं स्नेहनमादिशन्तीत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते इति? ब्रूमः। क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति, परन्तु क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रा प्रयुज्यते तदा सप्तरात्रेणापि न स्निह्यतीति। यत् तु तन्त्रान्तरे—"तत्

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम् ॥
श्यामाककोरदूषान्न-तक्रपिण्याकसक्तुभिः ॥ १५ ॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ १६ ॥
भृष्टे मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला ।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥
सर्पिस्तैलवसामज्जतण्डुलप्रसृतैः शृता ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला ।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥
शर्कराघृतसंसृष्टे दुह्याद्गां कलसेऽथवा ।
पाययेद्रूक्षमेतद्धि सद्यः स्नेहनमुच्यते ॥ १७ ॥
ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान् ।

---

सम्यक्स्निग्धस्य तथा रूक्षस्य तथातिस्निग्धस्य च लक्षणान्याह वातानुलोम्यमित्यादि ।—वाग्भटस्य । असंहतमित्यकठिनम् । स्नेहोद्वेगोऽनिच्छा, क्लमो ग्लानिः । सुश्रुते—ग्लानिः सदनमङ्गानामित्युक्तम् । रूक्षणं श्यामाकादिभिरित्यन्वयः ॥ १५ ॥

इदानीं विषयाभिधानपूर्वकं सद्यःस्नेहयोगानाह बालेत्यादि ।—वाग्भटस्य । अनुद्वेगानित्यवैराग्यजनकानित्यर्थः ॥ १६ ॥

भृष्ट इत्यादि ।—सुश्रुतस्य । भृष्ट इति सन्तलिते, मांसरस इत्यनन्तरं सिद्ध इति शेषः । स्वल्पतण्डुलेत्यत्र सुकल्पितेति पाठान्तरम् । सर्पिरित्यादि ।—प्रसृत पलद्वयं ; पेयेति पातव्या । सर्पिष्मतीत्यादि ।—सुश्रुतस्य । बहुतिलेत्यनेन निस्तुषतिलानां त्रयो भागाः, एकस्तण्डुलानामिति । इयञ्च सुखोष्णा योज्या सुश्रुते तथैवोक्तत्वात् चक्रेण प्रतिसंस्कृत्य लिखितमेतत् । तत्र हि तथैवेत्यत्र यवागूरिति पठ्यते । शर्करेत्यादि । सुश्रुतस्य । रूक्षमिति पुरुषविशेषणम् ॥ १७ ॥

कुष्ठी शोथी प्रमेही च स्नेहनेन प्रयोजयेत् ॥
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह।
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरम्।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम् ॥ १८ ॥
इति स्नेहाधिकारः।

---

## अथ स्वेदाधिकारः।

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः ॥

---

येषु व्याधिषु स्नेहनार्थं यानि द्रव्याणि न प्रयोज्यानि तान्याह ग्राम्येत्यादि।—स्नेहन इति स्नेहनिमित्तम्। तर्हि ते कस्नेह्या इत्याह स्नेहैरित्यादि।—यथास्वमिति यो यत्र स्नेहो युज्यते सर्पिरादि, सिद्धैरिति तत्तद्व्याधिहरत्वेन प्रसिद्धैः सिद्धैरिति पद पिप्पल्यादिभिः प्रत्येक योज्याम्, पिप्पल्यादिसिद्धाः स्नेहाः कुष्ठादिषु यथासङ्ख्यमिति केचित्, तन्न, वाग्भटे व्यतिक्रमेणाभिधानात् यथा—'गुडानूपामिषक्षीरतिलमाषसुरादधि। कुष्ठशोथप्रमेहेषु स्नेहनार्थं न कल्पयेत्। त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान्। स्नेहान यथास्वमेतेषां योजयेदविकारिणः' इति। स्नेहादिषु स्नेहस्य प्रागभावमाह स्नेहमित्यादि।—स्पष्टम् ॥ १८ ॥

इति स्नेहाधिकारः।

---

स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरमित्युक्तेः स्नेहानन्तरं स्वेदमाह—तत्र दोषविशेषापेक्षया स्वेदस्य कल्पनाभेदमाह वातेत्यादि।—अत्र यथासंख्यमन्वयः। स्निग्धरूक्ष इति स्निग्धरूक्षद्रव्यकृतत्वात्। रोगाद्यपेक्षयापि स्वेदस्य कल्पनाभेदमाह

आमाशयगते वाते कफे पक्वाशयाश्रये।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ १ ॥
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ॥ २ ॥
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान्।
स्तम्भनीयक्षतक्षीणविषमद्यविकारिणः।
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान्।

---

व्याधावित्यादि।—व्याधौ महाबले महाशीते शीतलक्रते महाशीतले तथा शरीरे च महाबले महानिति मृदुमध्यस्वेदादिविधया प्रत्यङ्गतापत्वेन कालबाहुल्येन च एवं दुर्बल इति मध्यम इति च व्याख्येयम्। वाते स्निग्धः कफे रूक्ष इति यदुक्तं तस्य देशविशेषापेक्षया व्यभिचारमाह आमाशयेत्यादि।—वागभटस्य। आमाशय इति कफस्थानोपलक्षणम्, अत्रापि यथासङ्ख्यमन्वयः; तेन कफस्थानापेक्षया पूर्वं रूक्षस्वेदं कृत्वा पश्चाद्वातापेक्ष स्निग्धस्वेदः कार्य्यः। यदुक्तं स्थान जयेद्धि पूर्वमिति। एवं पक्वाशयगते स्नेहपूर्व इति व्याख्येयम् ॥ १ ॥

अस्वेद्यदेशानाह वृषणावित्यादि।—यदि वृषणे स्वेदः क्रियते तदा तत्र प्रत्यासन्नशुक्रवहस्रोतस उपघातात् क्लीवत्वं स्यात्। हृदयस्याप्योजःक्षयप्रसङ्गात्। दृश्योः तर्पणश्लेष्मक्षयात् तिमिरमान्ध्यं वा भवेदिति। मृदु वा न वेति स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदु स्वेदयेत। स्वेदव्यतिरिक्तोपायान्तरसम्भवे तु न वेति बोध्यः। इष्टत इत्यातुरेच्छातो वैद्येच्छातश्च। इष्टेति भावे क्तः ॥ २ ॥

अस्वेद्यानाह न स्वेदयेदित्यादि।—वागभटस्य। अतिस्थूलरूक्षदुर्बलक्षीणानां स्वेदासहत्वात् प्राणोपरोधः, मूर्च्छितानां पित्तवृद्ध्या मूर्च्छैव भवति। स्तम्भनीया वम्यतिसारपीडितादयः एषां स्वेदात् पित्तवृद्ध्या रोगवृद्धिः स्यात्। क्षतस्य स्वेदाद्रक्तातिप्रवृत्तिः, विषमद्यविकारिणामपि पित्तवृद्ध्या तयोरपि महान् वेगः, तिमिरे तर्पकश्लेष्मक्षयः, उदरं अत्यग्न्यादिनिदानत्वेन तद्वृद्धिरेव, विसर्पकुष्ठयो रक्तदुष्टिः एवमाढ्यरोगी आढ्यरोगी वातरक्तं शोषे रसादिक्षयः। पीतदुग्धादौ उत्क्लेशादयः, कृतविरेके पित्तवृद्ध्या तदतियोगः, भ्रष्टगुदो गुदभ्रंशी दग्धगुदः क्षाराग्न्या-

भ्रष्टदग्धगुदग्लानि क्रोधशोकभयार्दितान् ॥
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीड़ितान्।
गर्भिणीं पुष्पितां सूतां मृदुर्वात्ययिके गदे ॥ ३ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदः कफावृते।
निर्वातं गृहमायासो गुरुप्रावरणं भयम् ॥
उपनाहाहवक्रोधभूरिपानक्षुधातपाः।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥ ४ ॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ ५ ॥
स्फोटोत्पत्तिः पित्तरक्तप्रकोपो
मदो मूर्च्छा भ्रमदाहौ क्लमश्च।

---

दिभिः गुदभ्रंशदाहयोः पित्तवृद्धा सरत्वेन क्रमेण तयोरेव वृद्धिः, क्षुधायां वह्निवृद्धा धातुपाकः तृष्णायां पित्तवृद्धिः, कामलापाण्डुमेहेषु पित्तवृद्धा तद्वृद्धिः, गर्भिण्या गर्भव्यापत्ति, पुष्पितायां रजोऽतियोगः। सूतामित्यप्रसूतां प्रसूतगर्भामिति यावत्। यस्मात्तु स्वेदात् रक्तातिप्रवृत्तिः स्यादिति भावः। सम्यक्प्रसूतायास्तु स्वेदविधानमग्रे वक्ष्यति। एषु च मेदसादिषु यदि स्वेदैकसाध्यः सन्न्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि मृदुस्वेदो विधेय इत्याह मृदुर्वात्ययिके गद इति ॥ ३ ॥

अनाग्नेयस्वेदस्य विषयमाह स्वेदो हित इत्यादि।—वाग्भटस्य। अनाग्नेयस्वेदानाह निवातमित्यादि।—वाग्भटस्य। उपनाहो बहलो लेपः स हि बहुलत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति। भूरिपानं मद्यस्य ॥ ४ ॥

स्वेदस्य सम्यग्योगलक्षणमाह शीतेत्यादि।—स्वेदे इमे; स्वेदनादिति प्रस्वेदवत्वात्। अत्र शीताद्यपहारस्य स्वेदस्य सम्यग्योगलक्षणत्वेन शीतादेरर्थतोऽनुपरमस्य स्वेदासम्यग्योगलक्षणत्वमुक्तं भवति। सुश्रुतेऽप्युक्तं—"स्वेदस्रावो व्याधिहानिर्लघुत्वं शीतादीनां मार्दवञ्चातुरस्य। सम्यक्स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेन भवेत्तत्" इति ॥ ५ ॥

अतिस्वेदे सन्धिपीड़ा तृषा च
क्रियाः शीतास्तत्र कुर्य्याद्विधिज्ञः ॥
सर्वान् स्वेदान् निवाते तु जीर्णान्ने चावचारयेत् ॥ ६ ॥
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम्।
शोधनीयास्तु ये केचित् पूर्वं स्वेद्यास्तु ते मताः ॥
पश्चात् स्वेद्या हृते शल्ये मूढ़गर्भानुपद्रवाः।
सम्यक् प्रजाताः काले च पश्चात् स्वेद्या विजानता ॥
स्वेद्याः पश्चाच्च पूर्वञ्च भगन्दर्य्यर्शसस्तथा ॥ ७ ॥
तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथवाङ्गारकै-
र्लेपाद्यातहरैः सहाम्ललवणस्नेहैः सुखोष्णैर्भवेत्।

---

स्वेदातियोगलक्षणं चिकित्सितञ्चाह स्फोटेत्यादि।—सुश्रुतस्य। स्वेदा यत्र प्रयोज्यास्तानाह सर्वानित्यादि।—सुश्रुतस्य। जीर्णेऽन्न इत्युत्सर्गस्तेन विष्टम्भार्शादौ यत् स्वेदविधानं विष्टब्धे स्वेदनं कार्य्यमित्यादिनोक्तं तदपवादतया न प्रतीति। ६ ॥

इदानीं ये च स्वेदविषयास्तथा पश्चाद् ये स्वेदविषया ये कालद्वयेऽपि स्वेदविषयास्तान् क्रमेणाह येषामित्यादि।—सुश्रुतस्य। शल्य इति गर्भरूपशल्ये, अनुपद्रवा गर्भस्रावाद्युपद्रवादिरहिता। सम्यक्प्रजाता सम्यक्प्रसूता। स्वेद्या भगन्दरेऽर्शसि च पूर्वं स्वेदस्तप्तलौहशलाकया दाहरूपः, पश्चात् स्वेदस्तु दाहानन्तरमुष्णोदकोपवेशनरूपो ज्ञेयः। ७ ॥

सुश्रुते तापवाष्पोपनाहद्रवभेदेन चतुर्विधस्वेद उक्तस्तानाह—तप्तैरित्यादिना अङ्गारैरित्यन्तेन तापस्वेदः। सिकतैव सैकतम्। सुश्रुतेऽप्युक्तं "तत्र तापस्वेदो नाम यः पाणिकांस्यकन्दुकपालबालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खदिराङ्गारैः" इति। लेपेत्यादिना सुखोष्णैरित्यन्तेन उपनाहस्वेदः। वातहरैद्रव्यमांसैर्भद्रदार्वादिभिश्च काञ्जिकादियुक्तैः सुखोष्णैर्लेपात् यः स्वेद उक्तः स उपनाह इत्यर्थः। एवमित्यादि।—स्वेद्यादिभिरित्यन्तेन द्रवस्वेदः; पयो दुग्धम्। सुश्रुतेऽपि "द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वावगाह्य स्वेदयेत्। एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत सुखोष्णैः क्वाथैः

एवं तप्तपयोऽम्बु वातशमनक्वाथादिदीकादिभि-
स्तप्तैस्तोयनिषेचनोद्भववहद्वाष्पैः शिलाद्यैः क्रमात् ॥
तापोपनाहद्रववाष्पपूर्वाः स्वेदास्ततोऽन्त्यप्रथमौ कफे स्तः।
वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः ॥८॥

इति स्वेदाधिकारः।

---

## अथ वमनाधिकारः।

स्निग्धस्विन्नं कफे सम्यक् संयोगे वा कफोल्वणे।
श्वो-वम्यमुत्क्लिष्टकफं मत्स्यमांसतिलादिभिः ॥
यथाविकारं विहितां मधुसैन्धवसंयुताम्।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥

---

परिषिञ्चेदिति। तप्तैरित्यादिना शिलाद्यैरित्यन्तेन वाष्पस्वेद। शिलाद्यैरित्याद्य-शब्दात् कपालेष्टकालोहपिण्डादीनां ग्रहणम्, अस्यैव विशेषणं तोयेत्यादि। सुश्रुते तु वाष्पस्वेद तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिञ्चेदित्याद्युक्तम्। एषा स्वेदानां विषयमाह तत इत्यादि।—सप्तम्यन्तात् तसि.। तेषु स्वेदेषु मध्ये आद्यन्तस्वेदौ वाष्पस्वेद-तापस्वेदौ कफे स्तः। द्वितीय इत्युपनाहो वायौ, तृतीय इति द्रवस्वेदः, पित्तोपसृष्टे वाते कफे च भवति। सुश्रुतेऽप्युक्तं "तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ उपनाहस्वेदो वातघ्नः अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेदः" इति। ननु पित्तोपसृष्टे कथं स्वेदो वातश्लेष्मणि वाते चेत्यनेनैव विरोधात्? उच्यते, पित्तयुक्तेऽपि द्रवस्वेदविधानात् वातश्लेष्मणीत्यादिवचनं प्रायिकं ज्ञेयमिति ॥ ८ ॥

इति स्वेदाधिकार विवृतिः।

---

इदानीं स्वेदस्नेहानन्तरीयत्वात् पञ्चकर्माणि विवक्ष्यानि। तत्र यद्यपि पञ्चकर्मसु बस्तेरेव प्राधान्यं, यदुक्तम्—"उपक्रमाणां सर्वेषां प्रधानो;" इति, तथापि

"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घास्तु पान्तु ते॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥"
पूर्वाह्णे पाययेत् पीतो जानुतुल्यासने स्थितः।
तन्मना जातहृल्लासप्रसेकश्छर्दयेत्ततः।
अङ्गुलीभ्यामनायस्तनालेन मृदुनाथवा॥ १॥
कृष्णेन्द्रयवसिन्धूत्थ-वचाकल्कयुतं पिबेत्।
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम्॥

---

प्रकृतकर्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्विकैव वस्तिप्रवृत्तिर्भवतीति कृत्वा वमनविरेचने एव प्रथममभिधातव्ये; तत्रापि वमनपूर्वकत्वात् विरेचनस्य विरेचनात् प्राक् वमनमाह स्निग्धेत्यादि।—सम्यक्स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां पूर्वाह्णे पाययेदिति वक्ष्यमाणेनान्वयः। वमनस्य विषयमाह कफ इत्यादि।—कफे केवले कफे, कफोल्वणे इति कफप्रधाने। श्वोवम्यमित्यादि।—श्व इत्यागामिदिवसे। यदि पुरुषो वम्या वमनार्हो भवति, तदा तत्पूर्वदिवसे मत्स्यादिभिः कफ उत्क्लेश्यैव इत्यर्थः। उत्क्लिष्टकफाय दीयमानं वमनं न दुःखमावहति; उक्तं हि—"कफं उच्छर्दयति ह्यदुःखम्" इति। मात्रामित्यनपायिपरिमाणम्। मधुसैन्धवयुतामित्यनेन सर्वत्रैव वमनयोगे मधुसैन्धवयोर्देयतां बोधयति। कोष्ठं विभज्येति कोष्ठाद्यपेक्षया मधु सैन्धवञ्च स्तोकं बहु वा देयमित्यर्थः। मन्त्राभिमन्त्रितमित्युक्तमतो मन्त्रमाह ब्रह्मेत्यादि।—वमनौषधपानानन्तरीयविधिमाह पीत इत्यादि।—तन्मना इति वान्तमनाः। अङ्गुलीभ्यामित्यत्र परिकर्त्तितनखाभ्यां कण्ठमभिस्पृशन्निति शेषः। चरकेऽपि सुपरिलिखितनखाभ्यां कण्ठमभिस्पृशन्नित्युक्तम्। अनायस्तेति ऋजुमृदुना नालेनेत्युत्पलनालेन॥ १॥

वमनविधिमभिधाय वमनयोगानाह कृष्णेत्यादि।—अत्र कृष्णादीनां मिलित्वा कर्षः। यष्टिकषायं यष्टिमधुकषायम्। कषायश्च क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके चतुर्भागावशिष्टन्तु वमनेष्ववचारयेदिति परिभाषया कार्यः। नत्वत्र चतुर्भागावशिष्टः कषायः प्रशस्तो भवति; चरके तु पूर्णं शरावं पिबेदित्युक्तम्,

क्वाथ्यद्रव्यस्य कुड़वं श्रपयित्वा जलाढ़के।
चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत् ॥ २ ॥
तण्डुलसलिलनिपिष्टं यः पीत्वा वमति पूर्वाह्णे।
फलिनीवल्कलमुष्णं हरति गरं सकफपित्तकृजम्।
क्षौद्रलीढ़ं ताम्ररजो वमनं गरदोषनुत् ॥ ३ ॥

पञ्चकषायः।

कटरुषं वचा निम्बं पटोलं फलिनीत्वचम्।
क्वाथयित्वा पिबेत्तोयं वान्तिकृन्मदनान्वितम् ॥ ४ ॥
निम्बकषायोपेतं फलिनीगदमदनमधुकसिन्धूत्थम्।
मधुयुतमेतद्वमनं कफपूर्णाशये शस्तम् ॥ ५ ॥

---

...विरोधः ; नैवं, चरके तु पूर्णं शरावमिति यदुक्तं तदेकशरावपानाभि... , तेनेह प्रस्थमात्रे कषाये शरावमेकं पीत्वा शेषकषायभागो रक्षणीयोऽयोगे ... पुनः पानार्थमित्यभिप्रायः। एतच्च मात्राकथनं मन्दबुद्धेर्न व्यवसायस्य स्यादि... कथं क्रियते इति वस्तुतस्तु कोष्ठाद्यपेक्षयैव मात्रा कल्पनीयेति सिद्धान्त... कोष्ठं विभज्य मात्राभिधानम्। सर्वैव वमनयोगे उष्णीकरणं मधुसैन्ध... । न चोष्णे मधु विरुध्यत इति वाच्यं वमनस्यापक्वस्यैव ऊर्द्ध्वगमनात् ...पाके हि विरोधो भवति। इदं द्यास्तु प्रयोगे कदाचित् सम्भावनया... ...त्पन्नस्येव ॥ २ ॥

तण्डुलसलिलेत्यादौ।—पानमपि तण्डुलजलेनैव। फलिनी प्रियङ्गुः, तस्य ... कर्षमात्रं मधुसैन्धवे अपि कर्षमाने। एतच्च दिङ्मात्रं, तेन कोष्ठाद्यपेक्षया ... वा क्रियते। पानार्थं तण्डुलसलिलमपि शरावमात्रं, पूर्णं शराव... । क्षौद्रेत्यादौ।—रसायनाधिकारोक्तताम्रयोगवन्मारितपुटितनैपाल... ...चूर्णं रक्तिपञ्चकं मधुना सह लेह्यम्। अस्य ताम्रयोगस्य वमनकारकत्व ...भावितत्वादेवेति ज्ञेयम्। कटरुषमित्यादावपि पूर्वोक्तपरिभाषयैव ... करणीयः। मदनफलन्तु कर्षमात्रं प्रक्षेप्यमित्याहुः ॥ ३ ॥ ४ ॥

पञ्चकषायः। निम्बकषायोपेतमित्यादौ।—गदः कुष्ठम्। फलिनीकुष्ठमधु-

फलजीमूतकेच्वाकुकुटजाः कृतवेधनः।
धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमी ॥ ६ ॥

क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे।
दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिर्गुरुगात्रता च ॥ ८ ॥
तृण्मोहमूर्च्छानिलकोपनिद्राबलादिहानिर्वमितेऽतिविद्यात्।
ततः सायं प्रभाते वा क्षुद्वान् पेयादिकं भजेत् ॥ ९ ॥

---

कानां मिलित्वा कर्षः, मदनफलस्य च कर्षः, सैन्धवस्य माषकचतुष्टयं, मधुनोऽष्टौ माषका इति प्रक्षेपव्यवस्था इत्याहुः ॥ ५ ॥

वमनयोगेषु यौगिकद्रव्याण्याह फलमित्यादि।—फलं मदनफलं; जीमूतको देवदाली, घोषकभेदः; इक्ष्वाकुस्तिक्ततुम्बी; कृतवेधनः ज्योत्स्निका; धामार्गवः पीतघोषः। एषां जीमूतादीनाञ्च फलम्। एते च दोषाद्यपेक्षया कल्ककाथादिकल्पनया वमनयोगेषु योज्या इत्यर्थः ॥ ६ ॥

इदानीं वमनस्य सम्यग्योगलक्षणमाह क्रमादित्यादि।—क्रमादिति वचनेन यथोक्तक्रमलक्षणेन कफाद्यागमनं सम्यग्योगलक्षणमिति बोधयति। अतः कफादूर्द्ध्वं यदा पित्तं गतं स्यात् तदा तत्पित्तागमनेऽपि सति न शुद्धिः। किन्तु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः। तत्र पित्तानयनं कफानयनान्तरमेव भवति। इयमेवात्यन्तिकी शुद्धिरव्यभिचारिणी। हृत्पार्श्वेत्यादिना वमनस्य नैसर्गिकशुद्धिमाह। सम्यग्वमित इष्ट इत्यन्वयः ॥ ७ ॥

दुश्छर्दित इत्यादिना अर्द्धश्लोकेनायोगकृतवमनलक्षणमाह। हृत्खाविशुद्धिरिति।—हृदयस्य तथा खानामिन्द्रियाणां स्रोतसामशुद्धिरित्यर्थः ॥ ८ ॥

तृण्मोहेत्यादिना अतियोगलक्षणमाह।—अतिवमित इत्यन्वयः। आदिशब्देनैव वर्णस्वरादिग्रहणं; बलातिहानिरित्यपि पाठः। एतदनन्तरं किं पथ्यं देयं न वेति तावाह तत इत्यादि।—यस्य सम्यग्योगः क्षुधा च स्यात् तदा सायम्, अन्यथा तु प्रातः पेयादिकं भजेदित्यर्थः। भेलेऽप्युक्तं—"वमितं लङ्घयेत् सम्यक् शुद्धिविज्ञानलक्षणम्। तानि हृष्ट्वा तु पेयादिक्रमं कुर्य्यान्न लङ्घयेत्" इति ॥ ९ ॥

पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः ॥ १० ॥

---

तमेव पेयादिक्रममाह पेयामित्यादि।—पेयादिलक्षणञ्च ज्वराधिकार एवोक्तं व्याख्यातञ्च। विलिप्तशब्दो विलेपीवचनः। अकृतो यूषः स्नेहाद्यसंस्कृतः, कृतस्तु स्नेहलवणादिसंस्कृतः; एवं रसेऽपि कृताकृतव्यवस्था। उक्तञ्च सूदशास्त्रे—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" इति। अस्नेहलवणमितीषत्स्नेहलवणयुक्तम्। अतएवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेणेत्युक्तम्। संस्कृतमिति वचनाच्च समग्रसाधन यावता भवति तावदेव लवणादिकं कृते देयमिति बोधयति। अकृतकृतयोर्मध्ये अकृतो लघुर्भवति; उक्तं हि—"अकृताख्यो लघुस्तत्र तनु विष्टभ्यते स हि" इति। अकृतं कृतञ्चेति चकारोऽयमन्वाचयशिष्टः, तेन कृतस्यानैयत्यं बोधयति; ततश्चाकृतावेव यूषरसौ लाघवादग्निसन्धुक्षणार्थं देयौ, कृतौ पुनरवस्थाविशेषादिति। अतएवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेत्यनेन औदकलावणिकेत्यनेन च अकृतयोरेव यूषरसयोर्दानं साक्षादुक्तं, कृतौ पुनरवस्थाविशेषनियतत्वान्न साक्षादुक्तौ। त्रिरित्यन्नकालत्रयं, द्विरित्यन्नकालद्वयम्, एकश इत्येकान्नकालम्। एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः सम्बध्यते। त्रिरित्यादि पदत्रयञ्च प्रधानशुद्ध्यादिशुद्धेषु त्रिषु यथाक्रमं योज्यं, तेन प्रधानशुद्धिशुद्धे पेयादिक्रमः प्रत्येकं त्रिः कर्त्तव्यः, तेनाद्य कालत्रये पेया, ततः परेणान्नकालत्रये विलेपी, ततः परेणान्नकालत्रये कृताकृतयूषयोरन्यतरेण सहितमन्नं, ततोऽपि च परेणान्नकालत्रये कृताकृतरसयोरन्यतरेण सहितमन्नं देयमिति। द्वादशभिरन्नकालैर्वमनदिनसायाह्नात प्रभृति सप्तरात्रेण पेयादिक्रमः समाप्यते। अन्नकालस्तु उत्सर्गसिद्धः सायं प्रातश्चेति। अयमेव च क्रम उपकल्पनीयेऽपि; ततः सायाह्ने लोहितशालितण्डुलानामित्यादिना यावद् द्वादशे चान्नकाल इत्यनेनोक्तः। एवं मध्यशुद्धिशुद्धे द्विः पेयादिक्रमः। अवरशुद्धिशुद्धे चैकशः पेयादिक्रमो व्याख्येयः। एवञ्च मध्यशुद्धिशुद्धेऽष्टान्नकालिकः, अवरशुद्धिशुद्धे तु चतुरन्नकालिकः क्रमो भवतीति व्याख्यानरञ्च अस्मदीयचरकतत्त्व-प्रदीपिकायामनुसन्धेयम्। यद्यपि प्रधानशुद्ध्या निःशेषदोषहरणादुदीर्णपावको निरपवाद एव भवति तथापि तत्र भूरिदोषनिर्हरणेन, तावत्कालिकाग्नि-

जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ।
तथैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥११॥
पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः ॥१२॥
द्विवान् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम्।
वमने च विरेके च तथा शोणितमोक्षणे।
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥
अयोगे लङ्घनं कार्य्यं पुनर्वापि विशोधनम्।
अतिवान्तं घृताभ्यक्तमवगाह्य हिमे जले ॥

---

क्षोभादग्निमान्द्यं महदेव सम्भवतीति तेनात्र पेयादिक्रमस्थिरं क्रियत इति ज्ञेयम् ॥ १० ॥

इदानीं प्रधानमध्यादिज्ञानार्थं तल्लक्षणमाह जघन्येत्यादि।—जघन्यमध्यप्रवरे वमने यथाक्रमं चत्वारः षडष्टौ वेगा उक्ताः, तेन चतुर्भिर्वेगैर्यच्च वमनं तज्जघन्यम्, यत् तु षड्भिस्तन्मध्यमम्, यत् त्वष्टाभिस्तत्प्रवरम्। तथा विरेकेऽपि जघन्ये दश वेगाः। मध्ये तु विरेचने द्विगुणा दश विंशतिरित्यर्थः। प्रवरे तु विरेचने त्रिगुणा दश त्रिंशदित्यर्थः। वेगसंख्याभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां क्रमेणाह प्रस्थस्तथेति। जघन्ये विरेके द्विगुणः प्रस्थः, मध्ये तु त्रिगुणः, प्रवरे च चतुर्गुण इति ॥ ११ ॥

पित्तान्तमित्यादिना वमनविरेचनयोर्दोषप्रवृत्त्यन्तोपलक्षितामात्यन्तिकीं शुद्धिं तथा वमनस्य तु दोषमानभेदोपलक्षितां मानिकीं शुद्धिमाह।—पित्तप्रवृत्तिरन्ते यस्य तत् पित्तान्तम्, एवं कफान्तमपि ज्ञेयम्। विरेकादर्द्धमित्यनेन वमनस्य दोषप्रमाणोपलक्षितात्यन्तिकी शुद्धिरुक्ता। जघन्यमध्यप्रवरे विरेके प्रस्थस्तथेत्यादिना यद्दोषमानमुक्तं तदपेक्षा वमनेऽर्द्धमित्यर्थः। तेन वमने जघन्ये प्रस्थ एकः, मध्ये तु सार्द्धप्रस्थः, प्रवरे तु द्वौ प्रस्थाविति। एतेन वैगिकी मानिकी चात्यन्तिकी चेति शुद्धित्रयमुक्तम्; कृत्वाग्र्येत्यादिना चाङ्गिकी शुद्धिः पूर्वमेवोक्ता। तेन चतुर्विधशुद्धिश्चरकेणोक्ता, प्रपञ्चस्तस्य वचनस्य चरकतत्त्वप्रदीपिकायामनुसन्धेय इति ॥१२॥

वमने विरेचने च यथा दोषमानं कार्य्यं तदाह द्विवानित्यादि।—द्वौ वा त्रय वा परिमाणमेषां द्विवाः। द्विवानित्यव्यवस्थितपरिभाषया मलभागस्य मेयता

उपाचरेत् सिताक्षौद्रमिश्रैर्लेहैश्चिकित्सकः।
वमनेऽतिप्रवृत्ते तु हृद्यं कार्य्यं विरेचनम् ॥ १३ ॥
न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम्।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़ितांश्च ॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेद्वर्चसि चातिबद्धे ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ १४ ॥
इति वमनाधिकारः।

---

## अथ विरेचनाधिकारः।

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम्।
अन्यथा योजितं ह्येतद्ग्रहणीगदकृन्मतम् ॥ १ ॥

---

दर्शयति। वमने तु पीतमिति वमने पीतमौषधं वर्जयित्वा शेषो सेयः। पूर्वन्तु विरेके प्रस्थ इत्युक्तम् अतस्तत्स्वरूपमाह वमने चेत्यादि। क्रमेण वमनयोगाति योगचिकित्सामाह अयोग इत्यादि। विशोधनं वमनं विरेचनञ्च। लेहैरिति प्रकृतो मन्थैः। अतिवान्तौ च विरेचनं प्रतिमार्गेहरणरूपत्वात् ॥ १३ ॥

अवाम्यानाह न वामयेदित्यादि। अवाम्यत्वे नोक्तानामप्यात्ययिकव्याधौ वमनमाहएतेऽपीत्यादि ॥ १४ ॥

इति वमनाधिकार विवृतिः।

---

वमनानन्तरं विरेचनस्य विधानाद्वमनमभिधाय विरेचनमाह स्निग्धेत्यादि। स्निग्धस्विन्नायेति वमनान्तरमपि स्निग्धस्विन्नाय। तदुक्तं—"कर्मणां वमनादीनामन्तरे त्वन्तरे पुनः। स्नेहस्वेदौ प्रयुञ्जीत संशोधनमनन्तरम्" इति। अन्यथेति वमनं विना। सुश्रुतेऽप्युक्तम्—"अवान्तस्य हि सम्यगपि विक्तस्यापि सतोऽध

पित्तेन मृदुकोष्ठः स्यात् क्रूरो वातकफाश्रयात्।
मध्यमः समदोषत्वाद्योज्या मात्रानुरूपतः॥ २॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम्।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम्॥ ३॥
त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम्।
छित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्ट्य रज्ज्वा।
पक्वन्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम्॥४॥
पिप्पलीनागरक्षारं श्यामा त्रिवृतया सह।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम्॥ ५॥

---

सम्यं श्लेष्माग्रहणीं क्लेदयेत्" इति। अयञ्च विरेचनयोगः पूर्वाह्णमतिक्रम्यैव देयः। उक्तं हि वाग्भटे—"श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत्" इति॥ १॥

मात्राविध्यर्थं कोष्ठक्रममाह पित्तेनेत्यादि।—मात्रा योज्यानुरूपत इति मृदौ मृद्वी, क्रूरे तीक्ष्णा, मध्यमे मध्यमेत्यर्थः॥ २॥

शर्करेत्यादि।—सुश्रुतस्य। त्रिवृच्च श्रेष्ठत्वादरुणमूला ग्राह्या, एवमन्यत्रापि। यदाह सुश्रुतः—"अरुणाभं त्रिवृन्मूलं श्रेष्ठमाहुर्विरेचने" इति। अत्र शर्करा त्रिवृच्चूर्णसमा, त्रिवृच्चूर्णमपि कोष्ठाद्यपेक्षया ग्राह्यम्; लिहत्वमात्रकारकं क्षौद्रम्। त्वक्पत्रमरिचांशिकमिति चूर्णापेक्षया त्वक्पत्रादि मिलित्वा पादिकमित्यर्थः। त्वक्पत्रसुरभीकृतमिति पाठान्तरे यावता सौरभ्यं स्यात् तावदेव त्वक्पत्रं देयमिति। त्रिवृच्चूर्णं मा ८, शर्करा मा ८, गुड़त्वक्तेजपत्रमरिचं प्र र ७॥ ३॥

त्रिवृदित्यादि।—चरकस्य। पूर्ववदेवात्रापि त्रिवृन्मानं ज्ञेयम्। छित्त्वेत्यादि।—चरकस्य। त्रिभण्डी त्रिवृताभेदः। पुटपाकयुक्त्येति काश्मर्यादिपत्राच्छादन-कुशवेष्टन-मृदावलेपननिर्धूमाङ्गारप्लोषणादिना॥ ४॥

पिप्पलीत्यादि।—क्षारो यवक्षारः; श्यामेति श्याममूला त्रिवृत्। त्रिवृदित्यरुणमूला। अत्र पिप्पलीनागरयोः कटुत्वमात्रकारिका मात्रा, तेन पिप्पलीचूर्णं माषा २, शुण्ठीचूर्णं माषा २, क्षारादित्रयस्य प्रत्येकं माषकचतुष्टयम्, ततो मिलित्वा कर्षो लेह्यः; एवमन्यत्राप्युक्तमित्याहुः॥ ५॥

हरीतकीविड़ङ्गानि सैन्धवं नागरं त्रिवृत्।
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम्॥ ६॥
त्रिवृच्छाणत्रयसमा त्रिफला तत्समानि च।
क्षारकृष्णाविड़ङ्गानि तच्चूर्णं मधुसर्पिषा।
लिह्याद्गुड़ेन गुड़िकां कृत्वा वाप्युपयोजयेत्॥
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान्।
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम्॥ ७॥

अभयाद्यो मोदकः—

अभया पिप्पलीमूलं मरिचं नागरं तथा।
त्वक्पत्रपिप्पलीमुस्त-विड़ङ्गामलकानि च॥
कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयं तथा।
षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत्॥
सर्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम्।
खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिबेज्जलम्॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते॥
पाण्डुरोगं विषं कासं जङ्घापार्श्वरुजां तथा।
पृष्ठार्त्तिं मूत्रकृच्छ्रञ्च दुर्नाम सभगन्दरम्॥
अश्मरीमेहकुष्ठञ्च दाहशोथोदराणि च।
यक्ष्माणं चक्षुषो रोगं क्रमं वैद्येन जानता।
योजितोऽयं निहन्त्याशु अभयाद्यो हि मोदकः॥ ८॥

---

हरीतकीत्यादि।—एषां चूर्णं गोमूत्रेण पेयमित्यर्थः। हरीतकी मा ४, विड़ङ्गादित्रयस्य प्र मा २, त्रिवृत् मा ५, मरिच मा १, एवं मिलित्वा कर्षमात्रं गोमूत्रपलेनालोड्य पेयमित्यर्थः॥ ६॥

त्रिवृच्छाणत्रयेत्यादि।—त्रिवृताचूर्णं मा १२, त्रिफलाचूर्णं प्र मा ४, यवक्षारदीनाञ्च प्र मा ५, मिलितचूर्णात् कर्षमेकं गृहीत्वा घृतमधुभ्यां लिह्यम्। गुडि

एरण्डतैलं त्रिफलाक्काथेन द्विगुणेन च।
युक्तं पीत्वा पयोभिर्वा न चिरेण विरिच्यते ॥ ९ ॥

स्रोतोविशुद्धीन्द्रियसम्प्रसादौ
लघुत्वमूर्जोऽग्निरनामयत्वम्।
प्राप्तिश्च विट्पित्तकफानिलानाम्
सम्यग्विरिक्तस्य भवेत् क्रमेण ॥ १० ॥
स्यात् श्लेष्मपित्तानिलसम्प्रकोपः
सादस्तथाग्नेर्गुरुता प्रतिश्या।
तन्द्रा तथा छर्दिररोचकश्च
वातानुलोम्यं न च दुर्विरिक्ते ॥ ११ ॥
कफास्रपित्तक्षयजानिलोत्थाः
सुप्त्यङ्गमर्दक्लमवेपनाद्याः।
निद्राबलाभावतमःप्रवेशाः
सोन्मादहिक्काश्च विरेचितेऽति ॥

---

पचेत् पुराणगुडं तौ ९ एतत्त्रिवृतादिचूर्णेन सम विमर्द्य कर्षमाना गुडिका कार्य्या, तदुपरि उष्णोदकमनुपेयम् ॥ ७ ॥

अभयेत्यादि योगद्वयं स्पष्टम् ॥ ८। ९ ॥

विरेकसम्यग्योगलक्षणमाह स्रोतोविशुद्धीत्यादि।—चरकस्य। ऊर्जोऽग्निरिति बलवानग्निरित्यर्थः। अनामयत्वमिति विरेचनजेतव्यदोषजनितविकारव्यपगमः। क्रमेण विट्पित्तादीनां प्राप्तिः प्रवृत्तिरित्यर्थः। अत्रापि यथोक्तक्रमलक्षणेन विट्पित्तादिप्रवर्त्तनेन सम्यग्विरिक्तलक्षणं भवतीति पूर्ववदेव ज्ञेयम्। अत्रापि पूर्वार्द्धेन विरेकस्य लैङ्गिकी शुद्धिः, द्वितीयार्द्धेन पुनरात्यन्तिकी शुद्धिरिति ज्ञेयम्। स्यादित्यादिना पद्येनायोगाक्तलक्षणमाह। न च वातानुलोम्यमित्यादि।—वातविबद्ध इत्यर्थः। गुरुतेति कोष्ठस्य गात्रस्य च ॥ १०। ११ ॥

कफेत्यादिना विरेचनातियोगलक्षणमाह।—क्षयशब्दः कफादिभिः प्रत्येकं सम्बध्यते, अभावशब्दोऽपि निद्राबलाभ्यामिति। अतिविरेचित इत्यन्वयः। कर्वे च

मन्दाग्निमक्षीणमसह्यरिक्तम्
न पाययेत् तद्दिवसे यवागूम्।
विपर्य्यये तद्दिवसे तु सायम्
पेयाक्रमो वान्तवदिष्यते तु ॥ १२ ॥

यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्वसहस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः॥
कषायमधुरैः पित्ते विरेकः कटुकैः कफे।
स्निग्धोष्णलवणैर्वायोरप्रवृत्ते च पाययेत्॥
उष्णाम्बु स्वेदयेच्चास्य पाणितापेन चोदरम्।
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत्॥
अदृढस्नेहकोष्ठस्तु पिबेदूर्द्ध्वं दशाहतः॥
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम्।
यौगिकं सम्यगालोच्य स्मरन् पूर्वमनुक्रमम् ॥ १३ ॥
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः।
अपरिज्ञातकोष्ठस्तु पिबेन्मृद्वल्पमौषधम्॥

---

यद्यग्निमान्द्यादिकं स्यात तदा तस्मिन् दिवसे लङ्घनमन्यथा तु सायं यवागूर्देयेत्याह मन्दाग्निमित्यादि।—सुश्रुतस्य। विपर्य्यय इत्यग्निमान्द्याद्यभावे पेयाक्रम इति पेया विलेपीमकृतमित्यादिनोक्तः॥ १२ ॥

उक्तस्येयाक्रमस्य फलमाह यथेत्यादि। इदानीं दोषभेदाद्विरेकमाह कषायेत्यादि।—वाग्भटस्य। वायोरिति छेदः। अप्रवृत्ते तु पुरीषादौ उष्णाम्बु पाययेदिति योज्यम्। अत्यन्ताल्पप्रवृत्ते दोषे अपरस्मिन्नहनि विरेकमाह उत्थान इत्यादि।—उत्थानं मलप्रवर्त्तनम्। पुनः पिबेदित्यत्र विरेचनमिति शेषः। यदि पुनरसम्यक्स्निग्धकोष्ठो भवति पुमान् तदा दशाहादूर्द्ध्वं विरेचनं पिबेदित्याह अदृढस्नेहकोष्ठ इत्यादि।—अदृढस्नेहकोष्ठ इति असम्यक्स्निग्धकोष्ठ इत्यर्थः। स्मरन् पूर्वमनुक्रममिति येन मात्राभियोगेन पूर्वमयोगोऽभूत् तत् स्मृत्वा परिहर्त्तव्यः॥ १३ ॥

रूक्षबह्वनिलक्रूर-कोष्ठव्यायामसेविनाम् ।
दीप्ताग्नीनाञ्च भेषज्यमविरेच्यैव जीर्य्यति ॥
तेभ्यो वस्तिं पुरा दद्यात् ततः स्निग्धं विरेचनम् ॥ १४ ॥
अस्निग्धे रेचनं स्निग्धं रूक्षं स्निग्धेऽतिशस्यते ।
विरूक्ष्य स्नेहसात्म्यन्तु भूयः स्निग्धं विरेचयेत् ॥ १५ ॥
पद्मकोशीरनागाह्वचन्दनानि प्रयोजयेत् ।
अतियोगे विरेकस्य पानालेपनसेचनैः ।
सौवीरपिष्टाम्रवल्कलाभिलेपोऽतिसारहा ॥ १६ ॥
अविरेच्या बालवृद्ध-श्रान्तभीतनवज्वराः ।
अल्पाग्न्यधोगपित्तास्र-क्षतपाय्वतिसारिणः ॥

---

दुर्ब्बलादिषु यादृशरेचनं प्रयोक्तव्यं तदाह दुर्ब्बल इत्यादि ।—दुर्ब्बलोऽल्पशक्तिहीनः, कृशः क्षीणमांसः । मृद्विति मृदुवीर्य्यम् । अत्यन्तवातविष्टब्धकोष्ठादौ यथा विरेचनं कार्य्यं तदाह रूक्षेत्यादि ।—रूक्षादयः कोष्ठेन सार्द्धं सम्बध्यन्ते । अविरेच्यैवेति विरेकमकृत्वा । वस्तिर्निरूह इति केचित् । अन्ये तु निरूहापेक्षया संस्वल्पवातप्रशमकत्वेनानुवासनमेव वस्तिशब्दार्थं इत्याहुः । अन्ये तूभयमपीत्याहुः ॥ १४ ॥

इदानीं यद्यस्मिन् प्रयोज्यं तदाह अस्निग्धेत्यादि । अस्निग्ध इतीषत्स्निग्धे स्निग्धेति शस्यत इत्यादि स्निग्धे रूक्षं रेचनं शस्यत इत्यर्थः ॥ १५ ॥

इदानीं रेचनातियोगचिकित्सामाह पद्मकेत्यादि ।—ननु अयोगातियोगवत् विरेकमिथ्यायोगचिकित्सा कुतो नोक्ता ? सत्यं, दोषाणां हि प्रवृत्तिः चतुर्व्विधैव संभवति सम्यक्प्रवृत्तिरतिप्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिश्चेति । अत्राल्पप्रवृत्त्यप्रवृत्तिश्चेति त्वयोगग्रहणेन एव । या प्रातिलोम्येन प्रवृत्तिर्मिथ्यायोगत्वेन वाच्या साप्यनपेक्षितस्य दोषस्याप्रवृत्तिकत्वादयोगान्तर्भूतैव । अतएवोक्तं चरके—"अयोगप्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम्" इति । अतो वमनविरेचने मिथ्यायोगं नेच्छन्तीति कृत्वा मिथ्यायोगचिकित्सितस्यानुपादानं बोध्यम् ॥ १६ ॥

निषिद्धविरेकानाह अविरेच्या इति । आस्थापितो निरूढः । अयञ्च निरूढानन्तरं विरेकनिषेध औत्सर्गिकः ; तेन तेभ्यो वस्तिं पुरा दद्यादित्यादिविशेषविधिना

मधुमेहास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ।
गर्भिणी नवसूता च तृष्णार्त्तोऽजीर्णवानपि ॥ १७ ॥

इति विरेचनाधिकारः ॥

---

## अथानुवासनाधिकारः ।

वातोल्वणेषु दोषेषु वाते वा वस्तिरिष्यते ।
यथोचितात् पादहीनं भोजयित्वानुवासयेत् ॥ १ ॥

---

तदपवादो युज्यते एव। किंवा निरूहानन्तरं हि विरेकनिषेधः सप्ताहाभ्यन्तर एव ज्ञेयः; सप्ताहादूर्द्ध्वन्तु विरेको विहित एवेति विधिनिषेधयोः कालभेदेन न विरोधः। उक्तं हि चरके—"नवो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनान्यवश्यम्। शुद्धे निरूहेण विरेचनञ्च" इति वदन्ति। अन्ये त्वेतद्विरोधभियैव तेभ्यो वस्तिं पुरा दद्यादित्यत्र वस्तिशब्दस्यानुवासनार्थमाहुरिति प्रागेवोक्तम् ॥ १७ ॥

इति विरेचनाधिकारविवृतिः।

---

विरेचनात् सप्तरात्रे गते जातबलाय वैकृताहाराय मायाङ्के सम्यग्देयोऽनुवासन इत्यनेनानुवासनस्य विरेचनीयानन्तरीयत्वमुक्तम्, अतो विरेचनाधिकारमनु सह वस्तिविचारः प्रस्तूयते। अन्नन्नप्यपि न दुष्यति अनुदिवसं वा दीयत इत्यनुवासननिरुक्तिः सुश्रुतोक्ता ज्ञेया। अत्र सामान्यतो वस्तिविषयमाह वातेत्यादि।—वाग्भटस्य। यद्यपि सुश्रुते—"वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" इत्यनेन पित्तकफरक्तानामपि वस्तिविषयत्वमुक्तं तथापि वस्तिर्वातहराणामिति वचनात् प्राधान्येन वायोरेव वस्तिविषयत्वं, पित्तकफयोस्तु वातस्थानगतयोस्तथा स्वस्थानस्थितयोर्वातानुबन्धयोर्वा वस्तिविषयता। यदाह चरकः—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्। स्रंसनं त्रीन्मलान् वस्तिः पक्वाशयगतान् हरेत्" इति। तथा—"एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः ॥" रक्तमपि दुष्टं रक्तप्रसादनद्रव्यैर्दत्तवस्तिः प्रसादयति दोषहरणेनानुलोमयति। अथ निरूहाख्यस्यानुवासनस्य विधानं तदाह यथेत्यादि।—उचितादभ्यस्तात्, पादहीनं चतुर्भाग

न चाभुक्तवते स्नेहः प्रणिधेयः कथञ्चन।
सूक्ष्मत्वाच्छून्यकोष्ठस्य क्षिप्रमूर्द्धमथोत्पतेत्॥
षट्पली च भवेच्छ्रेष्ठा मध्यमा त्रिपली भवेत्।
कनीयसी सार्द्धपला त्रिधा मात्रानुवासने॥
प्राग्देयमाद्ये द्विपलं पलार्द्धवृद्धिर्द्वितीये पलमत्रवृद्धिः।
कर्षद्वयं वा वसुमाषवृद्धिर्वस्तौ तृतीये क्रम एष उक्तः॥
स तु सैन्धवचूर्णेन शताह्वेन च संयुतः।
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम्।
विरिक्तश्चानुवास्यश्च तु सप्तरात्रात् परं तदा॥ २॥

---

हीनम्। वस्तिर्हि द्विविधा अनुवासननिरूहभेदात्। स्नेहवस्तिरनुवासनं, कषाय-वस्तिर्निरूहः। तत्र निरूहाङ्गस्यानुवासनस्य विधानम्॥ १॥

अभुक्तवतेऽनुवासनवस्तिर्न देय इत्याह न चेत्यादि।—स्नेह इति स्नेहवस्तिः। अत्रैव उपपत्तिमाह सूक्ष्मत्वादित्यादि। विदग्धान्ने तु वस्तिर्न देयः; उक्तं हि—"सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम्। ज्वरे विदग्धभुक्तस्य कुर्यात् स्नेहः प्रयोजितः" इति। उत्तममध्यमाधमनरापेक्षया त्रिविधानुवासनमात्रामाह षट्-पलीत्यादि।—अध्यर्द्धपलेति सार्द्धपलमेकमित्यर्थः। एतच्च षट्पलादिमात्राविधानं क्रमशैव विधेयम्। न त्वेकदिन एवेत्याह प्रागित्यादि।—आद्ये षट्पलके गुरुमात्रारूपे प्रथमं पक्वस्नेहस्य द्विपलम्, ततो दिनैकं विश्राम्य पलार्द्धेन वृद्धिः, एव क्रमेण नवभिः स्नेहदानदिनैः षट् पलानि स्युः। अन्तरालदिवसाश्चाष्टावेती मिलित्वा सप्तदश वासरा भवन्ति। द्वितीये मध्यमे त्रिपल इति यावत्। तत्र पलमादौ देयम्, तत एकैकदिनं विश्राम्य अनेन कर्षेण वृद्धिः। अत्रापि नवभिः स्नेहपानदिवसैः पलत्रयं पूर्य्यम्। तृतीये कनीयसि सार्द्धपले आदौ कर्षद्वयम्, तथैव एकैकदिनं विश्राम्य लघुपरिमितैरित्यष्टाभिर्माषकैर्वृद्धिः कार्य्या। अत्रापि-नववृद्धिरेव स्नेहदानदिवसैः सार्द्धपलमानं पूर्य्यते। इयमेव कनीयसी मात्रा निर-पाया सार्वलौकिकी सार्वकालिकी वृद्धव्यवहारसिद्धा च। उक्तं हि चरके—"धर्मव्यायामभाराध्वयानस्त्रीकर्षितेषु च। दुर्बले वातभग्ने च मात्रावस्तिः सदा हितः। ह्रस्वायाः स्नेहमानाया मात्रावस्तिः समो भवेत्॥" ह्रस्वायाः स्नेह

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यायसास्थिद्रुमवेणुदन्तैः।
नलैर्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि सुकर्णिकानि॥ ३॥

षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम्।
स्युर्मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि वर्त्या पिहितानि चापि॥
यथावयोऽङ्गुष्ठकनिष्ठकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुडिकामुखानि॥
स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते बस्तिनिबन्धने द्वे।

---

मात्राया योजितो बस्तिर्मात्राबस्तिरित्यर्थः। एतानि स्नेहदानदिनानि नवेत्युक्तं तेन नवदिनादर्वागपि यदि स्नेहलक्षणं भवति दिनत्रयेण चतुष्टयेन वा तदा तावतैवानुवासनं समाप्यते अनुवासनानन्तरञ्च न दीयते। न च स्नेह केवलो देयः तदा केनाप्युपहित इत्याह स त्वित्यादि।—सुश्रुतस्य। चूर्णमानञ्च वृन्देन लिखितं यथा—"चूर्णमाषः पले स्नेहे सिन्धुजन्मशताह्वयोः" इति। चक्रस्य भानुमत्यां सैन्धवशताह्वयोः प्रत्येकमङ्गुलीत्रयाग्रसन्दंशग्राह्यं मानमित्याह। सहसेति—यद्यपि स्नेहस्य शीघ्रगमनं दोषायैव, यदुक्तं "योऽनुः शीघ्रनिवृत्तोऽन्यः स्नेहस्तत्र कार्य्यकृत्" इति, तथापि वक्ष्यमाणस्नेहनिर्गमनकालाधिककालनिरासाय सहसेत्युक्तम्। तेन सहसेत्यस्य यामत्रयान्तरमेवेत्यर्थः। विरेचनानन्तरं कियद्भि रहोभिरनुवास्य इत्याह विरिक्त इत्यादि॥ २॥

इदानीं बस्तिनलिका यैर्द्रव्यैर्विधेया तान्याह सुवर्णेत्यादि।—चरकस्य। त्रपु सीसकः। रीतिः पित्तलम्; अस्थि हस्त्यादीनाम्; दन्तश्च हस्तिनः; विषाणैर्महिषादिशृङ्गैः; मणिभिर्गोमेदकादिभिः। सुकर्णिकानीत्यत्र त्रिकर्णिकानीति केचित् पठन्ति; त्रिकर्णिकत्वञ्चाग्रे वक्ष्यति। एवं नलिकाबस्तिगतस्नेहकषायादि द्रव्यनेतृत्वान्नेत्रमिति संज्ञा॥ ३॥

इदानीं नेत्रप्रमाणं वयोभेदाद्भिन्नमाह षडित्यादि।—षड्वर्षबालस्य स्यात् तेन षडङ्गुलं नेत्रं कार्य्यम्, एवं विंशतिवर्षस्य द्वादशाङ्गुलम्; तथा द्वादशवर्षस्याष्टाङ्गुलमिति यथासंख्यमन्वयः। ननु एकवर्षादारभ्य पञ्चवर्षान्तम्, तथा षड्वर्ष

ारन्ध्रो माहिषहारिणो वा स्याच्छौकरो वस्तिरजस्य वापि ॥
दृढ़स्तनुर्नष्टशिरो विगन्धः कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ४ ॥

---

दूर्द्ध्वमेकादशवर्षम्, तथा द्वादशवर्षादूर्द्ध्वं विंशतिवर्षम्, ततोऽपि सप्ततिं यावत् कियत्प्रमाणं नेत्रं कार्य्यम् अताह एकवर्षात् प्रभृति षड्वर्षं यावत् षडङ्गुलमेव नेत्रम्, तथा सप्तवर्षादूर्द्ध्वमेकोनविंशतिवर्षप्रभृति अष्टाङ्गुलं नेत्रम् एवं विंशतिवर्षादूर्द्ध्वं द्वादशाङ्गुलमेव नेत्रं कार्य्यम् ; सप्ततिवर्षं यावदिति ग्रन्थार्थः ; व्युत्क्रमाभिधान-सामर्थ्यादेव लभ्यते । यतः षट्संख्यां निवेश्याष्टसंख्यानिवेशो युज्यते ततो द्वादश संख्येति, अतो व्युत्क्रमाभिधानबलादेव तदाख्योपलब्ध इति । अस्मादेव व्युत्क्रमाभिधानात् षड्वर्षादूर्द्ध्वमेकादशवर्षं यावत्, तथा द्वादशवर्षादूर्द्ध्वं विंशतिवर्षं यावत् नेत्रप्रमाणं प्रति विकल्पोऽस्त्येवेति निदर्शयति, तेन सप्तवर्षादौ प्रतिवर्षमेकाङ्गुलतृतीयभागवृद्ध्या द्वादशवर्षेऽष्टाङ्गुलं भवति, तथा द्वादशवर्षादूर्द्ध्वमपि प्रतिवर्षमर्द्धाङ्गुलवृद्ध्या विंशतिवर्षे द्वादशाङ्गुलं भवतीति ज्ञेयम् । वाग्भटेऽप्युक्तं—"वीक्ष्य वर्षान्तरेषु । वयोबलशरीराणि प्रमाणमभिवर्द्धयेत्" इति । वर्षान्तरेष्विति षड्द्वादशादिवर्षान्तरालस्थितेषु सप्तमाष्टमादिवर्षेष्वित्यर्थः । सुश्रुते तु सांवत्सरिकाष्टादिरष्टवर्षाणां षडष्टदशाङ्गुलं नेत्रमानमुक्तं पञ्चविंशतिवर्षादूर्द्ध्वं द्वादशाङ्गुलमित्यनेन, तथा वाग्भटेऽपि—"ऊनेऽब्दे पञ्चपूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् । सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव" इत्यनेन च यो नेत्रमानभेद उक्तः सोऽप्यग्रन्थान्तरत्वान्न विरोधमावहतीति । एषाञ्च नेत्राग्ररन्ध्रं कीदृशं कार्य्यमित्याह समुद्गेत्यादि ।—षड्द्वादशाष्टाङ्गुलानि यथासंख्यं मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि कार्य्याणि स्युः । कर्कन्धुशब्देनेह तदस्थि गृह्यते । उक्तं हि सुश्रुते,—कोलास्थिमात्रच्छिद्रमिति । कर्कन्धुश्च शृगालकोलिः । बृहद्बदरास्थिग्रहणे तु कनिष्ठाः प्रमाणार्थे तद्वहनं नार्हति । अन्ये तु एवं विरोधं पश्यन्तो बदरास्थिमज्जानमिह कर्कन्धुशब्देन ग्राहयन्ति । सतीनो वर्त्तुलकलायः । वर्त्त्या पिहितामीति द्रव्यानन्तरप्रवेशवस्तिद्रव्यनिर्गमननिरासार्थं वस्त्रादीनां वर्त्त्या पिहितमुखानि कार्य्याणि । यथावय इति यस्मिन् वयसि यन्नेत्रं विहितं तद्वयःस्थस्यैव वृद्धाङ्गुष्ठकनिष्ठाभ्यां यथासंख्यं मूले चाग्रे तुल्यपरिमाणस्थूलं नेत्रं कर्त्तव्यमित्यर्थः । अङ्गुष्ठं वृद्धाङ्गुष्ठम् । अङ्गुलीयादिना नेत्राकृतिमाह । गोपुच्छाकृतित्वञ्चैषां मूलस्थौल्यादग्रे तनुत्वादिति ।

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥
प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य तु ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ ५ ॥

---

श्लक्ष्णानीत्यकर्कशानि ; गुडिकामुखानीति गुडिकाकारवर्त्तुलं मुखं येषाम्, न वर्त्तुलमुखतया अतीक्ष्णमुखानि । सुकर्णिकानीति पूर्व्वमुक्तम् अतः कर्णिकाव्यवस्था माह स्यादित्यादि ।—नेत्रस्याग्रप्रदेशे चतुर्थे भागस्तत्र एका कर्णिका कर्त्तव्या नेत्रस्यातिप्रवेशनिरासार्थमिति भावः । मूलाश्रिते वस्तिनिबन्धने द्वे इति नेत्रस्य मूले तु चर्मपुटकबन्धनार्थं कर्णिकाद्वयं कार्य्यमित्यर्थः । वस्त्यर्थं येषां मूत्रपुटक ग्राह्य तदाह जारद्गव इत्यादि ।—जारद्गव इति वृद्धगोभववस्तिरिति । वस्तिरिति मूत्र पुटकं कोषावरकचर्मेति केचित् । नष्टशिर इति समुद्धृतशिरासन्ततिः. कषायरक्त इति त्रिफलादिकषायद्रव्यभावनया रञ्जितः, अतएव विगन्धः विगतपूतिगन्धः । वयो बोध्य यथानुरूपमिति वयोभेदेन वत्सरादिरूपेण यथोक्तेन यथा वस्तिर्यस्यानुरूपसन- प्रमाणो भवति स तस्य नेत्रे बन्धनीयः ; सुबद्धसूत्र इति सुदृढबन्धनसूत्र इत्यर्थः ॥ ४ ॥

यद्यपि षट्पली तु भवेज्ज्येष्ठेत्यादिना अनुवासनमात्रा उक्तैव तथाप्यनुवक्तव्य विशेषार्थं पुनरप्यनुवासनमात्रा वक्तव्या, सा च निरूहमात्रातिदेशेन वाच्या अतो ऽनुवासनाधिकार एव प्रथमं निरूहमात्रामाह निरूहमात्रेत्यादि ।—वाग्भटश्च प्रथमे वत्सरे निरूहमात्रा प्रकुञ्चः पलमित्यर्थः । परमिति वत्सरात् परमिति प्रत्यब्दं प्रकुञ्चेन पलेन वृद्धिः कार्य्येति यावत् । षट्प्रसृता द्वादश पलानि भवन्ती त्यर्थः । प्रसृतन्तु पलद्वयमिति । एतेन प्रत्यब्दं प्रकुञ्चवृद्ध्या द्वादशभिर्वर्षैः षट् प्रसृता भवन्तीत्यर्थः । द्वादशेति छेदः । तत इति द्वादशवर्षादूर्द्ध्वं प्रत्यब्दमेकैक प्रसृ तत्वा वर्द्धयेत् यावद्द्वादश प्रसृता भवन्ति ; एतेन द्वादशवत्सरं त्रयोदशवर्षा मारभ्य अष्टादशवर्षपर्य्यन्तं प्रतिवर्षमेकैकप्रसृतवृद्ध्या द्वादशप्रसृतपूरणं भवति अष्टादशस्येत्यष्टादशवर्षदेशीयस्य पुंसः आसप्ततेरिति सप्ततिवर्षं यावत् इदं द्वाद प्रसृतस्वरूपमेव मानं ज्ञेयमित्यर्थः । दशैव प्रसृताः परमिति प्रत्यब्दं प्रसृतवृ अष्टादशस्य अष्टादशवर्षस्य द्वादश प्रसृता भवन्ति, अतः सप्ततिवर्षपर्य्यन्तं द्वाद

यथावयं निरूहस्य पादो मात्रानुवासने।
कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे॥
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः।
सङ्कोच्य दक्षिणं सक्थि प्रसार्य्य च ततोऽपरम्॥
वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्।
तथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे॥
उच्छ्वास्य वस्तेर्वदनं बद्धा हस्तमकम्पयन्।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम्॥
नातिवेगं न वा मन्दं सकृदेव प्रपीड़येत्।
सावशेषं प्रकुर्वीत वायुः शेषे हि तिष्ठति॥ ६॥

---

प्रसृता एव, पर सप्ततिवर्षादूर्द्धं दश प्रसृता एवेत्यर्थ। इदानीं पुनरर्द्धमात्रिकेण व्यवहार, तत्र महत्यपि पुंसि षट् प्रसृता एव दीयन्ते इड़वैद्यैरिति ज्ञेयम्॥ ५॥

इदानीमुक्तनिरूहमात्रातिदेशेन प्रकृतानुवासनमात्रामाह यथावयमित्यादि।—यस्मिन् वयसि यन्निरूहमानमुक्तं तस्मिन् वयसि अनुवासनमान तन्निरूहाच्चतुर्थांशमित्यर्थ। एतेन प्रथमवर्षीयस्य बालस्य उत्कृष्टं निरूहमान पलमुक्तम्, तस्य चतुर्थांशः कर्षोऽनुवासनार्थमित्यर्थः।. एव द्विविवार्षिकबालादौ द्विचिकार्षिकं बोध्यम्। ननु षट् पला तु भवेज्ज्येष्ठेत्यादिना पुर्वं त्रिविधानुवासनमात्रोक्ता, अत्र पुनरन्यथैवेति विरोध.? उच्यते, अष्टादशवर्षं यावत् द्वादशप्रसृती निरूह उक्त., तस्य चतुर्थोंऽशः षट् पल एव, तथा द्वादशवर्षं प्रति षट् प्रसृता उक्ता', एषां चतुर्थी भागस्त्रिपल एव, तथा षड्वर्षस्य षट्पलमित्यस्य पाद: सार्द्धपलमिति, अत्रान्तरे एकद्विवर्षादौ चतुर्दशवर्षादौ च ये मानभेदा. सन्ति तत्राप्युक्तमात्रानुसारेणोह्य कार्य्य इत्येकवाक्यतया न पूर्वापरवचनविरोध:। किञ्च षट्पलेत्यादि वाक्यानुत्तममध्यमाधमबलामलशरीरभेदभिन्नमुत्सर्गसिद्धं त्रिविधं मानमाश्रित्योक्त, तेन तत्रैकवर्षादिवयोभेदभिन्नमात्राभिधानात्र न्यूनतादोष इति ज्ञेयम। इदानीं किम्भूतस्य तदनुवासनं देयमित्याह कृतेत्यादि।—वाग्भटस्य। शयन इति शय्यायाम्; वामपार्श्वत इति वामपार्श्वेन, संविष्टं सुप्तम्। वामपार्श्वशयनप्रयोजनञ्च चरकेणोक्त यथा—"वामाश्रयोऽपि पक्वाशयश्च तत्पार्श्वसंस्थस्य सुखोपलब्धि.। लीयन्त एवं वलयश्च तस्मात्

निरूहदानेऽपि विधिरयमेव समीरितः।
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत् ॥
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं प्रसर्पति।
आकुञ्चयेच्छनैस्त्रिस्त्रिः सक्थिबाहू ततः परम् ॥
ताड़येत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः।
स्फिचोश्चैनं ततः श्रोणिं शय्यां त्रिरुत्क्षिपेच्छनैः ॥

---

सव्यं शयानोऽर्हति वस्तिदानम्” इति। सक्थीति जङ्घा, अपरमिति वामम् सव्य इति वामे। वस्तिमिति बद्धचर्मपुटाहितस्नेहयुक्तं नेत्रमेव। दक्षिणेनेति हस्तेन उत्क्षिप्य वस्तेर्वदनं बद्ध्वेति वस्तेश्चर्मपुटस्य मुखम्। उत्क्षिप्य उद्गाल्य पश्चात् बद्ध्वेत्यर्थः। वस्तिमुखोत्क्षेपनञ्च द्रवाभिघातजनितवातस्य निर्गमनार्थम्। उत्क्षिप्य वस्तेर्वदने बद्ध्वा इति पाठः। पृष्ठवंशं प्रतीति पृष्ठवंशं लक्षीकृत्य, तेन पृष्ठवंशानुसारेण ऋजु यथा स्यात् तथा नेत्रं प्रणयेदित्यर्थः। चरकेऽपि ऋजुपृष्ठवंशमित्युक्तम्। सकृदित्येकवारमेव। वस्तिपुटकान्तर्गतद्रव्यभागस्तु न निःशेषं देय इत्याह सावशेषमित्यादि।—वायुः शेषे हि तिष्ठतीति निःशेषदाने हि पुटान्तर्गतो वायुर्गुदं प्रविश्य वस्तिमाध्मापयेदिति भावः ॥ ६ ॥

इदानीमुक्तानुवासनदानविधिं निरूहेऽप्यतिदिशति निरूहदानेऽपीत्यादि।—दत्ते च स्नेहे यादृशेन स्थातव्यं यच्च कर्त्तव्यं तदाह तत इत्यादि।—सुश्रुतस्य वाक् लघ्वक्षरं, तदुच्चारणं शतधा यावत्क्षणेन भवति तावत्क्षणमुत्तानो भूत्वा तिष्ठेदित्यर्थः। अन्ये तु वाक्शतं छोटिकाशतमित्याहुः। प्रसारितैः सर्वगात्रैर्बाहुजङ्घादिभिरित्युपलक्षणे तृतीया। एवं कृते किं स्यादित्याह तथेति।—आकुञ्चयेदित्यादि सक्थिद्वयं, तथा बाहू च त्रिराकुञ्चयेदेव इति शेषः। आकुञ्चनान्यथानुपपत्त्यैव प्रसारणमपि लभ्यते। तेन पादद्वयाङ्गुष्ठद्वयं पादतलं वा विधृत्य ततः सङ्कोच्य शनैः प्रसारयेदित्यर्थः। उक्तं हि चरके—“ईषच्च पादाङ्गुलिमुष्कमाञ्छेत्” इति। आञ्छेत् प्रसारयेदित्यर्थः। तत्र तु प्रसारणान्यथानुपपत्त्या आकुञ्चनं लभ्यत इत्येकवाक्यता च ज्ञेया। ततः परं बाहू च तदङ्गुष्ठद्वयञ्च विधृत्य ततः सङ्कोच्य प्रसारयेदिति। चरके तु बाहुसङ्कोचप्रसारणे नोक्ते इति शेषः। ताडयेदित्यादि।—स्फिचोश्चैनमिति छेदः। एनमातुरम्। तलयोः पादतलकरतल-

एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक्।
आस्तीर्णे शयने काममासीताचारिके रतः॥
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन् कार्य्यकृत्॥ ७॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै।
विना पीड़ां त्रियामस्थः स सम्यगनुवासितः॥ ८॥

---

यास्तथा स्फिचोश्च त्रींस्त्रीन् वारान् शनैः शनैस्ताडयेदिति मुष्टिना हन्यादिति। एतच्च ताडनम् अनुवासनस्नेहस्य शीघ्रनिःसरणं यथा न भवेदित्येतदर्थं क्रियते। यदाह दृढबलः—"दत्त्वा स्फिचौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थम्" इति। ततः श्रोणीं शय्यां विकृत्क्षिपेत्; तत इति शय्यामित्यनन्तरं प्रतीति शेषः, तेन शय्यां प्रति श्रोणीं त्रिकृत्क्षिपेदित्यर्थ इति श्रीकण्ठः। वयन्तु शय्यामित्यनन्तरं ततपार्ष्णिभ्यामिति शेषः; तेन तत्पार्ष्णिभ्याम् आतुरपार्ष्णिभ्यां शय्यां ताडयेदिति योज्यम्; उक्तं हि—"दत्ते तृप्तानदेहस्य पाणिना ताडयेत् स्फिचौ। ततपार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिकृत्क्षिपेत्" इति व्याचक्षते।—श्रोणीं त्रिकृत्क्षिपेदित्यर्थः। एतदपि पार्ष्णिभ्यां शय्याताडनं स्नेहशीघ्रागमनरक्षणार्थमेव ज्ञेयम्। एतस्य शीघ्रागमनरक्षणार्थं कर्म यद्यपि पश्चादुक्तं तथापि स्नेहशीघ्रागमनेन बस्तिं प्रयोजनता स्यादिति कृत्वा प्रथममेव कार्य्यम्। अतएव भानुमत्यां चक्रोऽप्याह स्फिचश्चैनमित्येतदपि पश्चादुक्तं तथाप्यभिधानक्रमतन्त्रत्वमकृत्वा प्रथममेव ज्ञेयमिति। मन्दायस इति अत्यल्पप्रत्यवायकरविक्षेपणादिशरीरचेष्टः। काममासीतेत्यनेन दृढबलोक्तगात्रमर्दनाङ्गुलीस्फोटादिकमिच्छतः कार्य्यमिति सूच्यते; उक्तं हि—"स्नेहेन पाण्यङ्गुलिपिण्डिकाश्च ये चास्य गात्रावयवा रुजार्त्ताः। तांश्चावमृद्गीत सुखं ततश्च निद्रामुपासीत कृतोपधानः" इति। आचारिके रत इति क्रोधादिवर्जनाद्याचारतत्परः। यदि तु स्नेहो दत्तमात्र एवातिमात्रत्वादिदोषेण निःसरति तदा किं कार्य्यमित्याह योज्य इत्यादि।—वाग्भटस्य। शीघ्रमिति त्रियामादर्वाक्। अत्र द्वितीयस्नेहदानमल्पमात्रयैव विधेयं, प्रथमस्नेहदानेनैव कोष्ठावलेपसिद्धत्वात् सुश्रुतेऽप्युक्तं तस्मान्योऽल्पतरो देय इति, पूर्वदत्तस्नेहादल्पतर इति॥ ७॥

सानिल इत्यादिना सौश्रुतानुवासनसम्यग्योगलक्षणमाह। विना पीड़ां त्रियामस्थ इत्यत्र उषाचोषौ विना शीघ्रमिति पाठे उषा दाहः, चोषा पिपासा, शीघ्रमिति यामत्रयाभ्यन्तरमेवेत्यर्थः॥ ८॥

क्वाथार्द्धमात्रया प्रातर्धान्यशुण्ठीजलं पिबेत्।
पित्तोत्तरे कदुष्णाम्भस्तन्मात्रं पिबेदनु ॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते।
अहोरात्रादपि स्नेहः प्रत्यागच्छन् न दुष्यति।
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ८ ॥

---

कोष्ठावलेपस्नेहपाकार्थमाह क्वाथार्द्धमात्रयेत्यादि।—यस्य पुरुषस्याग्न्याद्यपेक्षया यावान् संशमनः क्वाथः समर्हति तस्यार्द्धं धान्यशुण्ठीजलं षडङ्गविधिना कर्त्तव्यमिति चक्रः; ततश्च धान्यस्य द्वादश माषकाः, शुण्ठ्याश्च षट् चत्वारो वेति मिलित्वा कर्षमानत्वं ज्ञेयम्। एतच्च धान्यशुण्ठीजलं न प्रत्यहं देयं किन्त्वेकान्तरमिति तदुक्तं—"एकान्तरोपयोगेन धान्यशुण्ठीजलं पिबेत्" इति। उत्सर्गतस्तावदेकान्तरमेवानुवासनदानं, यस्मिन् दिवसे अनुवासनं न दीयते तस्मिन्नेव दिने धान्यशुण्ठीजलं देयम्, अनुवासनदिने तु न देयम्। यदाह चरकः—"युक्तस्नेहं द्रवोष्णञ्च लघुपथ्योपसेवनम्। भुक्तवान् मात्रया भोज्यमनुवास्यस्त्र्यहात् त्र्यहात्। धान्यनागररससिद्धं तोयं दद्याद्विचक्षणः। व्युषिताय निशां कल्यमुष्णं वा केवलं जलम्" इति व्युषितायेति अनुवासनस्नेहं दत्त्वा निशां व्युषितायेत्यर्थः। एतेन यस्मिन् दिने अनुवासनस्नेहो न दीयते तस्मिन्नेव दिने धान्यनागरसिद्धं जलं देयमिति बोधयतीति। कल्यमिति प्रातः। पित्तोल्वणे तु दोषे धान्यशुण्ठीजलं हित्वा कोष्णजलं देयमित्याह पित्तोत्तर इत्यादि।—तावन्मात्रमिति क्वाथप्रमाणम्। त्रियामस्थस्नेहस्य सम्यगनुवासनलिङ्गत्वं यदुक्तं तदपवादमाह अहोरात्रादित्यादि।—सुश्रुतस्य। "अहोरात्रादिति वस्तिप्रणिधानदिनरात्र्यभिप्रायेण, तेन यामत्रयात् परतोऽपि याममेकमनागच्छन्नपि स्नेहो न दुष्यति न व्यापदं करोतीत्यर्थः। वस्तिगुणानिति स्नेहनबृंहणादीन्। जीर्ण इति परिणतः, अल्पगुण इति वायुरभिभूय पाकं नीत्वा न सम्यक्स्नेहनादिकं करोति। वीर्य्येण देहं भावयित्वा प्रत्यागच्छन्नेव स्नेहो यथोक्तगुणकारक इति भावः। पक्वाशयस्थस्यापि स्नेहस्य पाकोऽग्निप्रत्यासत्त्या देहतेजसा च सञ्जात एव। अतएवोक्तं चरके—"एवमाशु जरां स्नेहो यात्यम्बु सिकतास्विव। एभ्योऽन्येषां त्र्यहात् प्रायः स्नेहं पचति पावकः" इति ॥ ८ ॥

यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः।
सर्व्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः संविजानता ॥ १० ॥
अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत्।
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते ॥ ११ ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः।
तदाङ्गसदनाध्मानशूलाः श्वासश्च जायते।
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम् ॥
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धञ्चाप्यनुवासनम् ॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः।
स्नेहवीर्य्यं तथा दत्ते स्नेहे नानुविसर्पति ॥ १२ ॥

---

इदानीं यः स्नेहः सर्व्वथा अनिःसृतः समुदायेनैकदेशेन वा यदि व्यापदं न करोति तदा तत्प्रवर्त्तनाय यत्नो न विधेय इत्याह यस्येत्यादि।—दृढबलस्य। अनिःसृतोऽपि स्तम्भरूपादिकमुपद्रवं न कुर्य्यादिति। अल्पो वा सृत इति स्तोकमिःसृतः स्तोकश्चावृत इत्यर्थः। आवृतस्यापि स्तम्भाद्युपद्रवाकरणे हेतुमाह रौक्ष्यादित्यादि।—शरीरस्याल्परूक्षतया तिष्ठन्नपि स्नेहो रूक्षशरीरं भावयन्नेव न व्यापदं करोतीत्यर्थः। अन्ये तु सर्व्वोऽल्पो वा धृत इति पठन्ति, रौक्ष्याच्छरीरोष्मणा वायुनावृतः प्रतिबद्धः स्नेहो निःसृतोऽपि व्यापदजनकत्वादुपेक्ष्य इत्याहुः। उपेक्ष्य इति न तत्र वाताद्यावृतस्नेहप्रवर्त्तनी चिकित्सा कार्य्येत्यर्थः ॥ १० ॥

अनायन्तमित्यादि।—सुश्रुतस्य। हरेदिति शोधनवस्तिभिरिति शेषः, अत एवाह स्नेहवस्तावित्यादि।—सुश्रुतस्य। नान्यस्नेहो विधीयत इति स्नेहातियोगभयात्। शोधनवस्तिस्तु दीयत एवेत्यर्थः ॥ ११ ॥

अचिकित्सितव्यापदमाह अशुद्धस्येत्यादि।—अशुद्धस्येति वमनेन विरेचनेन वा। तीक्ष्णमित्यनुवासनविशेषणम् अन्ये तु निरूहणमित्यस्य विशेषणमित्याहुः। वमनविरेकाभ्यां शुद्धस्यैव स्नेहवस्तिर्देयो न पुनरविशुद्धस्येत्याह स्नेहवस्तिरित्यादि। कुतो न विधेय इत्याह स्नेहवीर्य्यमित्यादि।—तथा दत्ते स्नेहे अविशुद्धदेहप्रयुक्ते स्नेहे सति स्नेहवीर्य्यं यस्मान्नानुविसर्पति। देहमिति शेषः। स्नेहमित्यत्र देहमिति पाठे तथा दत्त इत्यत्र स्नेहवस्ताविति शेषो बोध्यः ॥ १२ ॥

अशुद्धमपि वातेन केवलेनाभिपीड़ितम्।
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत्॥ १३॥
अनुवासयेत् तृतीयेऽह्नि पञ्चमे वा पुनश्च तम्।
यथा वा स्नेहपक्तिः स्यादतोऽप्युल्वणमारुतान्।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम्।
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः॥ १४॥

---

अशुद्धस्य स्नेहवस्तिर्न देय इति यदुक्तं तदपवादमाह अशुद्धमपीत्यादि।—केवलेनेति। निरावरणेन अहोरात्रस्य कालेष्विति अहोरात्रे वा ये कालाः पूर्वाह्न पूर्वरात्रादयस्तेष्वित्यर्थः॥ १३॥

एकमनुवासनं दत्त्वा कियता कालेनानुवासनं देयमित्याह अनुवासयेदित्यादि।—वाग्भटस्य। स्नेहपक्तिः स्यादिति छेदः। तमिति प्रथममनुवासितं तृतीये पञ्चमे वाहनि अनुवासयेत्; अत्र सति वृद्धवाते त्र्यहेऽनुवासनं देयं, मन्दाग्नौ वृद्धकफपित्ते तु पञ्चमदिनेऽनुवासनमिति व्यवस्था। यथा वा स्नेहपक्तिः स्यादित्यनेनाग्न्यपेक्षया उक्तकालातिक्रमोऽपि कार्य्य इति बोधयति। उल्वणवातादीन् प्रति तु प्रत्यहमेवानुवासनं देयमित्याह अतोऽपीत्यादि।—अतोऽपीति त्र्यहादिदेयानुवासनापेक्षयापीत्यर्थः। हारीतोऽप्याह—"दृष्टातिवृद्ध पवनस्य रूपं दिने दिने वस्तिमुदाहरन्ति" इति। सुश्रुतेऽप्युक्तं—"रूक्षस्य बहुवातस्य स्नेहवस्तिं दिने दिने। दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहात्" इति। अनयैवोक्तरीत्या निरूहानन्तरमनुवासनकालोऽप्यूहनीयः। यदाह दृढबलः—"त्र्यहे त्र्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्च" इति। एवं यस्मिन् दोषे यावन्त्यनुवासनानि देयानि तदपि चरकादावेवानुसर्त्तव्यानि। कियन्तः स्नेहवस्तयः प्रयोज्या इत्याह इतीत्यादि। वाग्भटस्य। ननु त्रिचतुर्भिः स्नेहैरित्यनेन चतुःसङ्ख्यवस्तिदानं विधीयते, तथा च विरोधः, उक्तं हि चरके—"वस्तीन् युग्मान् कुशलो विदध्यात्" इति; युग्मवस्तिदानञ्च प्रभावादेवायोपकारीति महर्षिवचनादुन्नीयते, यथा युग्मेष्वहःसु पुत्रकामौ संवसेतामिति; अयुग्मदानोपपत्तिश्चावातिप्रसङ्गेत्यनुकथिता आचार्य्येण; सत्यम्; अत्र त्रिचतुरैरित्यनेन युग्मवस्तिदानमुक्तं यत् तन्निरूहाङ्गतया स्नेहनार्थंक्रियमाणानुवासनविषयम्, अयुग्मवस्ति

विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।
दाहज्वरपिपासार्त्तिकरश्चात्यनुवासने ॥ १५ ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।
स्नेहात् पित्तकफोत्क्लेदो निरूहात् पवनाद्भयम् ॥१६॥
अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः।
विशेषतस्त्वमी पाण्डुकामलामेहपीनसाः ॥
निरन्नप्लीहविड्भेदी गुरुकोष्ठकफोदराः।

---

दानन्तु स्वतन्त्रक्रियमाणानुवासनविषयम्, अतो भिन्नविषयतया न विरोधः। किंवा चरके अयुग्मानित्यस्य सान्तरानित्यर्थः, तेन यत्राष्टत्यानुवासनं देयं तदयुग्मकं निरूहान्तरितं कर्त्तव्यम्; तेन नवसु एकादशसु वानुवासनेषु दत्तेषु यदि वायुर्न शाम्यति तदा तस्य मार्गावरणनिवृत्त्यर्थं निरूहं दत्त्वा पुनर्यथोक्तसंख्ययानुवासनं देयमित्यर्थः। स्निग्ध इत्यत्र देह इति शेषः। एवमस्निग्ध इत्यत्रापि। शोधनमिति निरूहविशेषणम्; स्नेहनमित्यनुवासनम् ॥ १४ ॥

अनुवासनयोगातियोगलक्षणमाह विष्टब्धेत्यादि।—सुश्रुतस्य। विष्टब्धान्यनिलविण्मूत्राणि यस्मात् स्नेहात् स तथा अनिलादिस्तम्भकर इत्यर्थः ॥ १५ ॥

निरूहानुवासनयोः परस्पराव्यवधानेन दोषमाह स्नेहवस्तिमित्यादि। चरकस्य। एकमेवेति परम्परान्तरितम्। उत्क्लेदः पित्तकफोत्क्लेशः, केचित्तु स्नेहात् पित्तकफोत्क्लेश इति पठन्ति। निरूहात् पवनाद्भयमिति निरन्तरनिरूहेण शरीरस्य शोधनातियोगात् पवनाद्भयं स्यादिति भावः। अनुवासनार्थञ्च तैलं पक्वमेव ग्राह्यम्, नापक्वम्। यदाह दृढ़बलः—"न चामं प्रणयेत् स्नेहं यदभिष्यन्दयेद्गुदम्" इति। अनुवासनार्थञ्च तैलं यद्यप्यस्मिन् प्रकरणे नोक्तं तथापि वातव्याध्युक्तमेव 'नारायण-तैलादिकमिहाप्यनुवासनीयम् ॥ १६ ॥

येषामनुवासनं न देयं तानाह अनास्थाप्या इत्यादि।—आस्थापनं निरूहणम्, अनास्थाप्या अनिरूह्या इत्यर्थः। अतिदेशेनानुवासनीयानभिधाय विशेषतो ये नानुवासनीयास्तानाह विशेषत इत्यादि।—वाग्भटस्य। कृताहारोऽप्यनास्थाप्यत्वेन वक्तव्यः ततश्च "अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः" इत्युक्तेः कृताहारस्यानुवास्यत्वं स्यादतस्तन्निराशार्थमत्र निरन्न उक्तः। आध्मातत उद-

अभिष्यन्दभयस्थूलक्रिमिकोष्ठाढ्यमारुताः ।
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ॥ १७ ॥
अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥
श्वासकासप्रसेकार्शोहिक्काध्मानाल्पवह्नयः ।
शूलपायुः कृताहारो बद्धच्छिद्रदकोदरी ॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥ १८ ॥
न चैकान्तेन निर्दिष्टेऽप्यत्राभिनिविशेद्बुधः ।
भवेत् कदाचित् कार्य्यापि विरुद्धापि मता क्रिया ॥
छर्द्दिहृद्रोगगुल्मार्त्ते वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥ ८ ॥

इत्यनुवासनाधिकारः ।

---

स्तम्भः । एषाञ्च पाण्ड्वादीनामनुवासनेन ये दोषास्ते चरके पञ्चकर्मीयसिद्धावनुसन्धेयाः, इह तु विस्तरभयान्नोक्ताः ॥ १७ ॥

अनास्थाप्यानाह अनास्थाप्या इत्यादि ।—वाग्भटस्य । अत्राप्यतिस्निग्धादीनामास्थापनदोषास्तत्रैवानुसन्धेयाः । मासान् सप्त च गर्भिणीयत्यन्तसंयोगे द्वितीया । तत्रैकमासात् प्रभृति सप्तमासपर्य्यन्तं वस्तिनिषेध इति ॥ १८ ॥

इदानीं वमनविरेचनवस्त्यधिकारे वमनाद्यविषयत्वेन तथा वमनादिविषयत्वेन प्रतिपादितेषु वमनादिनिवृत्तिप्रवृत्तिनियमं निषेधयन्नाह न चैकान्तेनेत्यादि ।—दृढबलस्य । 'निर्दिष्टेऽप्यर्थे एकान्तेन नाभिनिविशेत् यथोक्त एवार्थः कार्य्य इति निर्बन्धं न कुर्य्यादित्यर्थः । अथ किमर्थं यथोक्तार्थस्यैवार्थस्यावधारणं न क्रियत इत्याह भवेदित्यादि ।—यतो विरुद्धत्वेन शास्त्राभिमतापि क्रिया कदाचिदवस्थावशेन कार्य्या भवेत् । चरकेऽप्युक्तम्—"उत्पद्यते हि सावस्था देशकालबलं प्रति । यस्यां कार्य्यमकार्य्यं स्यात् कर्म कार्य्यञ्च वर्जितम्" इति । इदानीं निषिद्धमप्यवस्थावशेन क्रियत इत्युदाहरणमुपन्यस्य दर्शयति, छर्द्दिहृद्रोगेत्यादि ।—वाग्भटस्य । अवाम्यादीनामपि छर्द्यादीनां वमनं स्वे चिकित्सिते छर्द्यादिचिकित्साध्याये अवस्थां प्राप्य निर्दिष्टमित्यर्थः । अवस्थां प्राप्य निर्दिष्टमित्यनेनावस्थाविशेष एव निषिद्-

विधानम्, सामान्यतस्तु निषेध इति। उत्सर्गापवादतया निषेधनिषिद्धकरणयोरविरोध इति दर्शयति, एवमन्यत्रापि निषेधविषये वमनादिविधानमवस्थाविशेषपरतया समाधेयम् ॥ १९ ॥

इत्यनुवासनाधिकार विवृतिः ।

---

# अथ निरूहाधिकारः ।

अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ॥ १ ॥
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ।
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।
मधुस्नेहनकल्काख्यकषायावापतः क्रमात् ।
त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिषु ॥

---

अनुवासनेन स्निग्धस्य निरूहविधानादनुवासनाधिकारमनु निरूहमाह अनुवास्येत्यादि।—तृतीयेऽह्नीति अनुवासनदिनमारभ्य तृतीयदिन इत्यर्थः। तृतीयेऽह्नीति प्रायिकं ज्ञेयं पञ्चमे तद्विधानात्, यदाह वाग्भटः—"पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे।" निरूहनिरुक्तिश्च सुश्रुते—"यथादोषनिर्हरणाच्छरीर रोहणाद्वा निरूहः" इति। शरीररोहणन्तु वयःस्थापनेन शरीरपुनर्नवीकरणम्, अतएवास्थापनमपि निरूहस्य संज्ञान्तरं वयःस्थापनादायुःस्थापनाद्वेति ॥ १ ॥

निरूहदानसमयमाह मध्याह्न इत्यादि।—वाग्भटस्य। किञ्चिदावृत्त इत्यल्पवलिते। अभ्यक्तस्वेदितोत्सृष्टमलमिति अभ्यक्तेत्यनेन अभ्यङ्गविषयेऽपि स्नेहयोग कर्त्तव्यतया वा अनुजानाति। स्वेदो यद्यपि पञ्चकर्मपूर्वकतयाक्तोऽपि च्यत एव, यदुक्तम् "अनुपस्थितदोषाणां स्नेहस्वेदोपपादनैः। पञ्चकर्माणि कुर्वीत" इति तथाप्यभ्यङ्गक्रियमाणस्नेहसहचरत्वेऽपि स्वेदविधानार्थं स्वेदितेत्युक्तम्। उत्सृष्टमलमिति त्यक्तपूर्वपुरीषम्। नातिबुभुक्षितमिति बुभुक्षितस्य हि निरूहोऽतिर्यीयायोर्द्धगमनाय च स्यादिति भावः। निरूहोऽपि पञ्चाङ्गी भवति। अतो मध्वादेरङ्गपञ्चकस्य दोषभेदेन मानभेदार्थं परिभाषामाह मध्वित्यादि।—स्नेहनं पक्वतैलम्, आमस्य निषिद्धत्वात्; किंवा स्नेहशब्देनात्र मज्जानं वर्जयित्वा स्नेहत्रयस्य ग्रहणम्, यदुक्तं—"त्रिविधस्त्रिविधः स्नेहो वक्ष्यते मज्जवर्जित" इति।

पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम् ।
षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ॥ २ ॥
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतद्वयम् ।
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् ।
सम्मूर्च्छितं कषायं तं पञ्चप्रसृतसम्मितम् ॥
वितरेत्तु यथावापमन्ते द्विप्रसृतोन्मितम् ।
वस्त्रपूतं तथोष्णाम्बु कुम्भीवाष्पेण तापितः ।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ॥ ३ ॥

---

मदनफलशतपुष्पादीनां कल्कः । आवापशब्देन तु मधुस्नेहकल्कक्वाथ-व्यतिरिक्त क्षीरमूत्रकाञ्जिकजम्बीरमांसरसादि द्रव्यमुच्यते घृतादौ पुनरावापशब्देन प्रक्षेप "कल्को वाप्यभिधीयते" इति । अनिलरोगेषु क्रमात् यथासंख्य मधुनस्त्रीणि पलानि, स्नेहस्य षट्, कल्कस्य द्वे, कषायस्य दश, त्रीणि चावापस्येति एवं मिलित्वा द्वादशप्रसृतो निरूहो भवति, प्रसृतन्तु पलद्वयमिति । एव पित्तश्लेष्मणोश्च व्याख्येयम् । द्विपञ्चेति दश इत्यर्थः । इदन्तु यद्द्वादशप्रसृतमान निरूहस्याक्त तदष्टादशवर्षमारभ्य सप्ततिवर्षपर्य्यन्त बोध्यम्, तेन वयोभेदेन निरूहमानाभ्द्र चरकादावनुसरणीयः । तेन यत्र द्वादशप्रसृतापेक्षया हीनमात्रो निरूह कर्त्तव्यो भवति तत्र मधुस्नेहादीनामुक्तमात्रानुसारेण मात्रा कल्पनीया । द्वादशप्रसृताधिक मात्रा च न कर्त्तव्यैव, उक्तं हि चरके द्वादश पर स्युरिति, परशब्दोऽवधारण द्वादशैव प्रसृताः स्युरित्यर्थः । एतच्च चरकवचनं परमतप्रक्षेपणार्थे ज्ञेयम्, तत्र सुश्रुते "द्वादशप्रसृत किञ्चित् विंशत्पलमथापरं" इत्यनेन यदेकीयमतमुपन्यस्त तत प्रतिक्षिपति, द्वादशप्रसृताधिकमानस्य महात्ययत्वादिति । हारीतेऽप्युक्तम्- अष्टादर्क परमतप्रमाणमिति ॥ २ ॥

निरूहे द्रव्यसयोजनाक्रममाह दत्त्वेत्यादि ।—सुश्रुतस्य । प्रथमं शिलादिखर मसृणभाजने तथोक्तमानं मधुसैन्धवचूर्णञ्च स्थापयित्वा चिरं घर्षण कार्य्य यावदेकं भवति, तदनु स्नेहप्रसृतद्वयमपि मधुना सार्द्धं मथ्नीयात् यावदेकीभवति, एकीभूते च स्नेहे कल्कस्य प्रसृतं कषायस्य पञ्च प्रसृतानि दत्त्वा आलोड़येत्, तदनु

न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च।
न करोति च सीमन्तं स निरूहः सुयोजितः ॥ ४ ॥
पूर्वोक्तेन विधानेन गुदवस्तिं निधापयेत्।
त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥
जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना।
कृष्टेनैवच्छटाशब्दशतं तिष्ठेदवेगवान् ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः ॥ ५ ॥

---

नतद्वयमावापं वितरेदित्यर्थः। अयञ्च निरूहद्रव्यसंयोजनक्रमः पित्ते चत्वारि चत्वारीत्याद्युक्तमानसंवादात् पित्तोक्तनिरूहमानमधिकृत्य यद्यप्युक्तस्तथापि एकत्रोक्तो विधिरन्यत्राप्युपतिष्ठत इति न्यायात् कफवातोक्तनिरूहेऽपि ज्ञेयः। द्वादशप्रसृत इति यद्यप्यत्र सैन्धवाद्यमधिकमपि भवति तथाप्यल्पत्वादविगणय्योक्तं द्वादशप्रसृत इति ॥ ३ ॥

इदानीं सम्यग्योजितस्य निरूहस्य लक्षणमाह न धावतीत्यादि।—औषधमिलितमधुस्नेहकषायकल्करूपं निरूहौषधं पाणिं न धावति तनुतया प्रक्षालितमिव हस्तं न करोतीत्यर्थः। तथातिघनतया पाणिमवलिप्य यदौषधं न तिष्ठति तथा तदौषधं सीमन्तं तैलादिरेखां न करोति न दर्शयति। सुयोजित इति सम्यग्योजितः ॥ ४ ॥

औषधयोजनानन्तरं यद्विधेयं तदाह पूर्वोक्तेनेत्यादि।—पूर्वोक्तेनेत्यनुवासनोक्तेन। वस्तिमिति निरूहम्। स च वस्तिः कियन्तं कालं गुदे स्थाप्य इत्याह त्रिंशन्मात्रेत्यादि।—मात्रास्वरूपञ्चाग्निवेशेनोक्तं यथा—"यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम्। निमेषोन्मेषकालो वा सा मात्रा परिकीर्त्तिता" इति। उत्कटुक उकड़ीति लोके। एतच्च त्रिंशन्मात्रोपस्थापनं मृदुकोष्ठं वेगवन्तञ्च प्रति बोध्यम्। अवेगवन्तं क्रूरकोष्ठञ्च प्रति यद्विधेयं तदाह जानुमण्डलेत्यादि।—कृष्टेनैव हस्ताकृष्टेनाङ्गुलिकः। दत्तं छटाशब्दमित्यन्वयः छटा तुड़ीति लोके। कियती छटा देयेत्याह द्वितीयमित्यादि।—अत्र दद्यादिति शेषः। चतुर्थं वा यथार्थत इति निरूहसाध्यप्रयोजनानुरोधात् चतुर्थमपि पुटकं दद्यादित्यर्थः। ननु दृढबलेन चतुर्थस्तिदानं न मन्यते ; यथा—"स्निग्धोष्ण एकः पवने समासौ द्वौ स्वादुशीतौ

सम्यङ्निरूढलिङ्गे तु प्राप्ते वस्तिं निवारयेत् ॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि ।
रोगोपशान्तिः प्रकृतिस्थता च बलञ्च तत् स्यात् सुनिरूढलिङ्गम्
॥ ६ ।

अयोगश्चातियोगश्च निरूहस्य विरिक्तवत् ॥
स्निग्धोष्ण एकः पवने समांसो
द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णरूक्षाः
कफे निरूहा न परं विधेयः ॥
एकोऽपकर्षत्यनिलं स्वमार्गात् ।
पित्तं द्वितीयस्तु कफं तृतीयः ॥ ७ ॥

---

पयसा च पित्ते । त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ।
तथा वाग्भटेऽप्युक्तं—"त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः । न हि
दोषश्चतुर्थोऽस्ति पुनर्दीयेत यत् प्रति" इति । नैवम्, निषिद्धेऽपि वहुस्तक विषय
तया प्रायिकम्, चतुर्थपुटकदानन्तु क्वचित् क्रूरकोष्ठे बलीयसि मृदुदोषे च प्रकृत
इति भिन्नत्वविषयतया न विरोधः । अतएव यथोक्त इत्युक्तम् ॥ ५ ॥

वस्तिनिवारणविधिमाह सम्यगित्यादि ।—तदेव सम्यग्लिङ्गमाह प्रसृष्ट
त्यादि ।—दृढबलस्य । प्रसृष्टं सम्यक् प्रवृत्तम् । आशयलाघवानीत्यत्र आमय
लाघवानीति पाठे रोगोपशान्तिरित्यनन्तरं वा शब्दो ज्ञेयः । तेन निरूहसाध्यानां
विकाराणां लाघवमुपशान्तिर्वा भवतीत्यर्थः । रोगोपशान्तिरिति वचनं रोगविषयम्
प्रकृतिस्थतेति तु सुस्थविषयम्, तेनात्र पौनरुक्त्यं नाशङ्कनीयम् ॥ ६ ॥

अनुवासनयोगातियोगलक्षणं निरूहेऽप्यतिदिशति अयोगश्चेत्यादि । इदानीं
दोषभेदेन वस्तिपुटकसंख्यां नियमयन्नाह स्निग्धोष्ण इत्यादि । एक इत्येकपुटक
समांस इति मांसरससहितः । उक्तं हि वाग्भटे—"वस्तिरेकोऽनिले स्निग्ध
स्वाद्वम्लोष्णो रसान्वितः" इति । वाते स्निग्धोष्णस्तथा मांसरससहितस्तथा एक एव
निरूहपुटको देयो न त्वधिकः । समांस इत्यत्र निरूह इति केचित् पठन्ति
निरूहोऽत्र पुटकाभिधायी । पयस चेत्युपलक्षणे तृतीया, पयसा युक्त विरुक्ष

अनायान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसंयुतैः॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वराटोपान् मरणं वा प्रयच्छति॥ ८॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः।
आमं तद्धि हरेद्भुक्तं छर्दिं दोषांश्च कोपयेत्॥ ९॥

---

कटुष्णतीक्ष्णत्वञ्च कटुकादिद्रव्ययोगादेव ज्ञेयम्। न पर विधेया इत्यनेन सुश्रुतोक्त चतुर्वस्तिदानमत्यर्थशरीरहिंसकं निषेधयति। वाग्भटेऽप्युक्तं—"विंश पर वस्तिमतो नेक्षन्त्यन्ये चिकित्सकाः। न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत य प्रति" इति। अस्यैव दोषभेदेनोक्तस्य वस्तिपुटकसंख्यानदस्य फलमाह एकोऽपकर्षतीत्यादि।—स्वमार्गादिति स्वस्थानात्, एतच्चानिलादि सर्वत्रैव योज्यम्। अनिलस्य हि पाकाशयः स्थानम् तस्य प्रत्यासन्नत्वादेकपुटकोऽप्यनिलमपकर्षति, द्वितीयादि पुटकदानं तत्र निष्फलमिति भावः। एवं पित्ते तृतीयपुटकदानम्, कफे चतुर्थपुटकदानं न कार्य्यम् फलाभावात्। पक्वाशयादित्वया पित्ताशयस्य व्यवहितत्वात् द्वितीयं पित्तं स्वाशयादपकर्षति, ततोऽपि कफाशयस्य व्यवहितत्वात् तृतीयपुटकः कफमपकर्षति। स्वमार्गादित्यनेन यदि दोषाः स्वस्थानस्था भवन्ति तदैवायं नियम इति बोधयति, तेन यदि पित्तकफौ पक्वाशयस्थौ भवतः तदा प्रथमपुटकोऽपि तत्स्थानगतपित्तकफप्रशमनं करोति, तथा द्वितीयतृतीयावपि पित्तकफस्थानगतवायुप्रशमनं कुरुत इति ज्ञेयम्। पित्तकफयोस्तु यद्यपि मुख्यं चिकित्सितं वस्तिदानं न भवति तथापि वातावरके वातानुबन्धे वा पित्तकफे चैतद्वस्तिदानं ज्ञेयम्। तदुक्तं सुश्रुते—"वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" इति। वस्तेस्तु प्राधान्यतो वस्तिमतदोषहरत्वमौत्सर्गिकम्, तेन पित्तादिस्थाने विशेषवस्तिविधानसामर्थ्यात् पित्तादिस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ ७॥

यदा कालचर्य्यानिरूहो न प्रवर्त्तते तदा किं कर्त्तव्यं तदाह अनायान्तमित्यादि। सुश्रुतस्य। मुहूर्त्तो नाड़िका। शोधनैरिति, शोधनद्रव्यकृतैः। निरूहस्य चिरस्थानगतदोषहरणमप्यपवादरूपतया न विरुध्यते॥ ८॥

भुक्तवतो निरूहदानप्रतिषेधमाह न त्वित्यादि।—स्थितिरित्यायुर्वेदनिश्चयः। हरेदित्यधो हरेत्, छर्दिमित्यूर्द्ध्वं जनयेदिति शेषः॥ ९॥

आवस्थिकः क्रमश्चापि मत्वा कार्य्यो निरूहणे ॥ १० ॥
अतिप्रपीड़ितो वस्तिरतिक्रम्याशयं ततः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥
छर्दिश्वासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च।
तत्र चूर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम्।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥ ११ ॥
सुनिरूढ़मथोष्णाम्बु स्नातं भुक्तवन्तमोदनम्।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२ ॥

---

अवस्थावशेन यथोक्तक्रमव्यभिचारं दर्शयन्नाह आवस्थिक इत्यादि।—तस्यैव। मत्वेत्यवस्थां बुद्ध्वा, निरूहणे आवस्थिक इत्यवस्थोचितः क्रमः कार्य्यः, तेनावस्था विशेषे निषिद्धनिरूहेऽपि प्रतिकारं चिन्तयित्वा निरूहो देय एवेत्यर्थः। यथा भुक्तवतो निषिद्धोऽपि निरूहोऽत्यर्थशूलवेदनायां वैतरणवस्तिरूपो दीयते तथा उदरादिषु निषिद्धो निरूहोऽवस्थायां किमिति निरूह एव क्रियते चिकित्सान्तरमन्यत् कथं न क्रियते इति वाच्यम्; वस्तिगतदोषे हि मलावृते वस्तिरूपं प्रधानं चिकित्सितं मलापहरणेन दोषान् क्षपयति, न तत्र चिकित्सान्तरं प्रभवति, अतस्तस्यामवस्थायामनर्हनिरूहाणामपि दोषमलहरो निरूहो देय एवेति ॥ १० ॥

वस्तेरतिपीडनेन दोषमाह अतिप्रपीडित इत्यादि।—सुश्रुतस्य। आशयमिति पक्वाशयादिकम्। नासिकाभ्यामिति नासापुटाभ्याम्। आदिशब्दादाध्मानादयः। अत्र यत् प्रतिविधेयं तदाह तत्रेत्यादि।—गलापीड़मिति गलपीड़नम्, एतच्च तथा कार्य्यं यथा न म्रियते। उक्तं हि—"वस्त्रपाणिग्रहैः कण्ठं रुन्ध्यान्न म्रियते यथा" इति। अवधूननमित्यत्र केशेष्वाकृष्येति शेषः। उक्तं हि—"केशेष्वालम्ब्य वा केशे धुनुयात्" इति। एतच्च वस्तिव्यापच्चिकित्सितं लेशत एवोक्तम्; विस्तरन्तु चरकादावनुसन्धेय इति ॥ ११ ॥

निरूहस्य सम्यग्योगानन्तरं यद्विधेयं तदाह सुनिरूढमित्यादि।—सुश्रुतस्य। उष्णाम्बुस्नातमिति शिरो विहाय ज्ञेयम्; शिरसि तु शीतलजलेनेति वृद्धा व्यवहरन्ति। अत्र केचित् षडङ्गविधिना नागरसाधितमुष्णोदकं पानार्थमुपदिशन्ति। यदुक्तम्—'ततः प्रत्यागते वस्तौ वाप्युष्णं नागरैः शृतम्। पाययेत् कृतशौचञ्च स्नापयेदुष्णवारिणा" इति। स्नेहवस्तिनेति।—स्नेहवस्तिदानन्तु दृढबलेनोक्तं यथा—"प्रत्या-

तदहस्तस्य पवनाद्भयं बलवदिष्यते।
रसौदनस्तेन शस्तस्तदहश्चानुवासनम्॥ १३॥

अर्द्धमात्रिकः—

दशमूलीकषायेण शताह्वाञ्च प्रयोजयेत्।
सैन्धवाच्च मधुनो द्विपलं द्विपलं तथा॥
तैलस्य फलमेकन्तु फलस्यैकत्र योजयेत्।
अर्द्धमात्रिकसंज्ञोऽयं वस्तिर्देयो निरूहवत्॥
न च स्नेहो न च स्वेदः परिहारविधिर्न च।
आत्रेयानुमतो ह्येष सर्वरोगनिवारणः॥

---

कोष्णजलाभिषिक्तः शाल्यन्नमद्यात् तनुलावनेन। जीर्णे तु सायं लघु चाल्प- व भुक्तानुवास्यः परिहंहणार्थम्। निरूहपादांशसमेन तैलनाम्लान लघु। समाधिनेम" इति। निरूहपादांशसमेनेति निरूहपादप्रमाणेन, चतुर्विंशतिपल पलेन स्नेहेनेत्यर्थः। इयञ्चोत्तममात्रानुवासनस्य उक्तञ्च।—"उत्तमा षट्पला वा मध्यमा त्रिपली भवेत्। कनीयसी त्वर्द्धपला त्रिधा मात्रानुवासने" इति। ाच षट्पलो मात्रा प्रबलाग्निं प्रत्येव बोध्या। अन्ये त्वाहुः निरूहदानदिने स्नेहवस्तिर्दीयते सोऽल्पमात्र एव, न तु षट्पलः, निरूहव्याकुलिताग्नित्वात्, तथाह भोजः—"सम्यङ् निरूढं तैलाक्तं जलेनोष्णेन सेचितम्। योजय मात्रेण तत्क्षणं स्नेहवस्तिना" इति। अत्र तत्क्षणमिति तद्दिनोपलक्षणम; न सायं दीयते स्नेहवस्तिः। तस्मादत्र सार्द्धपलरूपा वरमात्रा स्नेहस्य ज्ञेया। चैव चरकविरोधः; चतुर्विंशतिपलस्य निरूहस्य पादः षट्पलं तस्यांशश्चतुर्थो ाग, सार्द्धैकपलं तत्समं तैलमिति हि तदर्थः। इहाप्तु सार्द्धपलेन स्नेहेनानुवासनं र्वन्ति निरूहस्य मन्दाग्नित्वात्॥ १२॥

कुतो मांसरसः स्नेहवस्तिश्च तत्रोपदिश्यत इत्यत आह तदहरित्यादि।— निरूढकृतमलदोषस्य रूक्षत्वेन वातात् भीतिरिति भावः॥ १३॥

इदानीं निरूहयोगा वाच्याः। तत्र प्रथमं प्रसिद्धत्वादर्द्धमात्रिकवस्तिमाह दशमूलीत्यादि।—चन्द्राटीका: तत्वान्तरस्य। उत्सर्गसिद्धचतुर्विंशतिपलनिरूहा- पेक्षया मात्रार्द्धम येति कृत्वा द्वादशपलोऽयं निरूहो ज्ञेयः अर्द्धमात्रिक इत्युक्तः।

स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवे च।
एतान्यनुक्तानि च दापयेच्च निरूहयोगे मदनात् फलञ्च॥
लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम्॥ १५॥
वाते गुडः सिता पित्ते कफे सिद्धार्थकादयः॥ १६॥
अथ क्षारवस्तिः—
सैन्धवाक्षं समादाय शताह्वाक्षं तथैव च।
गोमूत्रस्य पलान्यष्टाविम्लिकायाः पलद्वयम्॥
गुड़स्य द्वे पले चैव सर्वमालोड्य यत्नतः।

---

हलफा क १, सैन्धव क १, मधु प २, पक्वतैल प २, पिष्टमदनफल गो १, पुराण-गुड क १, आस्थीसहितसुपक्वतिन्तिडीफल क १, सुपक्वमातुलुङ्गरस जम्बीररस-मांसरस काञ्जी-गोमूत्र प्र क १, मा ५; एतत सर्वं पूर्वोक्तमयोजनपरिपाट्या मेल-यित्वा वस्त्रे छृत्वा वाष्पस्वेदेन कदुष्णीकृत्य ग्राह्यम्, तदनु गव्यदुग्ध क १, मा ५, नविप्यालोड्य चर्मपुटके प्रक्षेप्यमिति। एतदेव विधान द्वितीये तृतीयेऽपि ज्ञेयम। [इत्यर्द्धमात्रिकः]॥ १४॥

इदानीं सर्वेष्वेव निरूहेषु चानुक्तान्यन्यद्रव्याणि अवश्यप्रक्षेप्याणि, तानि दापयितु हारीतवचनमुपन्यस्यति स्नेह गुडमित्यादि। सुश्रुतस्त्वे तदधिकमप्याह—"क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा। लवणानि फल क्षौद्र शताह्वा सर्षपा वचा। एला त्रिकटुक रास्ना सरल देवदारु च। रजनी मधुक हिङ्गु, कुष्ठ संशोधनानि च। निरूहेषु यथालाभ एष वर्गो विधीयते" इति। सैन्धव मदनफलयोर्मिलितनियतमानमाह लवणमित्यादि।—फलमेकमित्याकृतिमानात् ॥ १५॥

दोषभेदेन गुडिकादीनां प्रक्षेप्यत्वमाह वात इत्यादि। आदिशब्दात् सुश्रुतो-क्तवचात्रिकटुकादीनां ग्रहणम्। अत्रान्तरे चरकोक्त एरण्डवस्तिद्दष्टफलो बोध्य.। सोऽप्यर्द्धमात्रिकोक्तकल्पनानुसारेणार्द्धमात्रिकयैव वृद्धैः प्रयुज्यते। स चात्र विस्तरभयान्न विहृत इति तत्रैवानुसन्धेयः॥ १६॥

क्षारवस्तिमाह सैन्धवाक्षमित्यादि।—वस्तिरयमेतावन्मात्र एव दीयते, इयञ्च मात्रा एकपुटकस्य। अम्लिकाया इति साम्लितिन्तिड़ीफलस्य। निरूहयोगे

वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः ॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम् ।
क्रिमि्युदावर्त्तगुल्मादीन् सद्यो हन्यान्निषेवितः ॥ १७ ॥

इति क्षारवस्तिः ।

अथ वैतरणवस्तिः—

पलशुक्तिकर्षकुडवैरम्लीगुड़सिन्धुजन्मगोमूत्रैः ।
तैलयुतोऽयं वस्तिः शूलानाहामवातहरः ॥
वैतरणः क्षारवस्तिर्भुक्ते चापि प्रदीयते ॥ १८ ॥

इति वैतरणवस्तिः ।

---

मदनात् फलञ्चेत्युक्तत्वात् एव मदनफलमप्यत्र वृद्धैर्दीयते। अतएव चन्द्राटोऽप्याह —"गोमूत्रस्य पलान्यष्टौ द्वे गुडाम्लिकयोः पले। कर्षञ्च शतपुष्पायास्तथा च सैन्धवस्य च। मदनस्य फलञ्चैकं खजेन सुविलोडितम्। वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः। वातविट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्। शूलोदावर्त्तगुल्मादीन सद्यो हन्यात् प्रयोजितः। गोमूत्रवस्तिरित्येष विज्ञेयः शोधनः परः। क्षित साधारणे रूक्षः शुद्धे तु तैलमयुत.। बलवर्णकरः पुंसामग्निसन्दीपनः परम्" इति। अस्मादेव वचनात् गोमूत्रवस्तिरित्यपि सञ्ज्ञान्तरमस्य बोध्यम्। तथा निरावरणे तु तैलमपि देयं तैलञ्च पलमान बोध्यम्। तदुक्तमायुर्वेदसारे—"अष्टौ पलानि मूत्रस्य गुडस्य तु पलद्वयम्। तद्वदम्लीफलं दत्त्वा मिश्रयेच्च सैन्धवस्य च। रूक्ष सामेऽनिलैर्युक्तश्चापि तैलपलान्वितम्। क्षारवस्तिमिमं सिद्धं वातोदावर्त्तनाशनम्" इति। इदानीं क्षारवस्तेः पत्रिका लिख्यते, सैन्धवचूर्णक १, शतपुष्पाकल्क क १, गोमूत्र पल ८, सुपिष्टास्थिसहितपक्वतिन्तिडीफल पल २, पुराणगुड पल २, सुपक्वमदन गो १, निरामवाते पक्वतैल पल १। एतत् सर्वं पूर्ववन्मर्दयित्वा वस्त्रपूतं कृत्वा कदुष्णीकृत्य देयम्। [इति क्षारवस्तिः] ॥ १७ ॥

वैतरणवस्तिमाह पलशुक्तीत्यादि।—शुक्तिरर्द्धपलम्। अम्लीति तिन्तिडीफलम्। पलादिमानञ्च क्रमात् अम्लीगुड़ादिषु योज्यम्। कुड़वोऽत्र द्रवद्वैगुण्यादष्टौ पलानि, केचित्तैलपलमिति व्यवहरन्ति वृद्धाः। अत्रापि मदनफलमेकं देयमित्याहुः। इयमपि वैतरणीक्रमात्वा एकपुटकस्यैव मे वा। अत्यन्तशूलपीडायां वस्तिद्वयमिदं शुभं

अथ पिच्छिलवस्तिः—

बदर्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्राः पिच्छिलसंज्ञिताः॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कटम्।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु॥ १९॥
चरकादौ समुद्दिष्टा वस्तयो ये सहस्रशः।
व्यवहारो न तैः प्रायो निबद्धा नात्र तेन ते॥ २०॥

वस्तिर्वयःस्थापयिता सुखायु-
र्बलाग्निमेधास्वरवर्णकृच्च।
सर्वार्थकारी शिशुवृद्धयूनाम्
निरत्ययः सर्वगदापहश्च॥ २१॥

इति निरूहाधिकारः।

---

ऽपि दीयत इत्याह वैतरण इत्यादि।—अत्यन्तशूलावस्थायां पीडायामावश्यिकमिद विधान बोध्यं न तु सार्वकालिकं भुक्ते निरूहस्यातिदोषलत्वात्। किन्तु भुक्ते ऽनुवासनवस्तिर्न प्रचरति, वैतरणस्तु चरत्येव। एतदपि दुर्बलविषयमेव ज्ञेयं, तदुक्तं—"भोजयित्वाथ सायाह्ने दुर्बलस्य प्रशस्यते। अथ चेद् बलवान् जन्तुरभुक्तेऽपि तदा क्वचित्" इति। [इति वैतरणवस्तिः]॥ १८॥

पिच्छिलवस्तिमाह बदरीत्यादि।—सुश्रुतस्य। ऐरावती नागरबला, शेलु बहुवार; धन्वनी धामनीरिति प्रसिद्धस्तरुः। एषामङ्कुरा अभिनवपल्लवाः। अत्र ऽप्यस्याप्येको भागः। त्रयो भागा जलस्येत्याहुः। सास्राः सरक्ताः। रक्तञ्च येषां ग्राह्यं तानाह वराहेत्यादि।—एतच्च शोणितं मर्दितमेव वस्तौ देयं, सद्यस्कं मृदितं वस्तिरिति चरकवचनात्। अयञ्च वस्तिर्यथोक्तद्रव्यमानेनैव कार्य्यः। मात्रा वाताऽईमाविकवस्तिवत्, मधुतैलिकवस्तिवदित्याहुः। [इति पिच्छिलवस्तिः]॥१९॥

इदानीं चरकाद्युक्तानामन्येषां वस्तीनामनभिधाने उपपत्तिमाह चरकादावित्यादि।—प्राय इति वचनात् तेऽप्यवस्थायां प्रयोज्या इति सूचयति॥ २०॥

वस्तिसामान्यगुणानाह वस्तिरित्यादि।—सर्वगदापह इति मिलितसर्वदोषापहः किं वा त्रैदोषिकव्याधिहर इति चरकव्याख्या अन्यथाव्याख्याने तु श्लेष्मपित्तानिला-

## अथ नस्याधिकारः ।

प्रतिमर्शोऽवपीड़श्च नस्यं प्रधमनं तथा ।
शिरोविरेचनञ्चेति नस्तः कर्म च पञ्चधा ॥
ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्तो निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ॥ १ ॥
प्रतिमर्षन्तु नस्यार्थं करोति न च दोषवान् ।
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ॥
न चोच्छिङ्घेदरोगाणां प्रतिमर्षः स दार्ढ्यकृत् ॥ २ ॥

---

कर्षीत्यनेन, तथा सर्वान् विकारान् शमयेदित्यनेन च न पौनरुक्त्यं स्यात् । इदमप्यत्र सुश्रुतवचनं बोध्यं—"नरस्योत्तमसत्त्वस्य तीक्ष्णवस्तिं प्रयोजयेत् । मध्यं मध्यमसत्त्वस्य हीनसत्त्वस्य वै मृदुम् । अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम् । विशेषात् सुकुमाराणां हीन एव क्रमो हितः" इति ॥ २१ ॥

इति निरूहाधिकारविवृतिः ।

---

पञ्चकर्मपारिशेष्यान्नस्यमाह प्रतिमर्श इत्यादि । प्रतिमर्षलक्षणमाह ईषदित्यादि । —सुश्रुतस्य । ईषदुच्छिङ्घनादिति ऊर्द्ध्वश्वासक्षेपणात् । ननु चरके न चोच्छिङ्घेदित्युक्तम्, अत्र तु ईषदुच्छिङ्घनम्, उक्तमतो विरोधः ? अत्र केचिदीषदुच्छिङ्घनमनुच्छिङ्घनमेवेति समादधति, अन्ये तु चरकोक्तप्रतिमर्षः स्वल्पप्रमाणोऽनुच्छिङ्घन सार्वकालिको ज्ञेयः, अतएव तत्र प्रातर्निशि च सर्वदेत्युक्तम् ; यस्तु सुश्रुतोक्तः स भूरिमात्रो, नासौ सार्वकालिक इत्यभिधेयः प्रतिमर्षं ईषदुच्छिङ्घन इत्याह । नस्तो निषिक्त इति नासापुटद्वये निषिक्तः ; प्रमाणत इति परिमाणतः, परिमाणद्वारकमेतल्लक्षणमित्यर्थः ॥ १ ॥

प्रतिमर्षकर्माह प्रतिमर्षस्त्वित्यादि ।—चरकस्य । नस्यार्थमिति नस्यस्य स्नेहनशोधनरूपप्रयोजनद्वयम् । उक्तं हि—"स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते ।" न च दोषवानिति व्यापत्तिकृत् । प्रकारान्तरेणापि प्रतिमर्षमात्रामाह नस्तः स्नेहाङ्गुलिमित्यादि ।—चरकस्य । नस्त इति नासायां स्नेहाङ्गुलिमिति स्नेहपूरिता

निशाहर्भुक्तवान्ताहः स्वप्नाध्वश्रमरेतसाम् ।
शिरोऽभ्यञ्जनगण्डूष-प्रस्रावाञ्जनवर्चसाम् ।
दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥ ३ ॥
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ।
अवपीड्य दीयते यस्मादवपीडस्ततस्तु सः ॥ ४ ॥
स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।

---

…ली दद्यात ; एतेन स्नेहमप्राङ्गुलीतो यावान् स्नेहः पतति सैव प्रतिमर्षमात्रा । …र्वदेति सर्वष्वेव ऋतुषु । न च नावनादिवदवोच्छिन्न कर्त्तव्यमित्याह नचो-…क्लिङ्गदित्यादि ।—शरीबाधामित्यनेन सुखविषयत्वमस्योक्तम् । दाढ्य कृदिति …नशिर कपालादिदाढ्य कृत् ॥ २ ॥

सर्वदेत्यस्यार्थमाह निशेत्यादि ।—वाग्भटस्य । असौ प्रतिमर्षः बिन्दुद्वयपरि-…मितो निशादीनामन्ते समाप्तौ वैद्येन योज्य । निशान्त इति प्रातः ; अहोऽन्त …ति सायम् । सुश्रुतेऽपि कल्योत्थित इत्यनेन प्रातःकाल उक्तः । अध्वेति …ध्यादिश्रम । श्रमशब्देनाध्वव्यतिरिक्तो व्यायाम उच्यते । सुश्रुतेऽपि व्याया-…माध्वपरिश्रान्तेनेत्युक्तम् । रेत.शब्देन रेत सरणोपलक्षितव्यायाम उच्यते । प्रस्राव …इति मूत्रोत्सर्ग , वर्च पुरीषोत्सर्ग । एषु पञ्चदशसु कालेषु प्रतिमर्षदानप्रयोजनं …वाग्भटेनैवोक्तमनुसर्त्तव्य तद्यथा—"निशाहर्भुक्तवान्ताह स्वप्नाध्वश्रमरेतसाम । …शिरोऽभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् । दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ …द्विबिन्दुक. । पञ्चसु स्रोतसा शुद्धिः क्लमनाशस्त्रिषु क्रमात् । दृग्बलं पञ्चसु ततो …दन्तदार्ढ्य मरुच्छम: ॥" निशाहर्भुक्तवान्ताहस्वप्नेषु पञ्चसु प्रतिमर्षदानात् …स्रोतसां शुद्धिर्भवति । त्रिष्विति अध्वश्रमरेतःसु क्लमनाश. स्यात् । शिरोऽभ्य-…ञ्जनादिषु वर्चोऽन्तेषु तु प्रतिमर्षदानात् दृग्बलं स्यात् , ततोऽनन्तरं दन्तकाष्ठस्य …हास्यस्य चान्ते योजित: प्रतिमर्ष. क्रमात् दन्तदार्ढ्यं मरुतो वायो: प्रशमनं करोती-…त्यर्थ ॥ ३ ॥

अवपीडमाह शोधन इत्यादि ।—चरकस्य । अत्र संशमनमित्यवपीडस्य कर्म-…इति, तत् पुनरिह स्तम्भन एवान्तर्भवति ॥ ४ ॥

नस्यमाह स्नेहार्थमित्यादि ।—ग्रीवास्कन्धोरसां स्नेहार्थमित्यन्वय. । नस्यशब्दो …नावनपर्याय ; नासाभ्यां क्षीयत इति नस्यम्, नासाशब्दात् शरीरावयवत्वात् यत्-

बलार्थं दीयते स्नेहो नस्यशब्दोऽत्र वर्त्तते ॥ ५ ॥
नस्यस्य स्नैहिकस्यात्र देयास्त्वष्टौ तु बिन्दवः।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः ॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः ॥
द्वात्रिंशद्बिन्दवस्त्वत्र शुक्तिरित्यभिधीयते।
द्वे शुक्ती पाणिशुक्तिश्च देयात्र कुशलैर्नरैः ॥ ६ ॥

---

प्रत्ययेन। अतएवाह सुश्रुतः—"औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्।" अनया च निरुक्त्या यद्यपि सामान्यवचन एवायं नस्यशब्दस्तथापि नस्यशब्दोऽत्र वर्त्तत इत्यभिधानात् विशेषवृत्तितामपि नस्यशब्दस्य बोधयति। एतेन यथा निदानशब्दो निदानपञ्चके तथा निदानविशेषे च वर्त्तते, तथायं नस्यशब्दोऽपि नस्यशिरोविरेचनप्रतिमर्षावपीडप्रधमनेषु तथा नस्यविशेषे च स्नेहार्थं शून्यशिरसामित्यादिनोक्ते वर्त्तते। सुश्रुतेनापि "तत्र नस्यशब्दः पञ्चधा निपातितः" इत्यादिनायमर्थ उक्तः। एतेन नासास्रोतसि दोषोपशमनार्थं यद्दीयते तन्नस्यमिति नस्यादिपञ्चकसामान्यलक्षणम्, तथा प्रतिमर्षादिभिन्नत्वे सति स्नेहनार्थं यद्दीयते तन्नस्यमिति तु नस्यविशेषलक्षणं बोध्यमित्यूह्यम्. ॥ ५ ॥

स्नैहिकनस्यार्थं स्नेहस्य मानमाह नस्यस्येत्यादि।—स्नेहाप्लुतप्रदेशिनीपर्वद्वयात् यावान् स्नेहः स्रवति तावान् स्नेहो बिन्दुरित्युच्यते। उक्तं हि वाग्भटे—"प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात्। यावत् पतत्यसौ बिन्दुः" इति। नस्तकयोरिति नासापुटयोः। एषा प्रथममात्रा। द्वितीयां तृतीयाञ्च मात्रामाह शुक्तिश्च पाणिशुक्तिश्चेति।—शुक्तिर्द्वितीया, पाणिशुक्तिस्तृतीयेत्यर्थः। एतांश्च तिस्रो मात्रा यथाबलं प्रयोज्या इति। सुश्रुतेऽप्युक्तं—"तस्याः प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृता प्रथमा मात्रा द्वितीया शुक्तिस्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः" इति। शुक्तिपाणिशुक्तिशब्दयोरर्थमाह द्वात्रिंशद्बिन्दव इति। द्वे शुक्ती इति चतुःषष्टिबिन्दव इत्यर्थः। इदञ्च शुक्ति-पाणिशुक्त्याख्यमात्राद्वयं मिलित्वैव नासापुटाभ्यां प्रयोक्तव्यम्, न तु प्रथममात्रावत् प्रत्येकश इत्याहुः। एतच्च स्नेहनस्यं न गिलेत् किन्तु त्यजेदेव। उक्तं हि सुश्रुते—"स्नेहनस्यं न चोपगिलेत् कथञ्चिदपि" इति ॥ ६ ॥

तैलं कफे च वाते च केवले पवने वसाम्।
दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जा समारुते ॥ ७ ॥
ध्मापनं रेचनश्चूर्णो युञ्ज्यात्तं मुखवायुना।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ८ ॥
शिरोविरेचनद्रव्यैः स्नेहैर्वा तैः प्रसाधितैः।
शिरोविरेचनं दद्याद् रोगेषु तेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये।
शोथगण्डक्रिमिग्रन्थि-कुष्ठापस्मारपीनसे ॥ ९ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च।
निवातशयनस्थस्य जत्रूर्द्ध्वं स्वेदयेत् पुनः ॥

---

इदानीं तस्मिन् दोषे यः स्नेहः प्रयोज्यस्तमाह तैलमित्यादि।—चकारात् वातकफसंसर्गे च तैलं देयमित्यर्थः। केवल इति निरावरणे वाते; मज्जा तु समारुते वाते ॥ ७ ॥

प्रधमनमाह ध्मापनमित्यादि।—वाग्भटस्य। रेचन इति शिरोविरेचनद्रव्यकृतः किंवा देहस्रोतोविशोधन इत्यर्थः। स इति चूर्णः। चूर्णत्वादिति सूक्ष्मस्रोतोऽनुसारित्वादित्यभिसन्धिः। एतच्च प्रधमनं चूर्णं प्रतनुवस्त्रे बद्ध्वा जिघ्रेदित्यपि वृद्धव्यवहारसिद्धो विधिर्बोध्यः ॥ ८ ॥

शिरोविरेचनमाह शिरोविरेचनेत्यादि।—शिरोविरेचनद्रव्यैरिति अपामार्गपिप्पल्यादिभिस्तैः कल्कीकृतैर्द्रव्यमिश्रितैरेतत्साधितैः स्नेहैर्वा इत्यर्थः। अस्य च मात्रार्थं सिद्धसारो यथा—"चत्वारो बिन्दवः षड्वा तथाष्टौ वा यथाबलम्। शिरोविरेचने योज्या ऊर्द्ध्वजत्रुविकारिणाम्" इति। जाड्यं शैत्यादिलक्षणः; स्यन्दोऽभिष्यन्दरोगः। पीनस इति पुराणपीनसे ॥ ९ ॥

येन विधिना तच्छिरोविरेचनं कर्त्तव्यं तदाह स्निग्धेत्यादि।—वाग्भटस्य। प्राक्कृतावश्यकस्य चेति प्राक् पूर्वं कृतमावश्यकम् अवश्यकरणीयं मलमूत्रविसर्गदन्तधावनादिकं येन तस्य। जत्रूर्द्ध्वमिति ग्रीवामूलादिकं स्वेदयेत् पुनरित्य

अथोत्तानोर्द्ध्वदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ।
नासापुटं पिधायैकं पर्य्यायेण निषेचयेत् ॥
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुना तथा ।
दत्ते पादतलस्कन्धहस्तकर्णादि मर्द्दयेत् ॥
शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः ।
आ भेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥ १०
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।
त्र्यहात् त्र्यहाच्च सप्ताहं स्नेहकर्म समाचरेत् ॥
एकाहान्तरितं कुर्य्याद्रेचनं शिरसस्तथा ॥ ११ ॥

---

उत्सर्गसिद्धपञ्चकर्माङ्गभूतस्वेदापेक्षया भिन्न एव नस्याव्यवहितपूर्वकाले पुनः स्वेदः कर्त्तव्य इति बोधयति। किञ्चिदुन्नतपादस्येति चरकेऽपि पादोन्नतस्येत्युक्तम् पर्य्यायेणेति क्रमेण न त्वेकदा। उष्णाम्बुतप्तमिति उष्णाम्बुयोगादुष्णाम्बुवाष्पेण वा तप्तम्। प्रणाड्येति नस्यनलिकया; पिचुनेति तूलकेन। आदिशब्दात् ग्रीवाननादीनां ग्रहणम्। पार्श्वयोरिति वामदक्षिणनासापुटयोः ; आभेषजक्षयादिति छेदः ; भेषजनिःसरणपर्य्यन्तं शनैरुच्छिङ्घ्य निष्ठीवेदित्यर्थः। एवमुक्तपरिपाट्या वारद्वयं त्रयं वा दोषापेक्षया अधिकमपि नस्यं कुर्य्यादित्यर्थः। नस्ये क्रियमाणे यदि नस्यस्य सम्यक्प्रयोगेण मूर्च्छा स्यात् तदा शिरः परित्यज्य शीततोयेन सेकः कार्य्यम्। अतएवैतदनन्तरं वाग्भटे यथा—"मूर्च्छायां शीततोयेन सिञ्चेत् परिहरन् शिरः" इति ॥ १० ॥

शिरोविरेचनस्यानन्तरीयं विधिमाह स्नेहमित्यादि।—वाग्भटस्य स्नेहमिति स्नेहनस्यम्। स्नेहनस्यं रेचनस्यञ्च कियन्तं कालं कया परिपाट्या कुर्य्यादित्याह त्र्यहात् त्र्यहादित्यादि।—एकैकदिनमन्तरीकृत्य सप्ताहमन्तरितदिनानि वर्जयित्वा स्नेहनस्यम्, शिरसो विरेचनन्तु एकाहान्तरितं कुर्य्यात्। तेन यस्मिन् यस्मिन् दिने स्नेहनस्यं न दीयते तस्मिन् तस्मिन्नेव दिने रेचननस्यं देयमित्यर्थः। एतेनैकस्मिन् दिने स्नेहम्, अपरस्मिन् दिने शिरोविरेचनमेव, अपरत्वापरं शिरोविरेचनान्तरं स्नेहनस्यं भवति। एकाहान्तरितः शिरोविरेकः कार्य्य इत्यु-

सम्यक्स्निग्धे सुखोच्छ्वास-स्वप्नबोधाक्षिपाटवम् ॥ १२ ॥
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता।
स्निग्धेऽतिकण्डूर्गुरुता प्रसेकारुचिपीनसाः॥ १३ ॥
सुविरिक्तेऽक्षिलघुतावक्त्रस्वरविशुद्धयः।
दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥ १४ ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम्।
भुक्तभक्तशिरःस्नात स्नातुकामस्रुतास्रजाम् ॥
नवपीनसरोगार्त्त-सूतिकाश्वासकासिनाम्।
शुद्धानां दत्तवस्तीनां तथानार्त्तवदुर्दिने।
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ॥ १५ ॥

---

मर्शेन द्व्यन्तरमपि ज्ञेयम्, तथा सप्ताहमित्युपलक्षणं तेन त्र्यहादिकमपि दोषापेक्षया ज्ञेयम्। उक्तं हि—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः। सप्ताहन्तु परं ज्ञेयं विश्रान्तस्य पुनः पुनः। त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितम्। घृ नवाहमूर्द्धन्तु नवाहात् सात्म्यतां व्रजेत्" इति ॥ ११ ॥

सम्यक्स्निग्धलक्षणमाह सम्यगित्यादि।—वाग्भटस्य। सुखशब्दः उच्छ्वासादिना प्रत्येकं सम्बध्यते। अक्षीतीन्द्रियोपलक्षणम्; अक्षपाटवमिति वा पाठः; तन्त्रान्तरे प्रसादश्चेन्द्रियाणामित्युक्तम् ॥ १२ ॥

असम्यक्स्निग्धलक्षणमाह रूक्ष इत्यादि।—वाग्भटस्य। रूक्ष इत्यसम्यक्स्निग्धे। अतिस्निग्धलक्षणमाह स्निग्ध इत्यादि।—वाग्भटस्य। अतिस्निग्ध इत्यन्वयः। प्रसेक इति कफप्रसेकः॥ १३ ॥

स्नैहिकनस्यस्य सम्यग्योगादीनभिधाय रेचननस्यस्यापि तानाह सुविरिक्त इत्यादि।—वाग्भटस्य। क्षामता शुष्कद्रवधातुता ॥ १४ ॥

येषां नस्यं न विधेयं तानाह तोयेत्यादि।—वाग्भटस्य। तोयादिकं पीतं यैस्ते तथेति आहिताग्न्यादित्वात् परनिपातः। अनार्त्तवदुर्दिने हेमन्तशिशिरयोर्मेघव्याप्तेऽह्नि। अन्यत्रात्ययिके व्याधाविति आत्ययिके च व्याधौ नस्यैकसाध्ये निषिद्धनस्यानामपि नस्यं विधेयमेवेत्यर्थः। नैषां नस्यं प्रयोजयेदिति श्लोकपादश्चकेण प्रतिसंस्कर्त्रा दत्तः॥ १५ ॥

न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तः प्रतिमर्षस्तु वस्तिवत् ॥ १६ ॥

इति नस्याधिकारः ॥

समाप्तश्च पञ्चकर्माधिकारः ॥

---

## अथ धूमपानाधिकारः ।

प्रायोगिकः स्नैहिकश्च धूमो वैरेचनस्तथा ।
कासहरो वामनश्च धूमः पञ्चविधो मतः ॥ १ ॥

---

इदानीं यस्मिन् वयसि नस्यं न विधेयं तदाह न नस्यमित्यादि ।—वाग्भटस्य ऊनसप्ताब्द इति एकवर्षमारभ्य षष्ठवर्षपर्य्यन्तम् इति प्रतिवर्षव्यतिरिक्तं नस्य न प्रयोज्यं सप्तमवर्षात् प्रभृति तु विधेयमेवेत्यर्थः । उक्तं हि कृष्णात्रेयेण—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम्" इति । अतीताशीतिवत्सर इति एकाशीतीत्यादौ निषेध्यं प्रस्तावात् निषेध्यधूमकवलादीनप्याह न चोनद्वादश इत्यादि ।—ऊनद्वादश इति एकवर्षमारभ्य एकादशवर्षपर्य्यन्तम् ; एवं वक्ष्यमाणेऽपि ज्ञेयम् । शुद्धिरिति वमनविरेचने । प्रतिमर्षस्तथा वस्तिरिति सर्वकालमेव विधेय इत्याह आजन्मेत्यादि ॥ १६ ॥

इति नस्याधिकार-विवृतिः ।

समाप्ता च पञ्चकर्माधिकार-विवृतिः ।

---

नस्यवन्नासाप्रयोज्यत्वसाधर्म्यात् पञ्चसंख्यासामान्याच्च नस्यानन्तरविधेयत्वाच्च नस्यानन्तरं धूममाह प्रायोगिक इत्यादि ।—प्रायोगिक इति नित्यपेयधूमस्य संज्ञा । प्रयोगः सततभ्यासः, तद्विषयको धूमः प्रायोगिकः । स्नेहाय प्रभवतीति स्नैहिकः । दोषविरेचनाद्वैरेचनिकः । कासं हरतीति कासहरः । वामयतीति वामनः । यद्यपि चरके प्रायोगिकस्नैहिकवैरेचनिकभेदात् त्रिविध, एवं धूम उक्तस्तथापि

ऋजुत्रिकोषफलितं कोलास्थ्यग्रप्रमाणितम्।
बस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते॥
सार्द्धस्त्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु।
नेत्रं कासहरे त्र्यंशहीनः शेषे दशाङ्गुलः॥ २॥
औषधैर्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम्।
विगर्भामग्निसंप्लुष्टां कृत्वा धूमं पिबेन्नरः॥
वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन्।
उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्॥
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये॥ ३॥

---

प्रायोगिके कासहरम्, वैरेचनिके च वामनीयमन्तर्भाव्य चरकसुश्रुतयोर्विरोधः परिहरणीयः॥ १॥

धूमपानार्थं नलिकाविधानमाह ऋज्वित्यादि।—चरकस्य। त्रिकोषफलितमिति त्रिभिः पर्वभिर्भिन्नैः समन्वितं किंवा त्रिकोषस्त्रिभङ्गः, तेन यस्मिन् नेत्रे स्थानत्रये भङ्गः कार्य्यः, स च नलिकात्रयेण घटनीय इत्याहुः। कोलास्थ्यग्रप्रमाणितमिति यस्य नेत्रस्याग्रं कोलास्थिप्रवेशयोग्यं कार्य्यमित्यर्थः। मूलस्थास्याङ्गुष्ठप्रवेशयोग्यम्। यदाह वाग्भटः—"मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम्" इति। बस्तिनेत्रसमद्रव्यमिति बस्तिनेत्रेण समं तुल्यं यद्द्रव्यं सुवर्णरूप्यताम्रादिकम्। धूमभेदेन नेत्रमानभेदमाह सार्द्ध इत्यादि।—हस्तोऽत्र चतुर्विंशत्यङ्गुलपरिमितः, तेन प्रायोगिके धूमे सार्द्धो हस्तः षट्त्रिंशदङ्गुलः। त्र्यंशयुत इति चतुर्विंशत्यङ्गुलस्य तृतीयोऽंशोऽष्टाङ्गुलम्, तेन संयुक्तो हस्त इत्यर्थः; एतेन स्नैहिके द्वात्रिंशदङ्गुलं नेत्रमित्यर्थः। वैरेचने तु पूर्णो हस्तश्चतुर्विंशत्यङ्गुलमित्यर्थः। कासहरे धूमे त्र्यंशहीनो हस्तः षोडशाङ्गुलमित्यर्थः। शेष इति वामके॥ २॥

इदानीं धूमपानार्थं नलिकामभिधाय धूमपानं यथा विधेयं तदाह औषधैरित्यादि।—औषधैरिति गन्धैरकुष्ठतगरैरित्यादिना वक्ष्यमाणैरौषधैर्वर्त्तिकां कृत्वा धूमं पिबेत्। वर्त्तिकाकरणप्रकारमाह शरीगर्भामित्यादि। शरी शरपुष्पस्य नालिका सा गर्भे अभ्यन्तरे यस्याः ताम्; एतेन पिष्टैर्भेषजैः शरीं प्रलिप्य वर्त्तिः कार्य्येत्यर्थः। विगर्भामिति तां वर्त्तिं विशोष्य ततः शरीमाकृष्य विगर्भां कुर्य्यादि-

गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिकी मता ।
स्नैहिकी तु मधूच्छिष्ट-स्नेहगुग्गुलुसर्जकैः ॥
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचनी मता ।
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता ॥ ४ ॥
योज्या न पित्तरक्तार्त्ति-विरिक्तोदरमेहिषु ।
तिमिरोर्द्ध्वानिलाध्मान-रोहिणीदत्तवस्तिषु ।
मत्स्यमद्यदधिक्षीर-क्षौद्रस्नेहविषाशिषु ।
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ॥
रक्तपित्तान्ध्यबाधिर्य्य-तृष्णमूर्च्छामदमेहवत् ।

---

त्यर्थः । अग्निसंप्लुष्टामिति तां विगर्भां वर्त्तिं नेत्राग्रे समारोप्य अग्निसंप्लुष्टां कृत्वा धूमं पिबेदित्यर्थः । एषा वर्त्तिरष्टाङ्गुला यववन्मध्यस्थूला परिणाहेनाङ्गुष्ठसम्मिता कर्त्तव्या । उक्तञ्च—"पिष्टा लिम्पेच्छरीषिकां तां वर्त्तिं यवसन्निभाम् । स्थूला अङ्गुष्ठिकां कुर्य्यादष्टाङ्गुलसमां भिषक्" इति । धूमं पीत्वा धूमं कथं वमेदित्याह वक्त्रेणेत्यादि ।—नस्त इति नासिकया सार्वविभक्तिकस्तसिः । एवंप्रकारेण नासिकां निषिध्यते, वक्त्रेणैव धूमं वमेत् न तु नासयेत्यर्थः । अत्र हेतुश्चरकेणोक्तो यथा—"प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषि" इति । वक्त्रधूमपान-नासाधूमपानयोर्विषयावाह उर इत्यादि ॥ ३ ॥

औषधैर्वर्त्तिका कर्त्तव्येत्युक्तम्, अतो वर्त्त्यर्थमौषधान्याह गन्धैरित्यादि—गन्धैरित्यगुर्वादिसुगन्धिद्रव्यैः । अकुष्ठतगरैरिति कुष्ठतगरवर्जितैः । कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात् । उक्तञ्च जालके—"नतकुष्ठस्रावयतो धूमवर्त्तिं प्रयोजिते । मस्तुलुङ्गं विशेषेण तस्मात् ते नैव योजयेत्" इति । मधूच्छिष्टं सिक्थकं ; स्नेहोऽत्र घृतं वसा च, वसाघृतमधूच्छिष्टैरिति वचनात् । शिरोविरेचनद्रव्यैरिति श्वेताज्योतिष्मत्यादिभिश्चरकोक्तैः । कासघ्नैरिति बृहतीकण्टकारीकटुकासमर्दादिभिः सुश्रुतोक्तैः । वामनैरिति स्नायुचर्मखुरशृङ्गादिभिः सुश्रुतोक्तैः ॥ ४ ॥

येषु धूमो न विधेयस्तानाह योज्या इत्यादि ।—वाग्भटस्य । दत्तवस्तिष्विति

धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः।
एतद्धूमविधानन्तु लेशतः सम्प्रकाशितम् ॥ ५ ॥

इति धूमपानाधिकारः ॥

---

## अथ कवलगण्डूषाधिकारः ।

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रूक्षैः संशोधनः कफे ॥
कषायस्वादुतिक्तैश्च कवलो रोपणो व्रणे ॥ १ ॥
सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता ॥
तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम्।
पुनश्चान्योऽपि दातव्यस्तथा चौद्रघृतादिभिः ॥ २ ॥

---

क्षतनिरूहेषु। अकालातिपीतधूमयोर्दोषमाह रक्तपित्तेत्यादि।—अत्र पीतो वेति केदः। धूमपानविधिश्चरकसुश्रुतादावतिप्रपञ्चः, इह तु ग्रन्थगौरवभयात् सङ्क्षेपेणैवोक्त इत्याह एतदित्यादि ॥ ५ ॥

इति धूमपानाधिकारविवृतिः।

---

ऊर्द्धगतदोषहरत्वसामान्यात् धूमाधिकारानन्तरं कवलगण्डूषाधिकारः प्रारभ्यते। तत्र कवलश्चतुर्विधो भवति यदाह सुश्रुतः—"चतुर्द्धा कवलः स्नेही प्रसादी शोधिरोपणौ" इति। अतस्तेषां स्वरूपं विषयञ्चाह स्निग्धोष्णैरित्यादि।—सुश्रुतस्य। यद्यपि तन्त्रान्तरे वैरेचनस्तम्भनाभ्यां सह षड्विधत्वमेवोक्तं तथाप्यत्र संशोधने रेचनस्य, प्रसादने च स्तम्भनस्यान्तर्भावान्न विरोधः। वाग्भटे तु कवलगण्डूषयोरेवलम्ब्य चतुर्विधत्वमुक्तं, यथा—"चतुःप्रकारो गण्डूषः स्निग्धः शमनशोधनौ। रोपणश्च त्रयस्तत्र त्रिषु योज्यास्त्वनादिषु। अन्त्यो व्रणघ्नः" इति ॥ १ ॥

मात्राभेदेन कवलगण्डूषयोर्भेदमाह सुखमित्यादि।—सुश्रुतस्य। असौ कवलः

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥ ३॥
दाहतृष्णाव्रणान् हन्ति मधुगण्डूषधारणम्।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥
तदेवालवणं शीतं मुखशोषहरं परम्।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्।
सुखं हितं वातहरं तैलगण्डूषधारणम्॥ ४॥
इति कवलगण्डूषाधिकारः॥

---

## अथाश्च्योतनाञ्जन-तर्पण-पुटपाकाधिकारः।

सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम्।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम्॥

कियन्तं कालं मुखे धारणीय इत्याह तावदित्यादि।—चव चौद्रं कफे कर्पापन च। आदिशब्देन दुग्धादिकम्। यदाह सुश्रुतः—"एवं स्नेहपयः क्षौद्ररसमूत्राम्लसयुताः। कषायोष्णोदकाभ्याश्च कवला दोषतो हिताः" इति॥ २॥

कवलस्य सम्यग्योगलक्षणमाह व्याधेरित्यादि।—सुश्रुतस्य। अयोगातियोगलक्षणमित्यतोऽनन्तरं यथा—"हीने जाड्यकफोत्क्लेशावरसंज्ञानमेव च। अतियोगान्मुखे पाकः शोषस्तृष्णारुचिक्लमाः॥" इति। एतच्च सामान्ययोगातियोगलक्षणं शोधनकवलस्येति भानुमतीप्रभृतयः। चक्रेण सम्यग्योगलक्षणविपर्य्ययेणैव असम्यग्योगलक्षणं सुधीभिरूहनीयमित्यभिप्रायेण अयोगातियोगलक्षणं नोक्तमिति॥३॥

दाहेत्यादि।—वाग्भटस्य। आशु शीघ्रम्। क्षाराम्बु यवक्षारजलम्। तैलमिति तिलतैलम्॥ ४॥

इति कवलगण्डूषाधिकारविवृतिः।

---

पूर्वोक्तसङ्ख्यैवाश्च्योतनाधिकारमाह सर्वेषामित्यादि। दोषभेदेन तदाह उष्णमित्यादि।—वाग्भटस्य। उष्णमिति दोषघ्नम्। निवातस्थस्य प्राग्—एकाविंति

उष्णं वाते कफे चोष्णं तच्छीतं रक्तपित्तयोः ॥
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम्।
शुक्तौ प्रलम्बयान्येन पिचुवर्त्त्या कनीनिके।
दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥
ततः प्रमृज्य मृदुना चैलेन कफवातयोः।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ १ ॥
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम्।
अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः ॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु।
विकारवृद्धिमल्पन्तु संरम्भमपरिस्रुतम् ॥ २ ॥
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रिते मले।
पक्वलिङ्गेऽल्पशोथार्त्तिकण्डूपैच्छिल्यलक्षिते ॥

---

निर्मलपात्रोपलक्षणम्। अन्येनेति दक्षिणपाणिना। प्रलम्बयेति लम्बमानयेत्यर्थः। पिचुवर्त्त्या तूलकवर्त्त्या। कनीनिके नासिकादेशसन्निहितचक्षुषः कोणे। द्व्यङ्गुलादिति नेत्रकनीनिकस्योपरि। पिचुवर्त्तिं द्व्यङ्गुलमुत्तोल्य निवातप्रदेशस्थातुरस्य ... वामेन पाणिना लोचनमुन्मील्य मृदु यथा भवति तथा लोचनं स्वेदयेत्। कफवातयोरिति वातकफयोः ॥ १ ॥

अत्युष्णतीक्ष्णाश्च्योतनस्य तथा अतिशीतस्य च दोषमाह अत्युष्णेत्यादि। इदानीं बहुमात्रस्य तथाल्पमात्रस्य तथा वस्त्रापूताश्च्योतनस्य दोषमाह कषायेत्यादि। —वाग्भटस्य। कषायवर्त्मतामिति रक्तवर्त्मतां रूक्षवर्त्मतां वा। घर्षमिति कर-... ... रिकाम्। बहु इति बहुपरिमाणाश्च्योतनं कषायवर्त्मतादिकं कुरुते इति शेषः। अल्पमाश्च्योतनं विकारवृद्धिं कुरुते। तथा अपरिस्रुतमित्यपूतमाश्च्योतनं संरम्भं शोथं कुरुते। यद्यपि सुश्रुते आश्च्योतनवत् सेकोऽप्युक्तः, यथा—"तर्पणः पुटपाकश्च सेकश्चाश्च्योतनाञ्जनम्" इति। तथापि वाग्भटमते आश्च्योतन एव सेकस्यान्तर्भावादविरोधः ॥ २ ॥

आश्च्योतनानन्तरमञ्जनमाह अथेत्यादि।—अथेत्यानन्तर्य्ये। शुद्धतनोरिति कायशिरोविरेकाभ्याम्। नेत्रमात्राश्रिते मल इति नेत्र एव स्थिते दोष इत्यर्थः।

मन्दघर्माम्बुरागोऽक्षि प्रयोज्यं घनदूषिके ॥ ३ ॥
लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा।
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः।
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ॥ ४ ॥
दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ ५ ॥
प्रशस्ता लेखने ताम्री रोपणे काललोहजा।
अङ्गुलीव सुवर्णोत्था रूप्यजा च प्रसादने।
पिण्डो रसक्रिया चूर्णं त्रिधैवाञ्जनकल्पना।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत् ॥
अथानुमीलयन् दृष्टी अन्तः सञ्चारयेच्छनैः।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥
अपेतौषधसम्बन्धं निर्वृतं नयनं यदा।
व्याधिदोषर्त्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा।
ऊर्द्धं वर्त्मनि संगृह्य शोध्यं वामेन चेतरत् ॥ ६ ॥

---

एतेन प्रदेशान्तरस्थदोषहन्तृत्वमञ्जनस्योक्तम्। नेत्रावस्थिते दोषप्राप्तमञ्जनमाचरेदिति। 'तथा पक्वलिङ्गे पक्वाक्षिरोगलक्षणे सत्येवाञ्जनं प्रयोज्यम्। तदेव पक्वलक्षणं कथं ज्ञातव्यमित्यत आह मन्दशोथेत्यादि।—मन्दशब्दस्य शोथादिभिः प्रत्येकमन्वयः, एवं मन्दशब्दस्यापि घर्मादिभिः। लक्षित इति शेषः। दूषिका नेत्रपिञ्जीड़का ॥ ३ ॥

अञ्जनस्य त्रैविध्यमाह लेखनमित्यादि।—वाग्भटस्य। अञ्जनमिति शेषः। एषां स्वरूपमाह लेखनम्। तत्रेत्यादि।—तत्रेति त्रिषु लेखनादिषु मध्ये, पटु लवणं, पटुपिप्पल्याम्लादिकषायादिभिर्द्रव्यैर्यदञ्जनं तल्लेखनमित्यर्थः ॥ ४ ॥

अञ्जनदानार्थं शलाकामाह दशाङ्गुलेत्यादि।—तस्यैव। मुकुलानना कुन्दजातीमल्लिकामुकुलमुखी ॥ ५ ॥

अञ्जनभेदेन शलाकाभेदमाह प्रशस्तेत्यादि।—काललोहः शस्त्रादि। प्रसा

निशि स्वप्नेन मध्याह्ने पानान्नोष्णागभस्तिभिः।
अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीड़ितद्रुताः।
प्रातः सायञ्च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा ॥ ७ ॥
कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः।
तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हिमम् ॥ ८ ॥
नाञ्जयेद्भीतवमित-विरिक्ताशितवेगिते।
क्रुद्धज्वरिततान्ताक्ष-शिरोरुक्शोकजागरे ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः।
अजीर्णेऽप्यर्कसन्तप्ते दिवास्वप्ने पिपासिते ॥ ९ ॥

---

दने तु अङ्गुल्येव शरीरशलाका, तथा सुवर्णजा रूप्यजा च शलाका प्रशस्तेत्यर्थः ॥ ६ ॥

निशीत्यादि।—ननु विरेकं दुर्बलं चक्षुरादित्यं प्राप्य सीदतीति तत् कथं सर्वदेत्युक्तम्? नैवं; यतः विरेकं दुर्बलं चक्षुरादित्यं प्राप्य सीदतीत्युच्यते मुख्याभिप्रायादिदं वाक्यं, किंवा अत्युद्रिक्तकफापेक्षया दिवाञ्जनं बोध्यम्; उक्तं हि—"अत्युद्रिक्तबलासे तु लेखनीयेऽथवा गदे। काममह्न्यपि नात्युष्णे तीक्ष्णाञ्जनं प्रयोजयेत्" इति। लेखनीये गद इति लेखनीयशुक्रार्मादौ। ननु विरेकं दुर्बलं चक्षुरादित्यं प्राप्य सीदतीति वचनमनुपपन्नं यतो नेत्रस्य तैजसत्वादादित्यं प्राप्य तेजोवृद्धिरेव युक्ता तेजसः सामान्यवृद्धिकारणमिति सिद्धान्तः? नैवं कालस्यौष्ण्यादञ्जनस्य च तीक्ष्णत्वादतियोगेन दृष्ट्युपघातः स्यादिति ॥ ७ ॥

अञ्जने दत्तेऽपि यदि कण्डूजाड्यादिकं तिष्ठति तदा पुनरपि तीक्ष्णमञ्जनं धूमं वा योजयेदित्यत आह कण्डूजाड्य इत्यादि।—वाग्भटस्य।—यदि पुनस्तीक्ष्णाञ्जनविधानेन दाहः स्यात् तदा दृष्टिप्रसादनमञ्जनं कार्यमित्याह तीक्ष्णाञ्जनेत्यादि।—अस्यैव अभितप्त इति सदाहे। प्रत्यञ्जनमिति तीक्ष्णाञ्जनप्रत्यनीकमञ्जनं मृदुशीतलस्निग्धमित्यर्थः ॥ ८ ॥

अञ्जनं येषु न विधेयं तानाह नाञ्जयेदित्यादि।—वाग्भटस्य। अशिते सद्योभुक्ते। वेगित इति दोषवेगोदयेन युक्ते; उक्तं—"दोषवेगोदयेऽप्युक्तं कुर्यात् तात्तानुपद्रवान्" इति। ज्वरिते नवज्वरिते। तान्ताक्ष इति सूक्ष्मभास्वरादिदर्शनं

निर्वाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः।
काले साधारणे प्रातः सायं वोत्तानशायिनः॥
यवमाषमयीं पालीं नेत्रकोषाद्बहिः समाम्।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम्।
नक्ताम्ध्यवात तिमिर-कृच्छ्रबोधादिके वसाम्॥ १०॥
आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते॥
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च।
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश।
पित्ते षट् सुस्थवृत्ते च बलासे पञ्च धारयेत्॥
कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत्।

---

नाम तान्तं भक्षिणी यस्य तस्मिन्। अदृष्टेऽर्के इत्यनुदिते जलादित्यत्र इत्याह, शुष्यतेऽस्य वमनेनोक्तम्॥ ९॥

एकाश्रयत्वादत्रैवाधिकारे तर्पणमाह निवात इत्यादि।—वाग्भटस्य। पालीं भित्त्यालवालम्। द्व्यङ्गुलोच्चया दृढामिति द्व्यङ्गुलोच्छ्रया दृढा निबिडा यथा स्नेहो न स्रवतीत्यर्थः। यथास्वं सिद्धं सर्पिरिति तत्तद्दोषप्रत्यनीकद्रव्यपक्वमित्यर्थं पात्रस्थं घृतं तप्तजलस्योपरि स्थापयित्वा प्रविलायितं द्रवीभूतमित्यर्थः। आवपेत् पूरयेत्। व्याधिविशेषे तु हविर्विशेषमाह नक्ताम्ध्येत्यादि।—वाग्भटस्य। अत्रापि यथास्वं सिद्धमित्यादि योज्यमित्यर्थः॥ १०॥

पूरणविधिमाह आपक्ष्माग्रपर्य्यन्तं पूरयेदित्यर्थः॥ अथ स्नेहेन चक्षुः पूरयित्वा कियन्तं कालं व्याप्य स स्नेहः स्थातव्य इति जिज्ञासायामाह अथेत्यादि।—अथ घृतावपनानन्तरं शनकैरुन्मेषं कुर्वतस्तस्य आवर्त्तस्य मात्रां विगणयेत्। मात्रा च लघ्वक्षरोच्चारणम्। तत्र वर्त्मस्थे व्याधौ शतमात्रां धारयेत् लघ्वक्षरशतोच्चारणकालसमकालं व्याप्य स्नेहं धारयेत्। सन्धिगते तु व्याधौ त्रीणि शतानि। शुक्लमण्डलगते तु पञ्च शतानि। कृष्णमण्डलगते तु सप्त शतानि। दृष्टिमण्डले चाष्टौ।

पिबेच्च धूमं नेक्षेत व्योमरूपञ्च भास्करम् ॥
इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे।
सुस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम्।
तृप्ते विपर्य्ययोऽतृप्ते तृप्तेऽतिश्लेष्मजा रुजः ॥ ११ ॥
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव पक्ष्मसु।
स वाते स्नेहनः श्लेष्मसहिते लेखनो मतः।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ॥ १२ ।
विल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः।
उरुवूकवटाम्भोजपत्रैः स्निग्धादिषु क्रमात्।

---

मर्य्य इत्यधिमर्य्ये दश, इत्यादिक्रमेण धारयेत्। धारणानन्तरञ्च यत् कार्य्यं तदाह कृत्वेत्यादि। द्वारमित्यालवाले छिद्रं कृत्वा। व्योमेत्याकाशं नेक्षेत। भास्वरं रूपमग्न्यादिः। अयञ्च क्रमो यस्मिन् दोषे यावद्दिनं कार्य्यस्तदाह इत्थमित्यादि।—अयञ्च दिनक्रमः चक्षुस्तृप्तिपर्य्यन्तं योज्य इत्याह आतृप्तेरित्यादि। विपर्य्यय इत्यादि।—विपर्य्ययः प्रकाशः क्षमतादिवैपरीत्यम्। अतितृप्ते तु श्लेष्मजा रुजः कण्डूपैच्छिल्यादयः ॥ ११ ॥

पुटपाकमाह पुटपाकमित्यादि।—वाग्भटस्य। पूर्वोक्तेष्विति तर्पणोक्तेषु रोगेष्वित्यर्थः। स्नेहादिभेदेन त्रिविधस्य पुटपाकस्य पृथक् पृथक् विषयमाह स वात इत्यादि।—स इति पुटपाकः स्नेहनो वाते हितः। श्लेष्मसहिते तु वाते लेखनः पुटपाको हित इति। दृग्दौर्बल्यादौ प्रसादनः पुटपाको हित इत्यर्थः। एतच्च पुटपाकत्रयं यैर्द्रव्यैर्विधेय तद्वाग्भटेनोक्तम्, इह तु ग्रन्थविस्तारभयात्तन्न न लिखितम्, किन्तूपयुक्तमिति मया लिख्यते। यथा—"भूयशः प्रसहानूपमेदो-मज्जवसामिषैः। स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत्। मृगपक्षियकृन्मांस-कायसाम्रसैन्धवैः। शीतोजमञ्जकदुग्धैर्लेखनो मस्तुकल्पितः। मृगपक्षियकृन्मज्जवसा-हृदयामिषैः। मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादन इति ॥ १२ ॥

पुटपाकत्रयस्य कल्पनामाह विल्वेत्यादि।—मांसयुक्त भेषजधानतरोत्तजीव-

वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः।
पचेत् प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम्।
नेत्रे तर्पणवद्युञ्ज्यात्कृतं द्वे त्रीणि धारयेत्॥
लेखनस्नेहनान्त्येषु कोष्णौ पूर्वौ हिमोऽपरः।
धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत्॥ १३॥
तर्पणं पुटपाकञ्च नस्यानर्हेण योजयेत्।
यावन्त्यहानि युञ्जीत द्विगुणो हितभाग्भवेत्॥ १४॥
इत्याश्चोतनाञ्जन-तर्पण-पुटपाकाधिकारः॥

---

गौयादिकं तयोः कल्करूपयोः पिण्डः। पृथग्बिल्वमात्रमिति पलमात्रम्। एर ण्डादिपत्रैः क्रमेण स्निग्धादिषु स्नेहादिपुटपाकेषु वेष्टयित्वा अनन्तरं मृदा लि प्रदीप्तैर्धवधन्वनगोमयैः पचेत। क्रमादिति धवधन्वनगोमयैरित्यत्रापि योजयन्ति केचित्। तेन स्नेहनपुटपाके एरण्डपत्रेण वेष्टनम्, धवकाष्ठाङ्गारेण च पाकः। लेखने वटपत्रेण वेष्टनम्, धन्वनकाष्ठाङ्गारेण च पाकः। प्रसादने तु अम्भोजपत्रैः वेष्टनम्, गोमयाग्निना च पाक इति। अग्न्याभमित्यग्निवर्णम्, एतच्च सम्यक्पाक ज्ञानार्थमुक्तम्। तर्पणवद्युञ्ज्यादित्यनेन निवाते तर्पणोक्तविधिमवाप्यतिदिशति। एतद्रसञ्च कियन्तं कालं नेत्रे धारयेदित्याह शतं द्वे त्रीणि धारयेत् लेखनस्नेहनान्त्येष्विति। एतच्च यथाक्रमं योज्यम्, तेन लेखनपुटपाके शतमिति मात्राशतं धारयेत्। स्नेहने तु द्वे मात्राशते; अन्त्य इति प्रसादने त्रीणि मात्राशतानि धारयेदित्यर्थः। पूर्वौ स्नेहनलेखनौ कोष्णौ; अपर इति प्रसादनो हिमः शीतलं योज्यः। धूमपोऽन्ते तयोरेवेति पूर्वयोः स्नेहनलेखनयोरेव अन्ते धूमपः स्यात् न तु प्रसादनान्त इत्येवशब्दार्थः। योगास्तत्र च तृप्तिवदिति तर्पणवदित्यर्थः॥१३॥

तर्पणपुटपाकौ येषां न कार्य्यौ तानाह तर्पणमित्यादि।—नस्यानर्हे इति निषिद्धनस्यपुरुषे। इदानीं तर्पणपुटपाकविधानानन्तरं यावन्ति दिनानि हितसेवनं कर्त्तव्यं तदाह यावन्तीत्यादि।—यावन्ति दिनानि व्याप्य तर्पणपुटपाकविधिं कुर्यात् तद्द्विगुणानि दिनानि हितसेवी भूत्वा तिष्ठेदित्यर्थः॥ १४॥

इत्याश्चोतनाञ्जनतर्पण-पुटपाकाधिकार विवृतिः।

## अथ शिराव्यधाधिकारः ।

अथ स्निग्धतनुः स्निग्धरसान्नप्रतिभोजितः ।
प्रत्यादित्यमुखं स्विन्नो जान्वासनसंस्थितः ॥
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ।
अङ्गुष्ठगर्भमुष्टिभ्यां मन्ये गाढं निपीड़येत् ॥
दन्तसम्पीड़नोत्कास-गण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नरः ॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एवमुत्थाप्य विधिना शिरां विध्येच्छिरोगताम् ॥ १ ॥
विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणम् ।
ऊर्द्धं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ २ ॥

---

पूर्वन्तु नेत्ररोगे स्निग्धस्याज्येन कोष्णेन शिराव्यधे. शमं नयेदित्युक्तम्, अत आश्च्योतनादिवत् शिराव्यधस्यापि नेत्ररोगहरत्वादनन्तर शिराव्यधविधिर्वाच्य. । तत्र प्राधान्यात् प्रथम शिरोगतशिराव्यधे कर्त्तव्ये शिरोत्थापनप्रकारमाह अथेत्यादि । —वाग्भटस्य । आदित्याभिमुखं लक्षीकृत्य, जानूच्चासनसंस्थित इति उपविष्ट इत्यर्थः । मृदुना पट्टेनात्तौ गृहीतौ बद्ध इति यावत् केशान्तौ यस्य स तथा। जानुनि स्थापित कूर्परं कफोणिद्वय येन स तथा। मुष्टिभ्या मन्ये ग्रीवाधमन्यौ अपीडयेत् तथा दन्तसम्पीड़नादीनामन्यतममाचरेत्, आर्त्त इति शेषः। दन्तैर्दन्तानां पीडनं दन्तपीडनम् , उत्कासः कास एव ; गण्डाध्मान वायुना कुक्षपूरणं, सुश्रुतेऽप्युक्तं—"कर्म पुरुषस्य वायुना कुक्षं पूरयेत्" इति। तथा नरः परिचारकजनः पृष्ठत इति पृष्ठदेशे स्थित्वा एनमातुरं यन्त्रयेत्। किं कुर्वन् यन्त्रयेदित्याह—वस्त्रं कन्धराया ग्रीवायां परिक्षिप्य तस्य मध्ये स्वकीयवामतर्जनीं न्यस्यारोप्य वस्त्रमावेष्टयन् पीडयेदिति ॥ १ ॥

विध्येदित्यादि ।—वाग्भटस्य । अनाकुञ्चितः कूर्परः कफोणिर्यस्य । किं

पादे तु सुस्थितेऽधस्तात् जानुसन्धेर्निपीड़िते।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि।
द्वितीये कुञ्चिते किञ्चिदारूढ़े हस्तवत्ततः।
बद्ध्वा विध्येच्छिरामित्थमनुक्तेष्वपि कल्पयेत्।
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित्॥
ततो व्रीहिमुखं व्यध्यप्रदेशे न्यस्य पीड़येत्।
अङ्गुष्ठतर्जनीभ्यान्तु तलप्रच्छादितं भिषक्॥ ३॥
वामहस्तेन विन्यस्य कुठारीमितरेण तु।
ताड़येन्मध्यमाङ्गुल्याङ्गुष्ठविष्टब्धमुक्तया॥ ४॥
मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम्।
यवार्द्धमस्थ्नामुपरि शिरां विध्यन् कुठारिकाम्॥ ५॥

---

कृत्वा विध्येदित्याह—सुखोपविष्टस्यातुरस्य अङ्गुष्ठगर्भितं मुष्टिं बद्ध्वा बन्धयित्वा। पुनः किं कृत्वा?—वेध्यप्रदेशादुपरि चतुरङ्गुले यन्त्रपट्टिकां शिरायन्त्रणार्थं पट्टिकां वस्त्रादिपट्टीं बद्ध्वा॥ २॥

पादगतशिराव्यधप्रकारमाह पादे त्वित्यादि।—वाग्भटस्य। सुस्थित इत्यनेन विषमपादन्यासं निरस्यति। किंविशिष्टे पादे?—जानुसन्धेरधस्तात् वैद्यस्य कराभ्यामागुल्फं गुल्फपर्य्यन्तं गाढं निपीडित इत्यर्थः। द्वितीये तु चरणे तस्य सुस्थितपादस्योपरि आरूढे सति। किंविशिष्टे द्वितीये चरणे?—किञ्चित् कुञ्चिते। हस्तवत् ततो बद्ध्वेति। यथा हस्ते यन्त्रादिकं बद्ध्वा शिरां विध्येत् तथा पादेऽपीत्यर्थः। एवमुक्तरीत्या अनुक्तप्रदेशविषयेऽपि यन्त्रं स्वबुद्ध्या कल्पयेदित्यमित्यादि। व्रीहिमुखादिशस्त्रेण यथा शिराव्यधो विधेयस्तदाह तत इत्यादि न्यस्यारोप्य अङ्गुष्ठतर्जनीभ्यां पीडयेदित्यन्वयः। करतलप्रच्छादितमिति पीडा क्रियाविशेषणम्, एतेन रक्तधारा नोर्द्ध्वमुत्तिष्ठति इत्यभिसन्धिः॥ ३॥

कुठारिकया वेधनप्रकारमाह वामहस्तेनेत्यादि।—इतरेण दक्षिणहस्तेन ताड़येदित्याह मध्यमाङ्गुल्येति। अङ्गुष्ठविष्टब्धमुक्तयेति आदौ अङ्गुष्ठे विष्टभ्य मुक्तयेत्यर्थः॥ ४॥

इदानीमुक्तशस्त्रद्वयं यस्मिन् प्रदेशे योज्यं तदाह मांसल इत्यादि।—मांसले

असम्यगस्ने स्रवति विल्वव्योषनिशानतैः।
सागारधूमलवण-तैलैर्दिह्याच्छिरामुखम्॥
सम्यक् प्रवृत्ते कौष्णेन तैलेन लवणेन च॥
अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात स्रावयेत् परम्।
अतिसुतौ हि मृत्युः स्याद्दारुणा वानिलामयाः॥
तत्राभ्यङ्गरसक्षीर रक्तपानानि भेषजम्॥ ६॥
सुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना।
प्रक्षाल्य तैलप्रोताक्तं बन्धनीयं शिरामुखम्।
अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा।
रक्तं त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम्॥
लोध्रप्रियङ्गुपत्तङ्ग-माषयष्ट्याह्वगैरिकैः।
मृत्कपालाञ्जनक्षौम मसीक्षीरित्वगङ्कुरैः॥
विचूर्णयेद्व्रणमुखं पद्मकादि हिमं पिबेत्।
तामेव वा शिरां विध्येद्व्यधात्तस्मादनन्तरम्॥
शिरामुखं वा त्वरितं दहेत्तप्तशलाकया॥ ७॥

प्रदेशे शिरां विध्येदिति योज्यम्। व्रीह्यास्यमिति व्रीहिमुखं शस्त्रम् एकव्रीहि-मात्रक निक्षिपेत् प्रवेशयेत्। अस्थ्नामुपरि शिरां विध्यन् कुठारिकां यवार्धमात्रां निक्षिपेदित्यर्थः॥ ५॥

अयोगे चिकित्सामाह असम्यगित्यादि।—अशुद्धाविति असम्यक् शुद्धौ। प्रस्थादिति। प्रस्थोऽत्र सार्धत्रयोदशपलम्। परमित्यूर्द्धम्। अत्रैव हेतुमाह अति-स्रुताविव्यादि।—तत्रेति रक्तादिस्रुतौ। रस. मांसरसः। प्रक्षाल्येति शिरामुख-मित्यन्वय। तैलप्रोताक्तमिति तैलाप्लुतवस्त्रमित्यर्थ.। स्तम्भनीमिति वक्ष्यमाणाम्। तामेव रचयन् क्रियामाह लोध्रेत्यादि।—पत्तङ्ग रक्तचन्दनम्; अञ्जनं रसाञ्जनम्; क्षौममसी दग्धवस्त्रभस्म; क्षीरिणो वटोदुम्बरादयः, तेषां त्वक् अङ्कुरश्च। पद्म-कादि पद्मकादिगणम्। हिममिति शीतकषायं पिबेदिति। तामिति पूर्वविद्धाम्।

सशेषमप्यसृग्धार्य्यं न चातिस्रुतिमाचरेत् ।
हरेच्छृङ्गादिना शेषं प्रसादमथवा नयेत् ॥
मर्म्महीने यथासन्नप्रदेशे व्यधयेच्छिराम् ॥ ८ ॥
न तूनषोड़शातीत-सप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥
गर्भिणी-सूतिकाजीर्ण-पित्तास्रश्वासकासिनाम् ।
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्म्मसु ॥
नायन्त्रितां शिरां विध्येन्न तिर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥ ९ ॥
नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृग्वह्निर्विशेषेण च रक्षणीयः ।
नरो हिताहारविहारसेवी मासं भवेदाबललाभतो वा ॥१०॥

व्यधात् तस्मादनन्तरमिति पूर्वव्यधसमीपोर्द्ध्वभागे । शिरामुखमिति विद्धशिराव्रणमुखम् ॥ ६ ॥ ७ ॥

दुष्टमपि रक्तं न निःशेषं स्रावयेदित्याह सशेषमपीत्यादि ।—सशेषमिति दुष्टशोणितशेषम् । प्रसादमथवा नयेदिति प्रसादनलेपनादिना । शिरा हि दुष्टा एव वेध्याः, नैत्वदुष्टाः । उक्तं हि—"अदुष्टा न वेध्याः" इति । यत्र प्रदेशे तु वेध्या शिरा न दृश्यते कथं तत्र शिराव्यधः कार्य्य इत्याह मर्म्महीन इत्यादि ।—वाग्भटस्य । अत्र व्यध्यशिराणामदर्शन इति शेषः । अतएवैतस्मात् पूर्वं वाग्भटे यथोक्तानामदर्शन इत्युक्तम् । यथासन्नदेश इति यत्र देशे व्यध्यशिरा न दृश्यते तत्र समीपदेशे या अन्या शिरा या दृश्यते ता एव वेध्या इत्यर्थः । मर्म्महीन इति मर्म्मवर्जिते ॥८॥

येषां शिराव्यधो न कार्य्यस्तानाह न त्वित्यादि ।—वाग्भटस्य । अन्यत्रात्ययिकाद्गदादिति आत्ययिके तु व्याधौ एष्वपि कालेषु शिराव्यध्यैवेत्यर्थः ॥ ९ ॥

रक्तस्रावानन्तरं यद्विधेयं तदाह नात्युष्णेत्यादि ।—अनवस्थितासृगिति प्रचुररक्तम् ॥ १० ॥

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ ११ ॥

इति शिराव्यधाधिकारः ॥

---

## अथ सुस्थाधिकारः ।

### दिनाचारविधिः—

ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् सुस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्त्य कृतशौचविधिस्ततः ॥
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥
नाद्यादजीर्णवमथु-श्वासकासज्वरार्दितः ।
तृष्णास्यपाकहृन्नेत्र-शिरःकर्णामयी च तत् ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ।
ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥ १ ॥

---

इदानीं शोणितादर्शनेऽपि विशुद्धरक्तज्ञानार्थं लक्षणमाह प्रसन्नेत्यादि ।—वेगः पुरीषादीनाम् ॥ ११ ॥

इति शिराव्यधाधिकारविवृतिः ।

---

इदानीमातुरहितचिकित्सामभिधाय सुस्थवृत्तमाह ब्राह्म इत्यादि ।—ब्राह्मो मुहूर्त्तो रात्रेः पश्चिमयामस्य शेषनाडिकाद्वयम् । शरीरचिन्ता मूत्रपुरीषोत्सर्गादिकरूपाम् । तत इति शौचविधेरनन्तरं दन्तपवनं भक्षयेदिति । दन्ताः पूयन्ते अनेनेति दन्तपवनं दन्तकाष्ठम् भुक्त्वा चेति भोजनानन्तरमपीत्यर्थः । दन्तकाष्ठ यं विशेषं तदाह नाद्यादिति । दन्तपवनमित्यन्वयः । सुवीरा नाम नदी तद्भव-

ताम्बूलं क्षतपित्तास्र-रूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्त्तानामपथ्यञ्चापि शोषिणाम् ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥
वर्ज्योऽभ्यङ्गः कफग्रस्त-कृतसंशुद्ध्यजीर्णिभिः ॥ २ ॥
शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धनी ।
देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥ ३ ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च तां त्यजेत् ।
उद्वर्त्तनं तथा कार्य्यं ततः स्नानं समाचरेत् ॥
उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव तूत्तमाङ्गस्य बलहृत् केशचक्षुषोः ॥ ४ ॥
स्नानमर्दितनेत्रास्य-कर्णरोगातिसारिषु ।

---

मञ्जन सौवीराञ्जनम् । तल्लक्षण यथा—"वल्मीकशिखराकार भङ्गे नीलोत्पल द्युति । सौवीराञ्जनमित्युक्तं आयुर्वेदार्थचन्द्रिका." इति । नित्य प्रत्यहम् । पञ्चरात्राष्टरात्रग्रहणमदूरान्तरकाले नियमदर्शनार्थम्, तत्र दीर्घकालमपेक्ष्य मध्ये मध्ये कर्त्तव्य स्रावणाञ्जनमिति । रसाञ्जनमिति दार्वीक्वाथसमुद्भव द्रव्य. ॥ १ ॥

• निषिद्धताम्बूलानाह ताम्बूलमित्यादि ।—तमित्यभ्यङ्गम् ॥ २ ॥

शरीरेत्यादौ ।—देहस्य तेन मल्लव्यायाम मनश्चिन्तनादिक निरस्यति । संख्याता इति लक्षिता या च चेष्टाभिमता, एतेन भारवहनाद्या अनिष्टादिकार्य्यवशात् क्रिय माणा चेष्टा निरस्यति । मात्रया तां समाचरेदिति मात्रा चार्द्धशक्ति । यदाह वाग्भटः—"अर्द्धशक्त्या निषेव्यस्तु बलिभि. स्निग्धभोजिभिः" इति । अर्द्धशक्तिलक्षण यथा—"कक्षे ललाटे ग्रीवाया स्कन्धे नासाङ्गसन्धिषु । स्वेदः सञ्जायते यत्र बलार्द्धं त विनिर्द्दिशेत् ॥ ३ ॥

निषिद्धव्यायामानाह वातेत्यादि ।—तेनैवेति, उष्णाम्बुना उत्तमाङ्गस्य मस्तकस्य सेकः केशचक्षुषोर्बलं हरतीति बलहृत् ॥ ४ ॥

आज्ञानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥ ५ ॥
नीचरोमनखश्मश्रु-निर्मलाङ्घ्रिमलायनः।
स्नानशीलः ससुरभिः सुवेशो निर्मलाम्बरः ॥
धारयेत् सततं रत्नं सिद्धमन्त्रमहौषधीः।
सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥
निशि चात्ययिके कार्य्ये दण्डी मौनी सहायवान्।
जीर्णेऽहितं मितञ्चाद्यान्न वेगानीरयेद्बलात् ॥
न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम्।
दशधा पापकर्माणि कायवाङ्मानसैस्त्यजेत् ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम्।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥
आत्मनः प्रतिकूलानि परेषां न समाचरेत्।
नक्तन्दिनानि मे यान्ति कथम्भूतस्य सम्प्रति।
दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ॥ ६ ॥
इति दिनाचारविधिः ॥

---

निषिद्धस्नानानाह स्नानमित्यादि।—अङ्घ्री पादौ, मलायनानि गुदोपस्थानि, नि निर्मलानि यस्य। निर्मलाम्बर इत्यत्र अनुल्बणोज्ज्वल इति वाग्भटे पठ्यते, उल्बणोऽनुद्धत इत्यर्थः। युगं हस्तचतुष्टयम्। आत्ययिक इत्यवश्यकर्त्तव्ये। गानिति मूत्रपुरीषवेगान्, ईरयेदित्युदीरयेत्। वेगित इति सञ्जातमूत्रपुरीषादि-। दशधा पापकर्माणीति। उक्तञ्च—"अदत्तानामुपादानं हिंसा चैवाविधा-। परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतञ्चैव पैशुन्य-पि सर्वशः। असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुष्टयम् ॥ परद्रव्येष्वभिध्यानं सानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्" इति। अवि-दीति न पूर्वापरविरुद्धम्, पेशलं मधुरम्, काल इति यथोचितसमये। आत्मन दौ।—परेषां न समाचरेदिति परेषां प्रतिकूलानि अनिष्टानि न समाचरेत्। न चाचरेदित्याह आत्मन इत्यादि। आत्मनः प्राणभृतामेव आत्मसम्बन्धा-

ऋतुचर्य्या—

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ।
शिशिरश्च वसन्तश्च ग्रीष्म-वर्षा-शरद्धिमाः ॥
बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।
सेवेतातो हिमे स्निग्धस्वाद्वम्ललवणान् रसान् ॥
गोधूमपिष्टमाषेक्षु-क्षीरोत्थविकृतीः सुराः ।
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम् ।
युक्त्यार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा ॥ ७ ॥
प्रावाराजिनकौषेय-प्रवेणीरौरवास्तृतम् ।

---

दित्यर्थः। किंवा चात्मनो यानि प्रतिकूलानि अनिष्टानि तानि परेषामपि नाचरेदिति। नक्तमित्यादि।—कथम्भूतस्य कीदृशस्य मम पापं कुर्वतः पुण्यं कुर्वतो वा हय परिहरतो वा सम्प्रति नक्तं दिनानि यान्ति एवं नित्यं सन्निहितस्मृतिर्यः पुरुषो भवति स दुःखभाक् न स्यात, यस्मादेवं सर्वदा स्मरन् पुरुषो दुःखहेतुतया दुष्कृतं त्यजति, सुखहेतुतया च सुकृतमन्विच्छति इत्यर्थः. ॥ ५ ॥ ६ ॥

इति दिनाचारविधि विवृतिः ।

पारिशेष्यादृतुचर्य्यारूपं सुस्थहितमाह मासैरित्यादि।—षडृतव इति शिशिर वसन्त ग्रीष्म-वर्षा-शरद्धेमन्ता इत्यर्थः। यद्यपि शिशिरादिऋतुत्रयमुत्तरायणत्वेन प्रशस्तत्वादर्थं चोद्दिष्टं तथापि बलवृद्धिप्रकर्षत्वेन प्राशस्त्यात् प्रथमं हेमन्तविधिमाह बलिन इत्यादि।—बलिन इत्यनेन प्राणिबलस्याग्निबलहेतुत्वं दर्शयति। उक्तं हि पालकाप्ये—'अभ्याहतादभिप्रायात् शीतः शीतेर्बलं बलात्। अग्निरग्नेश्च धातूनां नाशं नाशयतो रुजाम्'' इति। किंवा बलिन इत्युपचयवतः। शीतसंरोधादिति कुम्भकारपचनपट्टलपन्यायात् शीतेन बहिरनिर्गच्छच्छरीरोष्मणो रोधात्। रसानिति औदकानूपमांसरसान्। कीदृशान्?—स्वाद्वम्ललवणद्रव्यसंस्कारात् स्वाद्वम्ललवणान्। उक्तं हि चरके—"तस्मात् तुषारसमये स्वाद्वम्ललवणान् रसान्। औदकानूपमांसानां मेध्यानामुपयोजयेत्" इति। माषस्थाने मांसेति पाठो बहुपुस्तके नास्ति, टीकायाञ्च न व्याख्यात इति ॥ ८ ॥

उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥
अङ्गारतापसन्तप्त-गर्भभूवेश्मनि प्रियाम्।
पीवरोरुस्तनश्रोणीमालिङ्ग्यागुरुचर्चिताम् ॥ ८ ॥
अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः।
तदा हि शीतमधिकं रौक्ष्यञ्चादानकालजम् ॥ ९ ॥
कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः।
हत्वाग्निं कुरुते रोगांस्ततस्तत्र प्रयोजयेत् ॥
तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम्।
व्यायामोद्वर्त्तनं धूमं शौचकार्य्ये सुखोदकम् ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः।
पुराणयवगोधूम-क्षौद्रजाङ्गलशूल्यभुक् ॥
प्रपिबेदासवारिष्ट-सीधुमाध्वीकमाधवान्।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥
गुरूष्णस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ १० ॥

---

प्रावारेत्यादि।—वाग्भटस्य। प्रावारो गुरुप्रावरणं कम्बलादि। अन्ये तु प्रावार कार्पासलोमवदुत्तरीयम्। अजिन सुखस्पर्शलोमशं चर्म। कौषेयं क्रिमिकोषोद्भववस्त्रम्। प्रवेणी गोधी, अन्ये तु प्रवेणी सूचीवारणाख्यो वस्त्रविशेष इत्याहुः। रौरवो वस्त्रभेद इति केचित्, अन्ये तु कार्पासवस्त्रमेवेत्याहुः; चरके रौरवस्थाने कुथकेति पठ्यते, कुथकस्तु चित्रकम्बलः। उष्णस्वभावैर्लघुभिरिति नेपालकम्बल-प्रचुरतूलकपट्टादिभिः। किं कृत्वा शयनं भजेदित्याह अङ्गारेत्यादि।—अङ्गारतापेन सन्तप्त यत् गर्भगृहं गृहकोष्ठकं तथा भूगृहञ्च। चरकेऽप्युक्तं—"सेवेत भूगृह-कोष्णमुष्णगर्भगृहं तथा" इति ॥ ८ ॥

उक्तविधिं शिशिरेऽतिदिशति अयमेवेत्यादि। अत्रैव हेतुमाह तदेत्यादि ॥ ९ ॥

वसन्तविधिमाह कफ इत्यादि।—शूल्य भर्जित शूलपाचितमित्यर्थः। आसवारिष्ट सुराकृतसन्धानम्; सीधु गुडासवः। माध्वीक मधुकृत मद्यम्; अत्रचस्तु मार्द्वीकेति पठित्वा मृद्वीकारसोद्भवं मद्यमिति व्याचष्टे। माधवो मधुरीकृत आसवः।

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम्॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम्।
मध्याह्ने चन्दनार्द्राङ्गः स्वप्याद्धारागृहे निशि॥
निशाकरकराकीर्णे प्रवाते सौधमस्तके।
निवृत्तकामो व्यजनैः पाणिस्पर्शैः सचन्दनैः।
सेव्यमानो भजेतास्यां मुक्तामणिविभूषितः॥
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत्॥ ११॥
भूवाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥
भजेत् साधारणं सर्वमुष्मणस्तेजनञ्च यत्।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं कृतान् रसान्॥

---

अनुभवेदित्यनेन श्लेष्मक्षयार्थं स्त्रीकं मैथुनमनुजानाति, वसन्तस्यादानमध्यत्वादिति भावः। गुर्वित्यादौ—अम्लस्थाने उष्णं त्यपपाठ.॥ १०॥

ग्रीष्मविधिमाह मयूखैरित्यादि।—मयूखैरिति किरणैः स्नेहं पेपीयते अत्यर्थं पिबति। ग्रीष्मेऽम्लत्वादुष्णत्वाच्च मद्यं न पेयमित्युत्सर्गः। यद्यपि सात्म्यानान्त्यागेन सात्म्यत्यागजा रोगा भवन्ति अत किं प्रतिविधेयमित्याह अल्पं वा सुबहूदकं वा पेयमिति। मध्याह्न इत्यादि।—धारागृह इति छेदः। निशीति परेण सम्बध्यते। वर्जनीयमाह लवणेत्यादि॥ ११॥

वर्षाविधिमाह भूवाष्पानित्यादि। भूवाष्पं प्रभावादेव दोषत्रयकोपनम्। अन्ये तु पित्तस्य इत्याहुः। मेघनिष्यन्दः शैत्याद्वातकफजनकः; अम्लपाकता च स्वभावतः पित्तकरी। अग्निबले क्षीण इत्यनेन अग्निमान्द्यमपि त्रिदोषकोपनमिति दर्शयति। अग्निमान्द्यम् अपाकाम्लपाकाभ्यां कफपित्तकारिधातुपोषकरसानुत्पादनात् धातुक्षयेण वातकारि। एतेन वर्षासु अग्निमान्द्येन वातादिकोपः; वातादि-

आङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम्।
दिव्यं कौपं शृतं वाम्भो भोजनन्त्वतिदुर्दिने ॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥ १२ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति।
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम्।
तिक्तं स्वादु कषायञ्च क्षुधितोऽन्नं भजेल्लघु।
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः।
शरद्यं तानि पथ्यानि प्रदोषे चेन्दुरश्मयः।
शारदानि च माल्यानि वासांसि विमलानि च ॥
तुषारक्षारसौहित्य-दधितैलरसातपान्।
तीक्ष्णमद्यदिवास्वप्न-पुरोवातातपांस्त्यजेत् ॥
शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत्।

---

कोपेन च वह्निमान्द्यं दर्शितम्। उक्तं हि वाग्भटे—"भूवाष्पेणाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेषु" इत्योन्योन्यं दुष्यति। पवनाढ्य इति पवनप्रधानाः। साधारणमिति। त्रिदोषघ्नमग्निसन्दीपनञ्च। आढ्यापूपं निरूहणम्; कृतान् रसानिति संस्कृतमांसरसान्; मध्वरिष्टं मधुकृतमरिष्टं, चिरन्तनं पुरातनम्। दिव्यमित्याकाशजलम् भोजनमित्यादि परेण सम्बध्यते। संशुष्कमिति नातिद्रवम्। क्षौद्रवदिति मधुयुक्तम्। एतच्च वार्षिकदोषक्रमे शोधनार्थं ज्ञेयम्। वर्जनीयमाह नदीत्यादि।—उदकमन्थः उदकप्रधानो मन्थः; अहःस्वप्नः दिवास्वप्नः ॥ १२ ॥

शरद्विधिमाह वर्षेत्यादि।—उचितं समवेतम्, उच समवाये इत्यस्य रूपम्। समवायोऽत्र सततात्यासरूपः सम्बन्धः, तेन शीतसमवेताङ्गानामित्यर्थः। सहसा अक्रमेण। आचितमिति सञ्चितं वर्षासु। प्राय इति वचनात् कदाचित् वर्षासु शीतमधुरादिसेवया पित्तचयभयात् शरदि कोपो न भवत्येवेति दर्शयति। तिक्तं

स्वादून् निदाघे शरदि स्वादुतिक्तकषायकान्।
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः॥
अन्नपानं समासेन विपरीतमतोऽन्यथा।
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ॥ १३॥
ऋतोराद्यन्तसप्ताहावृतुसन्धिरिति स्मृतः।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्॥
इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते॥
देशानामामयानाञ्च विपरीतं गुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाद्यमेव च॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत्॥

---

घृतं पञ्चतिक्तघृतादिकम्। क्वथितं पय इति शृतं दुग्धम्। प्रदोषे चेति चकारोऽवधारणे प्रदोष एवेत्यर्थः। वर्जनीयमाह तुषारेत्यादि। ऋतुभेदे रसानाह शीत इत्यादि।—वाग्भटस्य। शीत इति हिमशिशिरयोः। आद्यान् त्रीनिति स्वादुलवणरसान्। अन्त्यानिति कटुतिक्तकषायानिति। शरद्वसन्तयोरित्यादौ भजेदित्यनेन पूर्वोक्तेनान्वयः। अतः अन्यथेति। हेमन्तशिशिरयोस्तु विपरीतमिति स्निग्धमुष्णानुपानं भोजयेदित्यर्थः। नित्यमिति सर्वदा सर्वेषां षण्णां रसानामभ्यासः कार्य्यः। एवञ्च सति शीते वर्षासु चाद्यांस्त्रीनित्यादि यदुक्तं तद्विरुध्यत इत्यत आह स्वस्वाधिक्यमित्यादि।—यस्मिन् यस्मिन् ऋतौ यो रसः सेव्यत्वेनोक्तः तस्याधिक्यमात्रे तद्वचनस्य तात्पर्य्यमिति भावः॥ १३॥

ऋतोरित्यादि।—पूर्वऋतोरन्त्यमासस्यान्तिमसप्ताहं तथा परऋतोराद्यमासस्य प्रथमसप्ताहमिति सप्ताहद्वयं ऋतुसन्धिरित्यर्थः। क्रमादिति न सहसा त्यागशीलनं विधेयः। अत्र हेतुर्वाग्भटेनैवोक्तो यथा—"असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्" इति। सात्म्यत्यागादसात्म्यमेव नाचरेदित्यर्थः। उपसंहरति इत्युक्तमित्यादि। ऋतुसात्म्यप्रसङ्गेनाभ्याससात्म्यमप्याह उपशेते इत्यादि।—उपशेते सुखयति अपथ्यमपि विकारं न जनयति। कुत इत्याह औचित्यादित्यभ्या

नगरी नगरस्येव रथस्येव रथी यथा।
स्वशरीरस्य मेधावी कृत्ये ष्ववहितो भवेत् ॥ १४ ॥
इत्यृतुचर्य्या सुस्थाधिकारश्च ॥

गौड़ाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात्।
भानोरनु प्रथितलोध्रवलीकुलीनः
श्रीचक्रपाणिरिह कर्त्तृपदाधिकारी ॥ १५ ॥

---

सात्। अपथ्यमपि हि निरन्तराभ्यासात् विषमिवाशीविषस्य नोपघातकं भवतीति भावः। ओकोऽभ्यासः, तेन सात्म्यमोकसात्म्यम्। देशसात्म्यं रोगसात्म्यञ्च दर्शयति देशानामित्यादि।—देशानामनूपादीनां गुणैः स्निग्धगौरवादिभिः सह विपरीतगुणं स्निग्धगौरवविपरीतरौक्ष्यलाघवयुक्तं मुद्गजाङ्गलमांसमध्वादि। आद्यमदनीयमद्यम्, चेष्टितञ्च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः। एवमामयविपरीतञ्च शीतविकारे उष्णमित्यादि रोगसात्म्यमित्यर्थः। गुणशब्देनात्र विपरीतप्रभावाणामपि ग्रहणम्, ततश्च प्रभाववैपरीत्यात् तद्विपर्य्ययार्थकारिणाञ्च ग्रहणम्; आमयशब्देन चामयहेतुरपि ग्रहीतव्यः, तेन हेतुविपरीतस्यापि सात्म्यस्य ग्रहणम्। इदानीं ग्रन्थविस्तरभयात् संक्षेपेण स्वास्थ्यपरिपालनोपायमाह तत्रेत्यादि।—स्वास्थ्यमिह उद्रेजकधातुवैषम्यविरहितधातुसाम्यम्। तत्र स्वास्थ्यमुभयं परिपाल्यते। विशुद्धाहाराचाराभ्यां सदा क्षीयमाणशरीरपोषणेन, प्रत्यवायहेतुप्रतिहारेण च; यथा दीपपरिपालनं स्नेहवर्त्तिदानात् पोषणेन क्रियते, तथा निर्वापकहेतुवातादिपरिहारेण च। तत्र श्लोकपूर्वार्द्धेन स्वास्थ्यपोषकहेतुरुक्तः; उत्तरार्द्धेन तु स्वास्थ्यविघातकहेतुपरिहारोऽभिधेय इति न पौनरुक्त्यम्। अनुत्पत्तिरिह उत्पादकसामग्रीविघटनम्। इदानीमुक्तस्यानुक्तस्य सुस्थविधेरवनेन कर्त्तव्यतामाह नगरीत्यादि।—नगरी रथी चेति नगररथयोरधिकृतः कृत्येषूक्तेष्वनुक्तेषु च ॥ १४ ॥

इत्यृतुचर्य्या सुस्थाधिकारश्च ॥

इदानीं ग्रन्थपरिसमाप्तौ पित्रादीनामुत्कीर्त्तनपूर्वकं स्वनाम निवेशयन्नाह गौड़ाधिनाथेत्यादि।—गौड़ाधिनाथो नयपालदेवः, तस्य रसवती महानसम्,

## परिशिष्टम् ।

### कफाश्रितवायोर्लक्षणम् ।

प्राक्सञ्चितं यस्य बलाशजालमन्वेति भूयः प्रबलः स
तेनाहतस्तं प्रविधाय शुष्कं कुर्य्यात् प्रवृद्धोऽथ विव
त्वक्स्फोटनं पाणिपदोक्षणानां दाहोऽतिशोषो वदन
हृत्कम्पदौर्बल्यमतिश्रमत्वं भ्रान्तिर्मृषोद्भावनजल्पनञ्च
वैस्वर्य्यमालस्यमथाविपाको क्षुदासचिन्ता रुचिगात्र
निद्राक्षयं मूत्रपुरीषबद्धं तमःप्रवेशो गमनेऽप्यशक्तिः
श्लेष्मान्वितोऽयं कथितः समीरणः करोति नानागदवृन्द

### सूतिकाकालः ।

यावन्न दृश्यते पुष्पं यावद् वा क्षीरपोऽर्भकः ।
सूतान् प्रजायिनीं विद्यान् मासा नष्टा दशैव तु
तस्मिन् यो जायते व्याधिः सूतिकागदः स स्मृतः

..............

सम्पूर्णः ।